एव। अतश्च संशयार्थेऽपि अथशब्दः प्रयुज्यते।

विकल्पे—'ऋतावुपेयात्; (ऋतौ व्यवेयात्) अथानृतौ पर्ववर्जम्।'

पक्षान्तरेऽपि दृश्यते। यथा—'अथ चेत् त्वमिमं धर्म्यं संग्रामं न करिष्यसि।' (गीता 2-33) इत्यादिषु।

(18)

"अथकिम् स्वीकारे" (नि) [अ]

निपातसमुदायोऽयम्।

देवदत्त! गच्छसि? अथकिम्।

(19)

"अथकिमु कतरत् इत्यर्थे" (नि)

अथकिमु श्रेयः, भोगो वा मोक्षो वा! [द्रष्टव्यः।

अथ+किम्+उ इति निपातत्रयसमुदायोऽयम्। चादिषु (1-4-57)

(20)

"अथच किञ्चेत्यर्थे" (नि)

(21)

"अथतु किन्त्वर्थे" (नि)

(22)

"अथवा पक्षान्तरे" (नि)

'अथवा कृतवाग्द्वारे—' (रघुवंशे 1-4)

अयमपि निपातसमुदाय एव। चादिषु (1-4-57) पाठादस्याव्यय-त्वम्। 'अथ' इत्यव्ययस्य पक्षान्तरमप्यर्थः। तस्यैव वाकारेण समुच्चित्य

---

[अ] स्वीकारोऽत्र प्रष्टुराशयानुरोधेनाभ्युपगमः, न तु स्वीकरणरूपः। अभ्युपगमोऽपि न वाच्यवृत्त्याऽनेन निपातेन लभ्यः। किं तु द्योतकत्वेन लभ्यते। अत एव निपातानां वाचकत्वं द्योतकत्वं वा इत्यत्र द्योतकत्वमेव बहुलप्रयोगानुसारेण शाब्दिकैरङ्गीक्रियते इत्यपि ज्ञेयम्।

नियमेन प्रयोगे पक्षान्तर एव वृत्तिः। पूर्वोक्तदिशाऽस्य निपातसमुदायस्यापि पक्षान्तरद्योतकत्वम्—इत्यादिकं यथायथमूह्यम्। **अथवापि** इत्यपि निपातसमुदायः पक्षान्तरार्थकथादिषु (1-4-57) द्रष्टव्यः।

(23)

**"अथो प्रकृत्यधिक्रियास्थापनान्वादेशेषु" (च)** [अ]

'**अथाथो** संशये स्याताम् अधिकारे च मङ्गले।
विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये॥' इति **मेदिनी**।

प्रकृतौ—"**अथो** अन्नेनैव जीवन्ति" (तै. आ. 8-2-1)

[1]अधिक्रियायाम्—'**अथो** परोक्षं कुर्यात्।'

स्थापने—'**अथो** वर्णानां संस्कारः।' अन्वादेशे—इमं वेदमध्यापय। **अथो** एनं शिक्षामध्यापय। समुच्चये—'स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्। विविधानि च शिल्पानि समादेयानि सर्वतः॥' (मनुस्मृतिः 2-240)।

मङ्गले—'**अथो** अरिष्टनातिमिः।' (ऋ. वे. 10-1?7-4?)। विकल्पे—'नदीषु स्नायात्, **अथो** देवखातेषु'। अनन्तरे—'**अथो** सर्वं श्वापदं मक्षिका तृप्यतु क्रिमिः।' (अथर्व. 11-9-10)। प्रश्ने—**अथो** कथितं नु ?। कार्त्स्न्ये—"**अथो** वनस्पतीनाम्।' (अथर्व-4-4-5)।

---

[अ] अस्याव्ययस्य वैदिकप्रयोग एवोपलभ्यते। कुत्रचिदेवार्थेषु लौकिकप्रयोगः पूर्वैः निदर्शनतया प्रदर्शितः। तथापि, अमरदण्डनाथमेदिनीकारप्रभृतिभिः लौकिकाव्ययेषु परिगणनादस्माभिश्च लौकिकवैदिकोभयविधाव्ययानामपि सङ्कलनादत्रोपात्तोऽयम्। एवमेव उत्तरत्रापि केवलवैदिकाव्ययेषु गतिरित्यपि ज्ञेयम्।

1. तिलकस्तु 'अथो खल्वाहुः।' इत्यादिषु समुच्चयेऽपि अधिक्रियायाः सत्त्वमङ्गीकृत्य समुच्चयाधिक्रिययोरैकार्थ्यमाह। अस्माभिस्तु—आरम्भानन्तर्ययोरिव ईषद्भेदमपि भेदकत्वेनाभ्युपगम्य द्वयोः पृथक् प्रयोगः प्रदर्शितः।

आरम्भे—'अथो आपो मे दीक्षां नेत प्रमुष्णान्'—(मैत्रायणीयसंहिता—3-6-9)।

(24)

**"अद् आकस्मिकार्थे" (स्व. च.)**

[1]अद्भुतम्।

(25)

**"अद्धा सत्ये" (स्व. च. सा.)**

'स्फुटार्थावधारणयोः। सत्यतिशययोरित्येके।' इति **गणरत्नमहोदधिः**। साक्षात्कारेऽपि **वाचस्पत्ये** उपात्तः।

सत्ये—'अद्धा श्रियं पालितसङ्गराय—'

स्फुटार्थे—'आराधितोऽद्धा मनुरप्सरोभिः।' (शिशुपालवधे 3-42)

अवधारणे—'अद्धा निर्णीयतेऽनश्वरधिकरणी तत्त्वचिन्तोपयुक्ता।।' (अधिकरणसारावलिः 25)

साक्षात्कारे—[2]'अद्धाकृत्येव त्रियता तरसि स्वलक्ष्मीम्।।' (गण. र. म.)

[3]सत्याम्—'तदद्धातय इद् विदुः।।' (ऋ. वे. 10-85-16)

---

1. 'अदि भुवो डुतच्' (पञ्चपादुणादिसूत्रम् 5-1) इत्यत्र प्रौढमनोरमायाम् 'अद् इत्यव्ययमाकस्मिकार्थे।' इत्युक्तम्। तदनुसारेणास्माभिरेतदव्ययं चादीनां (1-4-57) स्वरादीनां (1-1-37) च आकृतिगणत्वादुल्लिखितमिति ज्ञेयम्।
2. 'साक्षात्प्रभृतीनि च' (1-4-74) इत्यत्र गणे अद्धा इति पठ्यते, तस्य कृञो योगे गतिसंज्ञा। गतिसंज्ञकानां निपातत्वेनाव्ययत्वम्। 'कुगतिप्रादयः' ( 2-2-18) इति गतिसमासः। 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' (वा. 1-4-74) इति वचनात् अभूततद्भावरूपे च्व्यर्थे साक्षात्प्रभृतिषु पठितानां वृत्तिः। एवं च, पूर्वं अनद्धा कृतं सत् अधुना अद्धाकृतमित्यस्यार्थो बोध्यः।
3. 'अद्धा' इत्यस्मात् छन्दसि बाहुलकात् तिप्रत्यये रूपमेवम्। अद्धातिः—अतिशयेन मेधावी इत्यर्थः।

अतिशये—'यस्य स्याद्द्धा न विचिकित्साऽस्ति—' (छा. उ. 3-14-4)।

(26)

"अद्य अस्मिन्नहनि" (त.)

"[1]अद्यप्रभृत्यवनताङ्गि—' (कुमारसम्भवे 5-86)

(27)

अध (अधा) आनन्तर्ये" (नि.)

'[2]अधा निविद्ध उत्तरे—' (ऋ. 4-18-9)

अध इत्यर्थोऽपि, अव्ययस्यास्यास्तीति ज्ञायते। तद्यथा—

'अध त्वा विश्वे पुर इन्द्र देवाः—' (ऋ. 6-17-8) इत्यत्र सायणाचार्यैः 'अध+अधुना, अस्मिन् काले।' इति विवरणात्।

(28)

"अधरतः अधोभागार्थे" (त. नि.)

---

1. 'सद्यः परुत् परार्यैषमः परेद्यव्यद्य—' (5-3-22) इत्यत्र 'इदमो ऽश्भावो द्यश्च' (वा. 5-3-22) इत्यनेन वार्तिकेन 'इदम्' शब्दस्य सप्तम्यां प्रकृतेरश्भावः द्यप्रत्ययश्च निपात्यते। अस्मिन्नहनि इत्यर्थः। 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यस्याव्ययत्वम्। सप्तम्यर्थस्याधारस्य 'अद्यत्वे—' (महाभाष्ये पस्पशाह्निके 1-1-1) इत्यादिष्वपि वृत्तौ बोधकत्वं ज्ञेयम्। समासान्तरघटकत्वमपि प्रकृत-भाष्यप्रयोगादेवेत्येतदपि ज्ञेयम्।

2. 'सुपां सुलुक्—' (7-1-39) इत्यादिना अध इत्यस्य वर्णव्यत्ययः धकारः इति वाचस्पत्ये प्रतिपादितम्। वस्तुतस्तु 'अध' इतिवत् 'अध' इत्यपि स्वतन्त्रमव्ययमिति भाति। अत्र 'निपातस्य च' (6-3-136) इति दीर्घः।

'अधरस्तादधरतः—' (श्लो. 5-92) इति **हलायुधः**। अधर-शब्दात् प्रथमा-पञ्चमी-सप्तम्यर्थेषु आधादेः (वा. 5-4-44) आकृतिगणत्वेन सार्वविभक्तिकस्तसिः। 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययत्वम्।

(29)

**"अधरस्तात् अधरत इत्यर्थे"** (त. नि.)

[1]"**अधरस्तात्** अधरतः—' (श्लो. 5-92) इति **हलायुधः**।

(30)

**"अधरात् दक्षिणत इत्यर्थे"** (त. नि.)

'पश्चादोत्तरा[2]**दधराद्** आ पुरस्तात्।' (ऋ. 6-19-9)

(31)

**"अधरात्तात् अधरत इत्यर्थे"** (त. नि.)

'सवितोत्तरात्तात् सविता[3]**ऽधरात्तात्**।' (ऋ. 10-36-14)

---

1. अधरशब्दस्य 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (5-3-27) इत्यस्तातिप्रत्ययः। तस्य च 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययत्वम्। 'अस्ताति च' (5-3-40) इत्यनेनात्र यद्यपि अधरशब्दस्य अधादेशः प्राप्तः; तथापि पृषोदरादित्वात् (6-3-109) अधादेशो नेति ज्ञेयम्। अधरस्मात् इत्यव्ययं किञ्चित् शब्दकल्पद्रुमे उपात्तम्। तदानीं विभक्तिप्रतिरूपकमव्ययं तदिति बोध्यम्।

2. 'उत्तराधरदक्षिणादातिः' (5-3-34) इति प्रथमापञ्चमीसप्तमीभ्यो ऽधरशब्दात् आतिप्रत्ययः। 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययत्वम्। अधरशब्दस्याधोभागार्थकत्वेऽपि वैदिके प्रयोगे दृष्टानुविध्याश्रयणेन दक्षिणदिगर्थकत्वम्। अत्र मन्त्रेऽत एव सायणाचार्यैः 'अधरात्=दक्षिणात्।' इति व्याख्या कृता।

3. अधरशब्दात् प्रथमापञ्चमीसप्तम्यर्थेषु अस्तातिप्रत्यये, पृषोदरादित्वात् (6-3-109) प्रत्ययस्थसकारस्य लोपे, पृषोदरादित्वादेव प्रकृतेरधादेशाभावे च रूपमेवम्।

(32)

**"अधरेण अधरस्मिन् देशे दिशि च"** (त. नि.)

[1]अधरेण कमण्डलुं कटोऽस्ति ।

(33)

**"अधरेद्युः अधरस्मिन् अहनि"** (त. नि.)

[2]"अधरेद्युर्गमिष्यति ।"

(34)

**"अधस् (:) अधोभागार्थे"** (त. नि.)

'स्यादधस्तादधोऽधरे ।' (श्लो. 5-92) इति **हलायुधः** । 'पत[3]त्यधो, धाम विसारि सर्वतः—' (शिशुपालवधे 1-2)

(35)

**"अधस्तात् अधरे इत्यर्थे"** (त. नि.)

'स [4]एवाधस्तात्........अहमेवाधस्तात् ।' (छा. उ. 7-25-1)

---

1. अधरशब्दात् 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (5-3-35) इत्येनब् प्रत्ययः । तस्य चासर्वविभक्तितद्धितप्रत्ययत्वात् अव्ययत्वम् । कमण्डलुं इत्यत्र 'एनपा द्वितीया' (2-3-31) इति द्वितीया ।
2. अधरे—परे दिवसे इत्यस्मिन् अर्थे अधरशब्दादेद्युसुच् प्रत्ययः । 'सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरितरेद्युरन्यतरेद्युरपरेद्युरधरेद्युः—' (5-3-22) इत्यादिना निपातितः । असर्वविभक्तितद्धितान्तत्वादस्याव्ययत्वम् । अधिकरणशक्तिप्रधानोऽयं शब्दः ।
3. 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (5-3-39) इत्यनेनाधरशब्दस्य प्रथमापञ्चमीसप्तम्यर्थेषु असिप्रत्ययः, प्रकृतेः (अधरशब्दस्य) अध् इत्यादेशश्च । अयमपि असर्वविभक्तितद्धितान्त इत्यस्याप्यव्ययत्वम् । प्रथमार्थे-'अधो रम्यम् ।' पञ्चम्यर्थे 'अधो वृक्षात् पतति' । सप्तम्यर्थे— 'अधो गृहे शेते' । अयमपि शब्दः प्रायः अधिकरणशक्तिप्रधानः ।
4. 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (5-3-27) इत्यधरशब्दादस्तातिप्रत्ययः । स चासर्वविभक्तितद्धित इति तदन्तस्याव्ययत्वम् । 'अस्ताति च' (5-3-40) इत्यनेन अधरशब्दस्य अस्तातिप्रत्यये परत अध् इत्यादेशः ।

(36)

"अधि स्वाम्याधिक्यनिन्दाऽभिचारे स्मृतिपाठयोः ।
पाकारम्भे प्रहसने प्रेरणोपरिभावयोः ॥
स्वीकारे विनियोगे च लाभे [1]सन्धानसम्मुखे ।
ज्ञानप्रस्तावयोः—॥" (उ. ग. क. नि.) [अ]

स्वाम्ये—**अधिपः, अधिराट्**। आधिक्ये—**अध्याहारः, अधिमासः**। निन्दायाम्—**अधिक्षेपः**। अभिचारे—**अधिचरति**। [2]स्मृतौ—**मातुरध्येति**। पाठे—**अधीते**। **अध्यायः**। पाकारम्भे—**अधिश्रयणम्**। प्रहसने—**तमधिचक्रे**। (तमभिबभूवेत्यर्थः।) प्रेरणे—**अध्येषणा**। [3]उपरिभावे—**अधिशेते**। [4]**अधीवासः**। **अधिकारः**। स्वीकारे—**अध्यवसायः**। विनियोगे—**अधीष्टे**। लाभे—'यत्तं **समधियच्छन्ति**।' **अधिकम्**। सन्धाने—**अधिसृजति** शरान्।

---

1. 'सन्तान—' इति निपाताव्ययोपसर्गवृत्तौ परिदृश्यमानः पाठोऽपपाठः। उदाहरणे शरादीनां सन्धानार्थस्यैव विवक्षितत्वात्।
2. अत्रोदाहरणे इक् धातोः स्मरणार्थत्वमधिः द्योतयति।
3. उपरिभावो द्वेधा—उच्चनीचभावः, ऊर्ध्वदेशभावश्चेति। तत्राद्ये—अधिकारः, इति, अन्त्ये—अधिशेते इति चोदाहरणे।
4. अधि=उपरि सर्वतस्संछाद्यतेऽनेनेति अधीवासः=महाकम्बुकः। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इत्युपसर्गान्त्यस्येकारस्य दीर्घः। 'अधीवासं परिमुच्योष्णीषं संवेष्ट्य—' (कात्यायनश्रौतसू. 15-5-13) इति वाक्यमत्र ध्येयम्।

[अ]"'—'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।' (सिद्धान्तकौमुद्यामुपात्तः श्लोकोऽयम्) इत्यत्र 'अवाप्योः' इत्युपलक्षणार्थम्। तेन, अधेरपि भवति। 'धिष्ठितम्', 'धिष्ठितः' इत्यादीनि पदानि महाभारतादौ असकृत् प्रयुज्यन्ते।" इति क्षीरतरङ्गिणीटिप्पणे (पु-193) युधिष्ठिरमीमांसकैः प्रदर्शितम्। तत्र विद्वांसः प्रमाणम्।

सम्मुखे—[1]अध्यक्षः । ज्ञाने—'परं ब्रह्माधिगच्छति।', 'अधिगतपरमार्थान्—(भर्तृहरिः 2-14) प्रस्तावे—'शब्दानुशासनमधिकृतं वेदितव्यम् ।' (महाभाष्ये 1-1-1) ऐश्वर्ये—[2]अधिरामे भूः। अधिकम् । सामीप्ये—[3]अध्यधि ग्रामम् । परिभवे—शत्रून् अधिशेरते । पक्षपाते—[4]अधिवाकः। [5]अनर्थकोऽपि क्वचित्।

---

1. अध्यक्ष्णोः इत्यध्यक्षः। अत्र सम्मुखार्थः स्फुटं बोध्यः ।
2. 'अधिरीश्वरे' (1-4-97) इति कर्मप्रवचनीयसंज्ञा । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (2-3-9) इति सप्तमी । अधिकमित्यत्र अध्यारूढशब्दात् कन् , उत्तरपदलोपश्च भवति । 'अधिकम्' (5-2-73) इति सूत्रेण निपातितमेवम्। 'अधि रामे पराक्रान्तमधिकर्ता स ते क्षयम्।' इति (भ. का. 8-93) वचनमिहानुसन्धेयम्।
3. 'उपर्यध्यधसः सामीप्ये' (8-1-7) इति अधि इत्यस्य निपातस्य द्विर्वचनम्। एतच्च सामीप्यार्थ एव। 'कर्मप्रवचनीययुक्ते द्वितीया' (2-3-8) इति द्वितीया।
4. 'तमिन्धनेषु हितेषु अधिवाकाय हरन्ति।' (ऋ. 8-15-5) इत्यत्र 'अधिवाकाय=पक्षपातवचनाय' इति वेदभाष्ये विवृतत्वात् पक्षपातार्थत्वमप्यस्येति ज्ञायते।
5. 'अधिपरी अनर्थकौ' (1-4-93) इति कर्मप्रवचनीयसंज्ञा। अत्रानर्थकत्वं नाम प्रकृतकर्मप्रवचनीयेन साकमुपात्तस्य धातोर्योऽर्थः, तदतिरेकेण स्वस्यानधिकार्थकत्वम्, यथा—वृषभशब्दघटकः वृषशब्दोऽनधिकार्थकः इत्यादिकं पद्मञ्जर्यां स्पष्टम्। अत एवास्योदाहरणे अधितस्थुषीत्यत्र,उपसर्गसंज्ञा न, कर्मप्रवचनीयसंज्ञाया गत्युपसर्गसंज्ञाबाधकत्वात्। अन्यथा अधितष्ठौ इत्यादाविव 'स्थादिष्वभ्यासेन चाभ्यासस्य' (8-3-64) इति षत्वं स्यात्। वाचस्पत्ये तु प्रकृतस्थले '— पर्यधी गतौ।' इति मुग्धबोधवाक्यं प्रमाणीकृत्य गत्यर्थकत्वेऽधेः षत्वं नेति साधितम्। 'कुतोऽधियास्यसि क्रूर निहतस्तेन पत्रिभिः।' इति भट्टिकाव्ये (8-90) अनर्थकस्याधेरुदाहरणं दत्तमिहावधेयम्।

(37)

## " अधिगवम् गवि इत्यर्थे " (अव्य.)

गवि **इत्यधिगवम्**। विभक्त्यर्थे 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना अव्ययीभावसमासः। समासान्तोऽच्प्रत्ययोऽत्रेत्यपि ज्ञेयम्। **वाचस्पत्ये** उपात्तमिदम्। वेदे एवैतम्। लोके तु [1]**अधिगु** इत्येव स्यात्। अत्र 'अव्ययीभावश्च' (1-1-41) इत्यनेनाव्ययीभावसमासान्तस्याव्ययत्वमिति ज्ञेयम।

(38)

## " अधिभूतम् " (अव्य.)

भूतेषु इत्य**धिभूतम्**। अत्रापि विभक्त्यर्थेऽव्ययीभावसमासः। 'अव्ययीभावश्च' (1-1-41) इत्यनेनास्याव्ययत्वम्। एवमेवाव्यीभावसमासस्थलेषु अव्ययसंज्ञा ज्ञेया। [2]**आधिभौतिकः**।

(39)

## " अधिलोकम् " (अव्य.)

लोकेषु इत्य**धिलोकम्**। पूर्ववदत्रापि विभक्त्यर्थेऽव्ययीभावसमासः, अव्ययत्वं च। एवम्, **अधिहरि**, **अधिदेवम्** इत्यादिष्वप्यव्ययीभावसमासेनाव्ययत्वं ज्ञेयम्।

---

1. 'गोस्त्रियोरुपसर्जनस्य' (1-2-48) इत्युपसर्जनीभूतस्य गोशब्दस्य सामासिको ह्रस्वः। स च, 'एच इग्घ्रस्वादेशे' (1-1-48) इति वचनात् अत्र उकाररूप इति ज्ञेयम्।
2. अधिभूतं भवः आधिभौतिकः। अत्र, 'अनुशतिकादीनां च' (7-3-20) इत्यनेनोभयपदवृद्धिः। आधिभौतिकः=तापविशेषः।

(40)

## "अधुना अस्मिन् काले इत्यर्थे" (न.)

अस्मिन् काले इत्यर्थे, इदंशब्दात् कालवाचिनः सप्तम्यन्तात् स्वार्थे अधुनाप्रत्यये, प्रकृतेः (इदंशब्दस्य) लोपे च रूपमेवम्। अस्य चासर्वविभक्तितद्धितान्तत्वादव्ययत्वम्। स्पष्टमिदम् 'अधुना' (5-3-17) इत्यत्र **भाष्ये**। **काशिका**प्रभृतिषु **वृत्तिग्रन्थेषु** इदंशब्दस्य अश्भावे, धुनाप्रत्यये च **अधुना** इति रूपं साध्यते। **सिद्धान्तकौमुद्यां** तु इदंशब्दस्य इश्भावे अधुनाप्रत्यये, 'यस्येति च' (6-4-148) इत्यनेन प्रकृतेरादेशभूतस्येकारस्य लोपे च रूपमेवमन्यथैव साध्यते।

(41)

## "अधोनाभम्" (तिष्ठद्गु.)

नाभेरधः इत्यर्थे **अधोनाभम्** इति भवति। अत्र 'तिष्ठद्गुप्रभृतीनि च' (2-1-17) इति गणे पाठात् अव्ययीभावसमासान्तत्वम्। ततश्चाव्ययत्वम्। अत्र गणे (2-1-17) पाठादेव समासान्तोऽकारोऽत्रेत्यपि ज्ञेयम्। **सिद्धान्तकौमुद्यादिषु** तिष्ठद्गुगणपठितानां शब्दानां कालविशेषवाचकत्वमभ्युपगतम्। **गणरत्नमहोदधिकारेण** तु "अन्ये तु देशवृत्तित्वमपि मन्यन्ते।" इत्यभ्युपगम्य देशवाचकत्वमङ्गीकृतम्। अत्रास्याव्ययस्य देशवाचकत्वमेव न्याय्यम्। ततश्च तिष्ठद्गुगणपठितानां यथासम्भवं कालवाचकत्वम्, देशवाचकत्वं चेति प्रयोगादुन्नेयम्। '**अधोनाभं** प्रहृतवान्—' इति प्रयोगः **ग. र. म.** उपात्तः। शब्दशक्तिस्वाभाव्यात्—यत्र मल्लयुद्धादिप्रकरणे न्यायमार्गं व्यतीत्य **अधोनाभं** विजिगीषुणा प्रहारः क्रियते, तत्रैव हीनकृत्यत्वद्योतनायाव्ययस्यास्य प्रयोग इति **वृद्धाः**।

(42)

### "अध्यक्षरम्" (अव्य.)

अक्षरे (अक्षरमधिकृत्य) इत्यर्थे अध्यक्षरम् इति विभक्त्यर्थे अव्ययीभावसमासः। तेनाव्ययत्वम्।

(43)

### "अध्यग्नि" (अव्य.)

अग्नौ इति, अग्निसमीपे इति वाऽर्थे यथासम्भवं विभक्त्यर्थे, सामीप्ये वा. 'अव्ययं विभक्तिसमीप —' (2-1-6) इत्यादिना अव्ययीभावसमासेऽव्ययत्वम्।

(44)

### "अध्यात्मम्" (अव्य.)

आत्मनि इत्यध्यात्मम् 'अनश्च' (5-4-108) इति समासान्तष्टच्। अस्य विभक्त्यर्थेऽव्ययीभावसमासः, तेनाव्ययत्वम्। अनुशतिकादिषु (7-3-20) अस्य पाठात्, आध्यात्मिकम् इत्यत्रोभयपदवृद्धिः।

(45)

### "अध्यै" (कृ.)

कृत्प्रत्ययान्तस्याव्ययसंज्ञा, 'कृन्मेजन्तः' (1-1-39) इत्यनेन विधीयते। अस्य एजन्तकृत्प्रत्ययत्वादव्ययत्वम्। प्रायो वैदिकेष्वेव ग्रन्थेषु एतदन्तस्य प्रयोगो भवति। तद्यथा— 'ता विप्रं धैथे जठरं [1]पृणध्यै—

---

1. अत्र, 'तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्—' (3-4-9) इत्यादिना अध्यैप्रत्ययः पृणधातोरिति सायणभाष्ये प्रकृतस्थले प्रतिपादितम्। तत्र छान्दसत्वात् गुणो नेति ज्ञेयम्। अन्यथा पर्णध्यै इति स्यात्। वस्तुतस्तु 'पृ पालनपूरणयोः' इति क्रैयादिकस्य धातोः शध्यैप्रत्यये, शित्त्वेन 'क्र्यादिभ्यः—' (3-1-81) इति विकरणप्रत्यये 'श्ना' इत्यस्मिन् सति, धातोरस्य प्वादित्वेन, 'प्वादीनां ह्रस्वः' (7-3-80) इति शिति परतो ह्रस्वे, 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे च पृणध्यै इति रूपमत्रेति केचित्।

(ऋ. 6-67-7) इति। अव्ययसंज्ञकानां कृत्प्रत्ययानाम्, **'अव्ययकृतो भावे—'** इति **भाष्य** (3-4-9) वचनात् भावार्थकत्वमिति ज्ञेयम्।

(46)

**"अध्यैन्"** (कृ.)

अस्यापि एजन्तकृत्प्रत्ययत्वात् एतदन्तस्य, 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम्। प्रत्यये नकारः स्वरार्थः। वैदिकेषु ग्रन्थेष्वेव प्रायोऽस्य प्रयोगः। '........अपां **'चरध्यै'**[1] (ऋ 1-61-12)।

(47)

**"अनद्धा अनिश्चये"** (स्व.)

**वाचस्पत्ये** उपात्तोऽयम्। न अद्धा=**अनद्धा**। "........**अनद्धा** वा एतद् यदिमांल्लोकान्".... इति वेदः।" इति **वाचस्पत्ये** श्रुतिवाक्यमपि किञ्चिदुद्धृतम्। वस्तुतः पूर्वं प्रतिपादितस्य **अद्धा** इत्यव्ययस्यैव नञ्समासे रूपमेवमिति, तस्य च स्वरादीनाम् (1-1-37) आकृतिगणत्वेन तत्र पाठादव्ययत्वमिति च ज्ञेयम्।

(48)

"अनपयति" (स्व.)

अव्ययमिदं [2]**कैश्चित्** उपात्तार्थकत्वेनोपात्तम्। अस्यापि स्वरादेराकृतिगणत्वेन तत्र पाठ उन्नेयः। तेनाव्ययत्वम्।

---

1. अत्र, 'चर गतिभक्षणयोः' इत्यस्मात् तुमर्थे, 'तुमर्थे सेसेनसेअसेन—क्सेकसेनध्यैअध्यैन्—' (3-4-9) इत्यादिना अध्यैन्प्रत्ययः। चरध्यै=चरितुमित्यर्थः।
2. 'मानियर् विलियम्स्' इत्याख्येन विपश्चिता संकलिते निघण्टुकोशे (पु-25) द्रष्टव्यम्।

(49)

### " अना " (स्व. च.)

' अनेन ' इत्यर्थे च्छन्दसि विषयेऽव्ययमेतत् स्वरादिषु, चादिषु वा पाठाद्ज्ञेयः। ' विश्वे चनेद् **अना** त्वा—' (ऋ. 4-30-3) ।

(50)

### " अनिमिषम् " (च.)

' जागरूकतया ' इत्यर्थेऽव्ययमिदम्। [1]क्रियाविशेषणतयाऽपि लोके प्रायः प्रयुज्यते। ' —ऋधक् यतो **अनिमिषं** रक्षमाणा॥ ' (ऋ. 7-61-3)। निमेषं विना इत्यर्थेऽपि प्रयोगो दृश्यते। तत्रापि जागरूकतयेत्यर्थ एव पर्यवसानम्।

(51)

### " अनिमिषा " (च.)

निमेषं विना, अनिद्राजागरूकतयेत्यर्थे चादिषु पाठादव्ययत्वम्। 'मित्रः कृष्टीर**निमिषाऽभि** चष्टे—' (ऋ. 3-59-1) ।

(52)

" **अनु** पश्चात् कृपाज्ञानसान्निध्ये सेवनेच्छयोः।
सादृश्यानुकरणप्रश्नादेशाङ्गीकृतिनिमार्गणे ॥
प्रोत्साहने चानुकूल्ये पश्चात्तापानुवृत्त्ययोः।
प्रसाधने चोपकारे मानव्यालोचनान्वये ॥"

---

1. क्रियाविशेषणानामव्ययत्वं वैयाकरणसम्मतम्। तत्र चादिषु पाठादेतादृशानामव्ययत्वं ज्ञेयम्। केचित् क्रियाविशेषणानां नपुंसकलिङ्गत्वमप्यभ्युपगच्छन्ति।

(उ. क. त.) [अ]

अभीष्टसम्बन्धार्थयोगपि दृश्यते ।

पश्चादर्थे—**अनुसरति। अनुचरः। [1]अनुरथम्। तदनु।** कृपायाम् **अनुकम्पा। अनुक्रोशः। अनुशोचति॥** ज्ञाने—**अनुभवः। अनुमानम्॥** सान्त्वने—**अनुनयः॥** सेवने—**अनुजीवी। अन्वास्ते।** इच्छायाम्—**अनुरोधः। [2]अनुकः॥** सादृश्ये—**अनुकरोति। अनुहरति। अनुकल्पते॥** आचरणे—**अनुष्ठानम्॥** प्रश्ने - **अनुयोगः, अनुजिज्ञासते॥** आदेशे-**अनुशास्ति। अनुज्ञा॥** [3]अङ्गीकृतौ-**अनुमोदते। अनुज्ञातः॥** मार्गणे—**अन्वेषणा। अन्विष्य॥** प्रोत्साहने—

---

[अ] अत्रास्यानोः बहवोऽर्थाः प्रकरणप्रयोगादिवशात् दृश्यन्ते। अस्माभिस्तु क्षीरस्वामि - तिलक - वर्धमानादिप्रदर्शितदिशा केचनात्र प्रसिद्धा अर्था निर्दिष्टाः, तदनुगुणमुदाहृताश्च। यथा 'इयन्त इति संख्यैषां निपातानां न विद्यते।' (वाक्यपदीयम्) इति वचनात् निपातानां बाहुल्यम्, तद्वदेव, 'बहुष्वर्थेषु निपतन्ति इति निपाताः' इति अन्वर्थसंज्ञाश्रयणात् प्रत्येकं निपातानामनेकार्थकत्वात् यावदुपलब्धि अस्याप्यनोरस्माभिः स्वरूपं विवेचितमिति ज्ञेयम्। 'धातवश्चोपसर्गाश्च निपाताश्चेति ते त्रयः। अनेकार्थाः स्मृताः प्राज्ञैः पाठस्तेषां निदर्शनम्॥' इत्यभियुक्तोक्तिरिहावधेया।

1. अत्र पश्चादर्थे 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना नित्यसमासः। स चाव्ययीभावः। तस्य चाव्ययत्वम्। अनुरथम् = रथानां पश्चात् इत्यर्थः।

2. अनु कामयते इत्यनुकः कामयिता। अत्र 'अनुकाभिकाभीकः कमिता' (5-2-71) इत्यनेन 'अनु' इत्यस्मात् कमितेत्यर्थे पाञ्चमिकः (=पञ्चमाध्यायविहितः) कन् निपात्यते। इच्छार्थकत्वस्यास्य प्रयोगे स्फुटप्रतीतेरयं शब्द उपात्त इति ज्ञेयम्।

3. अङ्गीकृतिरूपार्थे निपाताव्ययोपसर्गवृत्तौ 'अनवसर्गः' इति उदाहरणं दृश्यते।

'होत्रे[1]ऽनुगृणाति ।' (होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ।) ॥ आनुकूल्ये—**अनुकूलः** । [2]**अनुगुणम** ॥ पश्चात्तापे—**अनुशयः** ॥ आनुपूर्व्ये—**अनुक्रमः** । [3]**अनुज्येष्ठम्** । **अनुदेशः** ॥ प्रगायने—'चन्दनेनानुलिम्पति ।' उपकारे—**अनुगृह्णाति** ॥ स्मरणे—**अनुस्मृतिः** ॥ आलोचने—**अनुसन्धानम्** । **अन्वीक्षने** ॥ अन्वये—'**अनु**व्रजति पदार्थानान्तरः कोऽपि हेतुः—' । [4]**अनूपम्** ॥

अधीष्टे—'इन्द्रायानुब्रूहि' । **अनुवाकः** । (अधीष्टः = सत्कारपूर्वको व्यापारः ।) सम्बन्धे—**अनुबन्धः** [5]अनूबन्धः ॥

लक्षणेत्थम्भूताख्यानभागवीप्सादिष्वर्थेषु यथासम्भवं कर्मप्रवचनीयसंज्ञाऽस्यैव । यथा—लक्षणे—वृक्ष**मनु** विद्योतते विद्युत् । (वृक्षसम्बन्धि द्योतन-

---

1. अत्र, 'अनुप्रतिगृणश्च' (1-4-41) इति सम्प्रदानसंज्ञा होतृशब्दस्य । तेन, 'चतुर्थी सम्प्रदाने' (2-3-13) इति चतुर्थी इति ज्ञेयम् । शंसनविषयहर्षानुकूलव्यापारः प्रोत्साहनम् ।

2. गुणमनुगतमनुकूलम् । क्रियाविशेषणमेतत् ।

3. अत्र आनुपूर्व्यार्थे, 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना अव्ययीभावसमासः । ज्येष्ठानुपूर्व्येण—इति अनुज्येष्ठम् । 'अव्ययीभावश्च' (1-1-41) इत्यनेन समुदायस्याऽव्ययत्वम् ।

4. अनुगताः—अन्विताः आपोऽस्मिन् देशे इत्यनूपम्—जलप्रायो देशः । 'ऊदनोर्देशे' (6-3-98) इति अनोः परस्य अप्शब्दस्याकारस्योकारः, 'ऋक्पूरप्—' (5-4-74) इत्यनेन समासान्तोऽकारप्रत्ययश्च ।

5. अनु बध्यते इत्यनुबन्धः—पुत्रदुहित्रादिसम्बन्धः, कित्त्वङित्त्वादिरूपः शास्त्रीयकार्यसम्पादको वर्णविशेषश्च । अनूबन्ध इत्यत्र, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इति दीर्घः पाक्षिकः । 'कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥' (भाष्यम्—3-3-1) इति प्रयोगोऽत्र ज्ञेयः ।

मत्र लक्षणम् ।) [1]अनुवनमशनिर्गतः । [2]पापाऽनु वसितं सीता—' (भ. का. 8-85), 'वचनं रक्षसां पत्युरनु—' (भट्टिकाव्ये 8-85)। [3]इत्थम्भूताख्याने—साधुश्चैत्रो मातरम् अनु । 'सद्वृत्तान् अनु दुर्वृत्तः परस्त्रीं जातमन्मथः ॥' (भ. का. 8-88)॥ भागे—यदत्र मामनु स्यात् तद्दीयताम्। वीप्सायाम् [4]वृक्षं वृक्षमनुसिञ्चति। [5]अनुदिशम्॥

---

1. 'अनुर्यत्समया' (2-1-15) इत्यनेनात्र लक्षणार्थस्यानोः समासः, स चाव्ययीभावः।

2. पापाऽनु इत्यत्र 'सह सुपा' (2-1-4) इति समासः। अत्र, 'तृतीयार्थे' (1-4-85) इत्यनेन अनोः कर्मप्रवचनीयसंज्ञा। 'कर्मप्रवचनीययुक्ते द्वितीया' (2-3-8) इति 'वसितम्' इत्यत्र द्वितीया। 'वचनं रक्षसां पत्युरनु क्रुद्धा पतिप्रिया।' (भ. का. 8-85) इत्यत्र तु, 'अनुर्लक्षणे' (1-4-84) इति कर्मप्रवचनीयसंज्ञा। तेन द्वितीया भवति।

3. इत्थम् = कञ्चित् प्रकारं भूतः = प्राप्तः, स आख्यायतेऽनेनेति इत्थम्भूताख्यानम् = साधुत्वादिप्रकारविशेषरूपः सम्बन्धः। अत्रापि लक्ष्ये, 'लक्षणेत्थम्भूताख्यान—' (1-4-90) इत्यादिनानोः कर्मप्रवचनीयसंज्ञा। ततो द्वितीया।

4. अत्र वीप्सा द्विर्वचनेनैव द्योत्यते। 'अनु' इत्येतत् तु क्रियया सम्बध्यते। कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् अनुसिञ्चति इत्यत्र न षत्वम्।

5. दिशि दिशि इत्यनुदिशम्। वीप्सार्थे 'अव्ययं विभक्ति—' (2-1-6) इत्यादिनाऽव्ययीभावसमासः। 'अव्ययीभावे शरत्प्रभृतिभ्यः' (5-4-107) इति समासान्तष्टच् प्रत्ययः। 'पिशिताशिनामनुदिशं स्फुरतां स्फुटतां जगाम परिविह्वलता।' (भ. का. 10-8) इति श्लोकोऽत्र ज्ञेयः।

[1]सहार्थे—नदीम**न्व**वसिता सेना ॥ हीने—'न भवा**ननु**[2] रामं चेत—' (भ. का. 8-86)। **अनु**शाकटायनं वैयाकरणाः। **अन्व**र्जुनं योद्धारः॥ हेतौ— शाकल्यस्य संहिताम**नु** [3]प्रावर्षत् ॥

सामीप्ये—[4]**अनु**शोणं पाटलिपुत्रम्। **अनू**पम्॥ आयामे—[5]**अनु**गङ्गं वाराणसी॥ योग्यतायाम्— [6]**अनु**रूपम्॥

(53)

## "अनुकामम्" (अव्य.)

यथाकाममित्यर्थे पदार्थानतिवृत्तौ 'अव्यय विभक्ति—' (2-1-6) इत्यादिनाऽव्ययीभावसंज्ञायां समुदायस्याव्ययत्वम्। 'मानो अर्यो **अनुकामं** परा दाः॥' (ऋ. 8-48-8)।

---

1. सहार्थः = तृतीयार्थः। 'तृतीयार्थे' (1-4-85) इति सहार्थे = तृतीयार्थे द्योत्येऽनोः कर्मप्रवचनीयसंज्ञा। तेन 'नदीम्' इत्यत्र द्वितीया।
2. 'हीने' (1-4-86) इति न्यूने द्योत्येऽनोः कर्मप्रवचनीयसंज्ञा। तेन 'रामम्' इत्यत्र कर्मप्रवचनीययोगात् द्वितीया।
3. 'लक्षणेत्थम्भूत—' (1-4-90) इत्यत्रानोर्लक्षणार्थे कर्मप्रवचनीयसंज्ञाविधानादेव 'शाकल्यस्य संहितामनु प्रावर्षत्।' इत्यादिस्थलेऽपि द्वितीयादेः सिद्धे, 'अनुर्लक्षणे' (1-4-84) इति पृथगनोः पुरस्तात् लक्षणार्थे कर्मप्रवचनीयसंज्ञाविधानात् हेतुतृतीयाऽत्र लक्ष्ये बाध्यते इति व्याख्यातारः। अतश्चात्र तृतीयां बाधित्वा द्वितीयेति ज्ञेयम्।
4. अनुशोणम् = शोणनदसमीपे इत्यर्थः। 'अनुर्यत्समया' (2-1-15) इति अव्ययीभावसमासे 'अव्ययीभावश्च' (1-1-41) इत्यव्ययत्वम्।
5. 'यस्य चायामः' (2-1-16) इत्यनेनात्राव्ययीभावसमासः। अनुरत्रायामवाची। गङ्गाऽऽयामेन वाराणस्यायामो लक्ष्यतेऽत्र।
6. यथाशब्दस्य योग्यता-वीप्सा-पदार्थानतिवृत्ति-सादृश्यप्रभृतयो बहवोऽर्थाः। तत्र 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना यथार्थे (=योग्यतारूपार्थे) अव्ययीभावसमासः।

(54)

**"अनुपथम्"** (अव्य.)

'पथः समीपे' इत्यर्थे, 'पथि' इति वाऽर्थे 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना अव्ययीभावसमासेऽव्ययत्वमस्य। क्वचित 'अनुपथम्' इत्यस्यानुकूल्यार्थकत्वमपि प्रकरणादिना सम्भवति। एवमेव, **अनुयवम्**, **अनुयात्रम्**, **अनुयुगम्**, **अनुयूपम्**, **अनुरूपम्**, **अनुवशम्**, इत्यादीन्यव्ययीभावसमासेनाव्ययानि सम्भवन्ति, इत्यादिक **वाचस्पत्यादिषु** कोशेषु द्रष्टव्यम्।

(55)

**"अनुषक् अनुमाने"** (च. स्व.)

**शाकटायन**मतेनास्य स्वरादित्वमपि **प्रौढमनोरमाकार**प्रभृतय इच्छन्ति। 'आनुपूर्व्ये' इत्यपि **क्वचिदस्यार्थनिर्देशः** कृतः। अस्यैवाव्ययस्य पृषोदरादित्वेन (6-3-109) दीर्घे **आनुषक्** इत्यपि **केचित्** पठन्ति।

(56)

**"अनुष्ठु सम्यगित्यर्थे"** (चादिः)

'ऋतन् प्रशासद् विदथावनुष्ठु[1] ॥' (ऋ. वे. 1-95-3) इत्यत्र "**अनुष्ठु** इत्येतदव्ययं सम्यक्छब्दसमानार्थम्; 'सुष्ठु' इति यथा।" इति **सायणभाष्ये** विवेचितमत्र ज्ञेयम्।

---

1. अनुपूर्वकात् 'ष्ठा गतिनिवृत्तौ' इत्यस्मात् 'अपदुःसुषु स्थः' (प.उणादिः 1-25) इति विधीयमानो कुप्रत्ययोऽत्राप्यनौ उपपदे बाहुलकाद् प्रवृत्त इति ज्ञेयम्।

(57)

"अनेव अनवधारणे" (स्व.)

'एवानेवात्र सा गरत्' (अथर्व. 16-7-4) इत्यत्र **अनेव** इत्युपादानात् अनवधारणार्थेऽस्याव्ययत्वमिति ज्ञायते। न + एव = **अनेव**। एवकारेण नञ्समासे नञो लोपे 'तस्मान्नुड् द्विहलः' (7-4-71) इति नुडागमे च रूपनिष्पत्तिरस्येति ज्ञेयम्। एतादृशानामव्ययानां स्वरादिषु चादिषु वा पाठ उन्नेयः।

(58)

"अनो अभावार्थे" (स्व.)

'अभावे नह्यनो नापि—' इत्यमरकोशे अभावार्थे 'अनो' इत्युपादानादव्ययत्वम्, तस्य च स्वरादिषु पाठ इति **अमरव्याख्यायां नीलकण्ठ**-प्रभृतिभिरुपात्तत्वात् **केचिद्** वदन्ति। "अन्ये तु 'अ' इति, 'नो' इति च च्छित्त्वा नामद्वयमित्याहुः।" इति **वाचस्पत्योक्तमेव** साध्विति प्रतिभाति, 'अ निषेधे, पुमान् विष्णौ—' इत्यादिकोशान्तरवाक्यसामञ्जस्यात्।

(59)

"अन्ततः" (त.)

अन्तेन, अन्तात्, अन्ते इत्यन्ततः। आद्यादित्वात् (पा. 5-4-44) सार्वविभक्तिकस्तसिप्रत्ययः। अस्य च तृतीयार्थे—'वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः॥' इति **मनुस्मृतौ** (2-62) प्रयोगो द्रष्टव्यः। अत्र **अन्ततः** = अन्तेन इत्यर्थः। 'सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः।' (मनुस्मृतिः 3-86) इत्यत्र **अन्ततः** = अन्ते इति सप्तम्यर्थे तसिः। सम्भावनायाम्-**अन्ततः** शतं दास्यति।

"अन्ततः = सम्भावना, अवयवः, पञ्चम्यर्थम्, शासनम् इति **विश्वः**।" इति **शब्दकल्पद्रुमोक्तमपीहावधेयम्**। एष्वर्थेषु प्रयोगोऽस्योन्नेयो यथासम्भवम्।

(60)

### "अन्तः मध्ये" (स्व. ग. उ.)

'प्रान्तम्, स्वीकारः' इत्यर्थद्वयमपि शब्दकल्पद्रुमादिष्वस्य प्रदर्शितम्। मध्ये—'अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ।' (मेघसन्देशे 1-3)। प्रान्त-स्वीकारयोरप्येवमुदाहार्यम्। 'अन्तर्—' इति स्वरादिषु पाठादस्याव्ययत्वम्। अस्यैवोपसर्गत्वमपि—'अन्तःशब्दस्य अङ्-किविधि-समास-णत्वेषूपसंख्यानम्—' (वा. 1-4-65) इति वचनात्। 'प्रादयः' (1-4-58) इति उपसर्गाणां नियतगणे पाठात्, तत्र चास्यापाठात् अप्राप्ते उपसर्गत्वे वचनेनानेन विधिरिति ज्ञेयम्। यथाक्रमम्—[1]अन्तर्धा, [2]अन्तर्धिः, [3]अन्तर्हत्य, [4]अन्तर्हण्यात् इत्युदाहरणानि। गतिसंज्ञा तु 'अन्तरपरिग्रहे' (1-4-65) इत्यनेन परिग्रहभिन्नार्थेष्वेवास्येत्यपि ज्ञेयम्। 'श्रदन्तरोरुपसर्गवद्वृत्तिः' इति सिद्धान्तकौमुद्यादिष्वसकृदुक्तं वचनमपि निरुक्तवार्तिकाधारेणैवेति ज्ञेयम्।

---

1. अन्तश्शब्दस्योपसर्गसंज्ञायाम्, 'आतश्चोपसर्गे' (3-3-106) इति धाञोऽङ्प्रत्यये आकारलोपे टापि रूपमेवम्।
2. 'उपसर्गे घोः किः' (3-3-92) इति धाञः किप्रत्यये, 'आतो लोप इटि च' (6-4-64) इत्याकारलोपे रूपमेवम्।
3. 'अन्तरपरिग्रहे' (1-4-65) इति गतिसंज्ञायाम्, 'कुगतिप्रादयः' (2-2-18) इति समासे, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (7-1-37) इति हन्तेः परस्य क्त्वाप्रत्ययस्य ल्यबादेशे धातुनकारलोपे तुकि च रूपम्। परिग्रहे तु 'अन्तर्हत्वा मूषिकां श्येनो गतः' इत्यत्र समासो न। अन्तर्हत्वा = परिगृह्य इत्यर्थः।
4. णत्वविधावपि अन्तरशब्दस्योपसर्गत्वात्, 'हन्तेरत्पूर्वस्य' (8-4-22) इति णत्वे रूपमेवम्। 'अन्तरदेशे' (8-4-24), 'अयनं च' (8-4-25) इति सूत्रद्वयं तु निरुक्तवार्तिकात्तसारत्वात्, वार्तिकस्य च व्यापकत्वात् स्पष्टप्रतिपत्त्यर्थमेव। 'देशे (णत्व) निषेधार्थं सूत्रद्वयम्' इति हरदत्तः। विस्तरस्तु कैयटीये भाष्यप्रदीपे शब्दकौस्तुभे च द्रष्टव्यम्।

(61)

"अन्तरा मध्यविनार्थयोः" (स्व.)

'निकटेऽपि' इति मेदिनीवाचस्पत्यादयः ।

मध्ये—'वैदेहीमन्तरा[1] क्रुद्धः क्षणमूचे विनिःश्वसन् ॥' (भ॰ का. 8-94) । विनार्थे—'त्वामन्तरा तामरसायताक्षि !' (ग. र. म.उ॰) ।

(62)

"अन्तरे मध्ये" (स्व. च.)

सप्तमी विभक्तिप्रतिरूपकमव्ययमिदम् ।

'आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ।' (ग॰ र. म॰ उ.)

(63)

"अन्तरेण मध्यविनार्थयोः" (चादिः)

'—वर्जने' इति निपाताव्ययोपसर्गवृत्तिः । वर्जनम् विनार्थ एव । मध्ये—'मृणालसूत्रान्तरम्[2] अन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः ।' (शिशुपालवधे—3-3)

विनार्थे—'अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ।' (रामायणे किष्कि॰ 32-17)

---

1. अत्र अन्तराशब्दो मध्यम् आधेयप्रधानमाचष्टे । 'अन्तराऽन्तरेण युक्ते' (2-3-4) इति 'वैदेहीम्' इत्यत्र द्वितीया । षष्ठ्यपवादः । 'अन्तरा त्वां मां च कमण्डलुः' इत्यत्र तु मध्यार्थकत्वं स्पष्टम् । निकटार्थे त्वस्याव्ययस्य प्रयोगो मृग्यः ।

2. 'अन्तराऽन्तरेण युक्ते' (2-3-4) इति द्वितीयाऽत्र । उत्तरत्रोदाहरणे 'अञ्जलिम्' इत्यत्रापि अनेनैव सूत्रेण द्वितीया ज्ञेया । 'अन्तरेण मातापित्रोः—' इत्यादिषु प्रयोगेषु अन्तरशब्दो नाव्ययमिति न तत्र द्वितीया । स्पष्टमिदं प्रकृतस्थले गणरत्नमहोदधौ ।

(64)

**"अन्तर्गिरम्"** (अव्य.)

'गिरेर्मध्ये' इत्यर्थः। अत्र विभक्त्यर्थेऽव्ययीभावसमासे 'गिरेश्च सेनकस्य' (5-4-112) इति समासान्ते टच्प्रत्यये, टिलोपे 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' (2-4-83) इत्यमि 'अव्ययीभावश्च' (1-1-41) इत्यव्ययसंज्ञायाम्, 'अव्ययादाप्सुपः' (2-4-82) इति सुब्लुकि च रूपमेवम्। 'अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम्' (भ. का. 5-37)।

(65)

**"अन्तर्जठरम्"** (अव्य.)

'जठरस्य मध्यम्' इत्यर्थे अव्ययीभावसमासः। तेनास्याव्ययत्वम्, एवमेव **अन्तर्जानु**, **अन्तर्दशाहम्**, **अन्तर्नगरम्**, [1]**अन्तर्वणम्**, इत्यादिष्वपि अव्ययीभावसमासेनाव्ययत्वं बोध्यम्। एतच्च **वाचस्पत्ये** स्पष्टम्। **शब्दकल्पद्रुमादिषु** **'अन्तर्जठरम्'** इत्यादयश्शब्दाः नपुंसकलिङ्गत्वेन प्रदर्शिताः। तदानीं तेषां शब्दानां क्रियाविशेषणत्वमिति ज्ञेयम्।

(66)

**"अन्तितः सामीप्ये"** (त.)

अन्तिकशब्दात् आद्यादि (वा. 5-4-44) पाठात् सप्तम्यर्थे तसिप्रत्यये पृषोदरादित्वेन (6-3-109) ककारलोपे, 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इति अव्ययसंज्ञा। अन्तिशब्दाद्वा तसिल्प्रत्यये रूपमेवम्।

'—वलिमग्ने! **अन्तित** ओत दूरात्।, (ऋ. 5-1-10)।

---

1. 'अन्तर्वणम्' इत्यत्र 'प्रनिरन्तःशरेक्षु—' (8-4-5) इत्यादिना वनशब्दस्थनकारस्य निमित्तिनो भिन्नपदत्वेऽपि पूर्वपदस्थात् निमित्तात् णत्वम्।

(67)

"अन्यत् विशेषे" (च. स्व.)

'—अन्यार्थे' इति **वर्धमानः**। 'इतरार्थेऽपि।' इति च स एवाह। विशेषे—देवदत्त आयातो[1]ऽन्यच्च यज्ञदत्त इति।

(68)

"अन्यच्च समुच्चये" (नि.)

'अन्यत् + च' इति निपातद्वयसमुदायोऽयम्।

'**अन्यच्च** श्रूयताम्।' अत्र पूर्ववाक्योक्तस्य समुच्चयो ज्ञेयः।

(69)

"अन्यतः परत इत्यर्थे" (त.)

अन्येन, अन्यस्मात्, अन्यस्मिन् इत्यर्थेषु अन्यशब्दात् सार्वविभक्तिके तसिप्रत्यये रूपमेतत्। 'एकतो हि भिगभूमगुणज्ञाम् **अन्यतः** कथमदः प्रतिलम्भः।' इति **नैषधम्** (5-69)। अन्यस्मिन् इत्यत्रार्थः।

(70)

"अन्यतरेद्युः 'अन्यतरस्मिन् अहनि' इत्यर्थे" (त.)

'सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युः—' (5-3-22) इत्यत्र, 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्' (वा. 5-3-22) इति

---

1. स्वरादिषु चादिषु वाऽस्य पाठस्तेनाव्ययत्वम्। 'अन्यदेवास्य गाम्भीर्यमन्यद् धैर्यं महीपतेः।' इत्यादिषु तु अन्यशब्दस्य नपुंसकलिङ्गप्रयोगः, तेन विशेष्यनिघ्नत्वमिति बोध्यम्।

वचनात् अन्यतरशब्दात् अन्यस्मिन् अहनि इत्यर्थे एद्युसुच्प्रत्ययः । अस्य च असर्वविभक्तितद्धितप्रत्ययत्वादव्ययत्वम् ।

## (71)

## "अन्यत्र वर्जने" (स्व.)

अन्यस्मिन् इत्यर्थे सप्तम्यन्तादन्यशब्दात् त्रल्प्रत्यये, तस्य च असर्व-विभक्तितद्धितत्वाद् अव्ययत्वम् । वर्जने—'पतितां न बिभृयाद्, **अन्यत्र** मातुः'। मातरं वर्जयित्वेत्यर्थः । किञ्च प्रकरणबलात् '**अन्यत्र**' इत्यस्य देशः कालो वा विशेष्यो भवति । यथा—'ऋतावुपेयात्, **अन्यत्र** वा प्रतिषिद्धवर्जम् ।' (गौतमधर्मसूत्रे 1-5-1) इत्यत्र कालो विवक्ष्यते। एवम्, '**अन्यत्र** निधनात् पत्युः पत्नी केशान् न वापयेत् ।' इत्यत्रापि । निधनकालं वर्जयित्वा इत्यर्थः । देशे यथा— '**अन्यत्र** यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।' इति । 'मधुपर्के च यज्ञे च पितृदैवतकर्मणि । अत्रैव पशवो हिंस्याः **नान्यत्रे**त्यब्रवीन्मनुः ॥' इत्यत्र व्यापारान्तरार्थकत्वमप्यस्य दृश्यते । एवम्, 'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।' '**अन्यत्र** भीष्माद् गाङ्गेयाद् **अन्यत्र** च हनूमतः । हरिणीखुरमात्रेण चर्मणा मोहितं ॥' जगत् इत्यादिषु विषयान्तरेऽपि प्रयोगोऽस्य दृश्यते। एतत्सर्वं प्रकरणवशाद् यथासम्भवमूह्यम् । क्वचित् प्रथमार्थे त्रल्प्रत्यये '**अन्यत्र**=अन्यः ।' इत्यप्यर्थो दृश्यते । तद्यथा—[1]" **अन्यत्र** धर्मादन्यत्राधर्मात् कृताकृतात् । **अन्यत्र** भूताच्च भव्याच्च— ॥' (कठोपनिषत् 2-14) इति ।

---

1. अत्र, 'इतराभ्योऽपि दृश्यन्ते' (5-3-14) इति वचनात् प्रथमार्थे त्रल् । 'तत्रभवान्' इत्यादिष्विव अत्रापि प्रथमार्थकत्वम् । ततश्च अन्यत्र धर्मात् = धर्मादन्यः । इत्यर्थः ।

(72)

## "अन्यथा अन्यप्रकारे" (त.)

अन्यशब्दात् 'प्रकारवचने थाल्' (5-3-23) इति थाल्प्रत्यये तस्य च प्रत्ययस्यासर्वविभक्तितद्धितत्वादव्ययत्वम्। अन्यप्रकारार्थे यथा— 'यद् अभावि न तद् भावि, भावि चेन्न तद् अन्यथा।' (हितोपदेशे) इति। मिथ्यारूपार्थेऽस्य वृत्तिरिति मेदिनीकोशविमर्शनाज्ज्ञायते। तदानीम्—'अन्यथाख्यातिः' इत्युदाहरणम्। अत्र यद्रूपेण ज्ञानं प्रत्येयम्, तद्भिन्नरूपेण=मिथ्यारूपेण आख्यानात् मिथ्यार्थकत्वम्। 'अन्यथानुपपत्तिः' इत्यादिषु अभावार्थकत्वमप्यस्य दृश्यते। 'अमात्याः प्राड्विवाको वा यत् कुर्युः कार्यमन्यथा।' इत्यादिषु अन्यथा इत्यस्य 'अन्यायेन, शास्त्रविरोधेन, अयथायथम्' इत्यादयोऽप्यर्थाः प्रतीयन्ते। एतत्सर्वं प्रकरणानुरोधेनोह्यम्। अत एव 'अन्यथा=दुष्टम्।' इति शब्दरत्नावल्यामर्थनिर्देशः कृत इति शब्दकल्पद्रुमोक्तमपि समञ्जसमिति ज्ञेयम्।

(73)

## "अन्यथाकारम्" (कृ.)

'अन्यथा' इत्यस्मिन् उपपदे, 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' (3-4-27) इत्यनेन कृञो णमुलि, 'कृन्मेजन्तः' (1-1-39) इत्यनेनाव्ययसंज्ञायां रूपमेवम्। 'अन्यथा' इत्यस्य यावानर्थः, तावानेव 'अन्यथाकारम्' इत्यस्याप्यर्थः। तदुक्तम्—'सिद्धाप्रयोगश्चेत्' इति। व्यर्थत्वात् प्रयोगानर्हश्चेत् इति तस्यार्थः। 'अन्यथाकारं भुङ्क्ते' इत्युदाहरणम्। अन्यथा भुङ्क्ते इत्यर्थः।

(74)

"अन्यदा कालान्तरे" (त.)

'सर्वैकान्यकियत्तदः काले दा' (5-3-15) इति कालवाचिनोऽन्यशब्दस्य सप्तम्यर्थे दाप्रत्ययः। स चायं प्राग्दिशीयप्रत्यय इति विभक्तिसंज्ञायामस्यासर्वविभक्तितद्धितत्वादव्ययत्वम्। '**अन्यदा** भूषणं पुंसां क्षमा लज्जेव योषितः।' इति **माघः** (2-44)।

(75)

"अन्येद्युः दिवसान्तरे" (त.)

अन्यस्मिन् दिने—**अन्येद्युः**। 'सद्यः परुत् परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युः—' (5-3-22) इत्यत्र 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्' (वा. 5-3-22) इति वचनादन्यशब्दात् एद्युसुच्प्रत्यये रूपमेवम्। 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इति अव्ययत्वम्। 'परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चापि चिन्तयन्।' इति **भट्टिः** (1-13)।

(76)

"अन्वहं दिने दिने" (अव्य.)

सप्तम्यर्थे वीप्सायामव्ययीभावसमासे समासान्तटच्प्रत्ययः। अव्ययीभावसमासत्वादव्ययत्वम्।

(77)

"अन्वाजे दुर्बलस्य बलाधाने" (नि. ग.)

अनु+आ+जयत्यनेन इत्यर्थे जियातोर्डप्रत्ययं सप्तमीविभक्तिप्रतिरूपकतया 'उपाजे **अन्वाजे**' (1-4-73) इत्यत्र निपातनादेकारान्तत्वमस्य।

अयं च कृञ्धातौ परतः विकल्पेन गतिसंज्ञां प्राप्नोति । तेन '**कुगति-प्रादयः**' (2-2-18) इति यदा समासः, तदानीम्, **अन्वाजेकृत्य** इति ल्यप् समासप्रयुक्तः प्राप्नोति । यदा तु न गतिसंज्ञा, तदानीम्, समासाभावात् **अन्वाजेकृत्वा** इति सिद्ध्यति । **अन्वाजेकृत्य**=दुर्बलस्य बलाधानं कृत्वेत्यर्थः ।

(78)

### "अन्योन्यस्य परस्परार्थे" (चादिः)

विभक्तिप्रतिरूपकमव्ययमिदम् । '**अन्योन्यस्य** स्मरन्ति ।' परस्परं स्मरन्तीत्यर्थः । अत्र 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्,' (वा. 8-1-12) इति वचनात् सर्वनामसंज्ञकस्य अन्यशब्दस्य कर्मव्यतिहारार्थे वर्तमानस्य द्विर्वचनं कृतं. बहुलग्रहणात् अन्यशब्दस्य समासवद्भावाभावे च सति 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः' (वा. 8-1-12) इति वचनेन पूर्वत्र सुः । समुदायात् षष्ठी । एवं परिनिष्ठितस्य चादिषु पाठात् षष्ठीविभक्तिप्रतिरूपकाव्ययत्वम् इति ज्ञेयम् ।

(79)

### "अप"

"**अप** अन्यथात्वे विश्लेषे ह्रासोद्घाटनवारणे ।
ईप्साद्याभृत्यनुद्धर्षे प्रकाशेऽथासमुक्तिषु ॥
प्रतिदानव्याजदोषद्रोहनिह्नवखेलने [लखने ?] ।
चौर्यनिर्देशपूजासु वैकल्यांशे विपर्यये ॥" (उ. ग. क. चा.)
वर्जनादिष्वपि दृश्यते ।

अन्यथात्वे—अपवर्तते, अपेनम् ॥ विश्लेषे—अपमुच्यते । अपवाहयति ॥ ह्रासे—अपचयः, अपकृष्टः ॥ उद्घाटने—अपवृत्तं द्वारम् । उद्घाटितमित्यर्थः ॥ वारणे—अपाकरोति, अपहतं पापम् । वारितमित्यर्थः । ईप्सायाम्—अपेक्षा ॥ व्यावृत्तौ—अपसर्पति, अपयाति ॥ अनुत्कर्षे—अपन्यायः, [1]अपगरः ॥ न्यक्कारे—अपक्षिपति, अपगतिः ॥ [2]उत्प्रासे—अपहसति ॥ मुक्तौ—[3]अपवर्गः ॥ प्रतिदाने—ऋणमपाकरोति ॥ व्याजे—अपदेशः, अन्यापदेशः, स्वापदेशः ॥ दोषे—अपार्थः, अपवादः, अपभ्रंशः ॥ द्रोहे—अपराध्यति, अपकारः ॥ निह्नवे—अपह्नवः, अपलपति, अपजानीते ॥ [4]लेखने—अपस्किरते वृषलो हृष्टः ॥ चौर्ये—अपहरति, अपनयः ॥ निर्देशे—व्यपदिशति ॥ पूजायाम्—अपचितो विष्णुः ॥ वैकल्ये—अपकीर्णमुखः ॥ अंशे—अपस्करः=रथाङ्गम ॥ विपर्यये—अपमृत्युः, अपसव्यम्, अपद्वारम् ॥

---

1. अप गीर्यते इत्यपगरः=निन्दा । 'अपगरो=निन्दा ।' इति कात्यायनश्रौतसूत्रव्याख्यायाम् (13-3-3) । निन्दायाः अनुत्कर्षार्थकत्वादत्र संगतिः ।

2. 'उत्प्राशः' इति तालव्यान्ततया निपाताव्ययोपसर्गवृत्तौ पाठः परिदृश्यते; स त्वपपाठः। दन्त्यान्तस्यैव अमरादिकोशेषूपलम्भात् तस्यैव च न्याय्यत्वात् । द्विरूपकोशादिषु प्रायः तालव्यान्तानां दन्त्यान्तानां च अर्थसाम्यस्योक्तत्वात् तालव्यान्तत्वेऽपि नासाधुत्वमिति केचित् ।

3. 'अपवृज्यते संसार इत्यपवर्गः मोक्षः' इति सर्वेषु ग्रन्थेषु विलेखनात् वस्तुतोऽत्र विश्लेषरूपाय एवान्तर्भावो न्याय्यः । स्पष्टप्रतिपत्त्यर्थमतः मुक्तिरूपार्थ उपात्त इति ज्ञायते ।

4. 'खेलने' इति निपाताव्ययोपसर्गवृत्तौ दृष्टः पाठोऽसाधुः, यत 'अपाच्चतुष्पाच्छकुनिष्वालेखने' (6-1-142) इत्यत्र लेखनरूपार्थस्यैवाद्याध्याय्यामुक्तम् । अत्राप्युदाहरणे आलेखनार्थे प्रकृतसूत्रेण (6-1-142) सुड्विशिष्टस्यैव 'अपस्किरते—' इत्युदाहृतत्वात्।

वर्जनार्थे कर्मप्रवचनीयः। अप साकेताद् वृष्टो देवः। 'यत् सम्प्रत्यप[1] लोकेभ्यो लङ्कायां वसतिर्भयात् ॥' (भ. का. 8-87)।

त्वराऽपि क्वचिदर्थोऽस्य। यथा—'खड्गापगारं [2]खड्गापगोरं वा युध्यन्ते।' इति। 'अपादानम्' इत्यादिषु अप इत्येतस्य विश्लेषद्योतकत्वमेवेति नार्थान्तरत्वकल्पनं न्याय्यम्।

(80)

## "अपदक्षिणम्" (तिष्ठद्गु.)

अपगता दक्षिणा यत्र तद् [3]अपदक्षिणम्। गणरत्नमहोदधिपठितमिदमव्ययम्। अपदक्षिणम्=अपसव्यम्।

(81)

## "अपरम्" (स्व. चा)

अपरम्=भविष्यत्काले। यथा—'तावामद्य तावपरं हुवेम—' (ऋक्. 1-184-1) 'उतापरं तुविजात ब्रवाम।' (ऋक्. 2-28-8) इति। छान्दसोऽयम्। भाषायामपीति केचित् ॥

---

1. अप लोकेभ्यः=लोकान् वर्जयित्वेत्यर्थः। 'अपपरी वर्जने' (1-4-88) इति कर्मप्रवचनीयसंज्ञायाम्, 'पञ्चम्यपाङ्परिभिः' (2-3-10) इति पञ्चम्यत्रेति ज्ञेयम्।'
2. खड्गमुद्यम्य युध्यन्त इत्यर्थे परीप्सायां गम्यायां (परीप्सा=त्वरा) 'द्वितीयायां च' (3-4-53) इति णमुल्। 'अपगुरो णमुलि' (6-1-53) इत्याकारविकल्पः। णमुलो मान्तकृत्त्वादव्ययत्वम्।
3. 'तिष्ठद्गुप्रभृतीनि च' (2-1-17) इत्यत्र गणे निपातनात् अव्ययीभावसमासः। तेनाव्ययत्वम्। अत्र गणे पठितानां शब्दानां कालवाचकत्वम्, देशवाचकत्वं च यथासम्भवं ग्राह्यम्—इति वृद्धाः। तेनात्र शब्दशक्तिस्वाभाव्यात् अपसव्यरूपदेशवाचकत्वेऽस्याव्ययस्य वृत्तिरिति ज्ञेयम्।

(82)

**"अपरसमम्"** (तिष्ठद्गु.)

अपराः, आयत्यो वा समा यत्र काले सोऽ**परसमम्**[1]। "—'अव-समम्' इति **भोजः**।" इति **गणरत्ने**।

(83)

**"अपरीभ्यः"** (स्व.)

न+परि=**अपरि** इति शब्दात् कालवाचकात् छन्दसि बाहुलकात् भ्यस्प्रत्यये रूपमेवम्। तस्य च स्वरादित्वात् (1-1-37) अव्ययत्वम्। **अपरीभ्यः**=भाविकाले। तद् यथा—'इन्द्रश्च तद् युयुधाते अहिश्चोता-**परीभ्यो** मघवा विजिग्ये ॥' (ऋक्-1-32-13) इति ॥

(84)

**"अपरीषु"** (स्व.)

अत्रापि भाविकालरूपार्थे छान्दसत्वात् 'अपरि' इत्यस्मात् सप्तमी-विभक्तिः, तस्य च स्वरादिपाठादव्ययत्वमिति ज्ञेयम्। 'अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥' (ऋक्-10-117-3)।

---

1. 'तिष्ठद्गुप्रभृतीनि च' (2-1-17) इत्यत्र गणपाठस्यापरिसमाप्तत्वात् तस्य आकृतिगणत्वं ज्ञायते। गणरत्नमहोदधिप्रभृतिषु पठितत्वाद्-स्माभिरप्ययमुपात्तः। 'अपसमम्' इति शब्दकौस्तुभे (2-1-17) पाठः। 'समस्यापगतत्वं अपसमम्।' इति विग्रहः। अव्ययीभाव-समासत्वादव्ययत्वम्। एतदपि कालवाचकमव्ययम्।

(85)

## “अपरेद्युः” (त.)

अपरस्मिन् अहनि इत्यर्थे अपरशब्दात् एद्युसुच्प्रत्यये रूपमेवम् । “पूर्वेद्यु[1]रपरेद्युर्वा श्राद्धकर्मण्युपस्थिते । निमन्त्रयेत विप्रान् वै—” इति स्मृतिवाक्यं किञ्चित् शब्दकल्पद्रुमादिषूपात्तमिहानुधेयम् ।

(86)

## “अपष्टु” (स्व. च.)

निर्दोषे, शोभने, तथा विपरीते चार्थेऽव्ययमेतत् चादिषु स्वरादिषु वा ज्ञेयम् । प्रतिकूलविरुद्धार्थौ तु विपरीतार्थस्यावस्थाविशेषौ एव । काल-रूपार्थे तु पुँल्लिङ्गत्वमस्यैव । विपरीतार्थे यथा—‘तव धर्मराज इति नाम कथमिदम [2]अपष्टु पठ्यते ।’ (शिशुपालवधे 15-17 श्लोकः ।) निर्दोष-शोभनार्थयोरप्येवमुदाहार्यम् ।

---

1. ‘पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्’ (वा. 5-3-22) इति अपरशब्दादेद्युसुच्प्रत्यये रूपमेवम् । सिद्धान्तकौमुद्यादिषु एद्युस्प्रत्ययान्तत्वेनायं शब्दः साधितः । अन्तोदात्तस्वरप्रासयर्थं भाष्ये एद्युसुच्प्रत्ययान्तत्वेन निष्पादितत्वात् एद्युसुजन्तत्वमेव प्रामाणिकमिति ज्ञेयम् ।

2. ‘अपदुःसुभ्यः स्थः (कुः)’ [दशपाद्युणादिः 1-110] इति स्थाधातोरपपूर्वकस्य कुप्रत्यये, ‘आतो लोप इति च’ (6-4-64) इत्याकारलोपे, ‘सुषामादिषु च’ (8-3-98) इति षत्वे च रूपमेवम् । न्यासकारस्तु मृगय्वादित्वात् (द. उ 1-121) कुप्रत्यये रूपं साधयति ।

(87)

"अपसलवि" (स्व. चा.)

प्रदेशिन्यङ्गुष्ठमध्यतो दीयमानस्य पितृतीर्थस्य पिण्डादेस्त्वेनं प्रयोगो वैदिकग्रन्थेषु दृश्यते। "सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वा [1]अपसलवि पूर्वस्यां.... ...पिण्डे निदध्यात्।" इति **गोभिलसूत्रं** (4-3-24) **वाचस्पत्य** उपात्तम्।

(88)

"—बन्धस्थगनोपगमेष्वपि॥" (उ. क. नि.)

बन्धे—'....विनत्य शार्ङ्गं कवचं [2]**पिनह्य**।' (भ. का. 3-17)।
स्थगने—'अश्वाः [3]प्यधुर्वसुमतीमतिरोनमानाः....॥' (माघे 5-4)।
उपगमे—'अथेतरे दुःखमेवापि यन्ति।'

---

1. अपपूर्वकस्य सलधातोर्बाहुलकात् अविप्रत्यये, समुदायस्य चादिषु स्वरादिषु वा पाठादव्ययत्वम्। 'प्रसलवि' इत्यस्य, दैवतीर्थेन इत्यर्थः। तस्य प्रतिपदमेतदित्यपि ज्ञेयम्। 'अपलसवि' इति क्वचित् पाठो दृश्यते।
2. 'उपसर्गाः क्रियायोगे' (1-4-59)इति नहधातुयोगे 'अपि' इत्यस्योपसर्गसंज्ञायाम्, 'ते प्राग् धातोः' (1-4-80) इति नियमात् (गत्युपसर्गसंज्ञकानां) धातोः प्राक् प्रयोगः। तत्र, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।' (सिद्धान्तकौमुद्यामव्ययप्रकरणे पठितः श्लोकोऽयम्) इति वचनेन अपेरकारस्य लोपे रूपमेवम्।
3. स्थगनम्=तिरोधानम्। प्यधुः इत्यत्र अपिपूर्वाद् दधातेर्लुङ् 'वष्टि भागुरिः—' इत्यत्राप्यपेरकारलोपः।

पदार्थ-सम्भावना-ऽन्ववसर्ग-गर्हा-समुच्चयरूपार्थेषु कर्मप्रवचनीयत्वमस्यैव ।

पदार्थः-अप्रयुक्तपदस्यार्थः । तस्मिन् यथा— 'परिशेषं न नामापि[1] स्थापयिष्यति ते प्रभुः ।' (भ. का. 8-91) ।

सम्भावनायाम्—' अपि स्थाणुं जयेद् रामो भवतो ग्रहणं कियत् ?॥' (भ. का. 8-91) ।

अन्ववसर्गः-कामचारानुज्ञा । तस्मिन् यथा—'[2]अपि स्तुह्यपि सेधास्मांस्तथ्यमुक्तं नराशन ।' (भ. का. 8-92) ।

गर्हायाम्—' अपि सिञ्चेः कृशानौ त्वम्—' (भ. का. 8-92) ।

' मन्त्रे जातु वदन्त्यज्ञास्त्वं नानष्यनुमन्यसे[3] ।' (भ. का. 18-16) ।

समुच्चये—अपि सिञ्च, अपि स्तुहि । सिञ्च, स्तुहि चेत्यर्थः ।

---

1. अत्र 'विभुः—रामः ते परिशेषं नामापि—संज्ञामपि न स्थापयिष्यति, किमु देहम् ?।' इति वाक्यार्थः । तत्र देहरूपपदस्यात्राप्रयुक्तत्वात् अपेस्तदर्थे वृत्तिरिति ज्ञेयम् ।

2. अत्रापेः कर्मप्रवचनीयसंज्ञा । तेन उपसर्गसंज्ञा बाध्यते । अतोऽत्र न षत्वमिति ज्ञेयम् । एवमेवोत्तरत्रापि षत्वाभावो यथासम्भवं प्रकरणानुरोधेनोह्यः ।

3. 'गर्हायां लडपिजात्वोः' (3-3-142) इति गर्हायेंऽपिशब्दयोगे कालत्रयेऽपि लडस्तेति ज्ञेयम् ।

वीप्साऽऽशीमृतिभूषाऽपेक्षाप्रश्नबाढार्थेष्वपि दृश्यते ।

वीप्सायाम्—'ये[1]ऽपीन्द्रपाणितुलितायुधलूनपक्षाः ।' (माघे 5-31) ।

आशिषि—'अपि नः स कुले भूयात् ? ।' भद्रमपि ॥

[2]मृतौ—मरणमपि ॥ भूषायाम्—अपि नह्यति हारम् ।

अपेक्षायाम्—[3]अपि गृह्णीयां त्वेदम् ? ।

प्रश्ने—'अपि कुशलममर्त्याः !—' (चम्पूरामायणे) ।

बाढार्थे—अपि कुर्याम् ।

'—दर्पे मय्यपि योऽभिकः ॥' (भ॰ का॰ 8-92) इत्यत्र नैच्यानुसन्धाने, 'यद्यपि....तथापि' इत्यादिषु शास्त्रवाक्येषु—आक्षेपसमाधानरूपार्थेषु चास्यैवापेः वृत्तिरिति ज्ञेयम ॥

'सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतद् अङ्गे ।
विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम ॥'

---

1. अत्र सर्वंकषायाम् (5-31) मल्लिनाथेन 'येऽपि । ये ये इत्यर्थः' इत्युक्तत्वात् वीप्साऽप्यपेरर्थ इति ज्ञेयम् ।
2. मृति-भूषारूपावर्थौ वाचस्पत्यानुसारेण प्रदर्शितावस्माभिः ।
3. अत्रापि प्रश्नो वर्तत एव; तथापि आदानरूपापेक्षाविशिष्टः प्रश्न एषः । उत्तरत्र तु जिज्ञासारूपः प्रश्न इति भिदा ज्ञेया । 'अपि कुर्याम्' इत्यादिस्थलेषु उपसर्गप्रतिरूपकत्वमपेः निपातात्मयोपसर्गवृत्तौ प्रतिपादितम ।

इति **माघे** (10-15) उक्तरीत्या निदर्शनार्थमिमे अर्थाः प्रदर्शिताः। **अस्यापेः** निपातत्वेन, उपसर्गत्वेन च बह्वर्थकत्वं काव्यव्याख्यातृभिः प्रकरणानुगुणतया तत्र तत्र प्रदर्शितम्। निदर्शितदिशा न्याय्यानां समीचीनानां चार्थानां प्रयोगानुगुणमुन्नेयतां मनसिकृत्वा विस्तरभयादस्माभिर्विरम्यते।

(89)

**"अपिकक्ष"** (अव्य.)

कक्षे इत्यर्थे सप्तम्यर्थे, 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना अव्ययीभावसमासे बाहुलकात् छान्दसत्वात् वा 'नाव्ययीभावादतोऽम—' (2-4-83) इति विहितोऽम् न। यथा— 'ग्रीवायां बद्धो **अपिकक्ष** आसनि—' (ऋक्. 4-40.4)।

(90)

**"अपिच किञ्चेत्यर्थे"** (नि.)

अपि+च इति निपातद्वयसमुदायोऽयमिति **बहवः**। एवमेव **अपितु अपिवा** इत्यादीनामपि निपातसमुदायत्वमव्ययत्वमित्यादिकं प्रकरणानुरोधेन यथायथमूह्यम्। 'विप्रोऽयम्, **अपिच** विद्वान्—'।

(91)

**"अपुनः"** (नि.)

न+पुनः = **अपुनः** = अपुनरावृत्तम्, अपुनरुक्तम् इत्यर्थे। यथा — 'अनानुकृत्य**मपुन**श्चकार—' (ऋक्. (10-68-10)। प्रायो वेद एवास्य प्रयोगः।

(92)

“ अपुष्पम् ” (अव्य.)

पुष्पस्याभाव इत्यर्थे, ‘ अव्ययं विभक्ति—’ (2-1-6) इत्यादिना अभावार्थेऽव्ययीभावसमासे रूपमेवम । अपुष्पात् इत्यत्र तु पञ्चम्यन्तत्वात् अदन्ताव्ययीभावत्वेऽपि ‘ नाव्ययीभावाद् अतोऽम् त्वपञ्चम्याः ’ (2·4-83) इति न अम् इति ज्ञेयम् । अर्थाभावरूपार्थेऽव्ययीभावसमासे सर्वत्राप्येवमेव । निदर्शनार्थमेकमिहोपात्तम । ‘ तैरपुष्पाद् वनस्पतिः । ’ इति अमर : (2-4-6) ।

(93)

“ अपृथक् ” (नि.)

न पृथक् = अपृथक् । ‘ सहयोगे पूर्वापरयोः एकादशरूपे सम्भूय-भवने.... ’ इति वाचस्पत्यम् ।

(94)

“ अप्रति ” (नि.)

न + प्रति = अप्रति = अतुलनीयम्, अनुपमप्रकारेण इत्यर्थः । अस्यापि प्रायो वेद एव प्रयोगः । तद् यथा—‘इन्द्रावरुणा वधनाभिरप्रति—’ (ऋक्. 7-83-4) । तिष्ठद्गुगणे (2-1-17) संप्रति इतिवत् ‘ अप्रति ’ इति निपातसमुदायत्वेन केचित् पठन्ति ।

(95)

## "अभि"

"अभि आग्रहोक्तिसांमुख्योदयाङ्गीकारवन्दने ।

कामनाभोजनाभ्यङ्गाभितोऽर्थेऽनुकृतौ स्मृतौ ॥

न्यक्काराम्नायनैकट्यपेशलत्ववशीकृतौ ।" (उ. क. नि.)

आग्रहे—अभिनिवेशः, अभिचारः ॥ उक्तौ—अभिधेयम्, अभिधा ॥ सांमुख्ये — अभियाति, अभिमुखम् ॥ उदये—अभ्युदयः, अभिषेकः ॥ अङ्गीकारे — अभ्युपगच्छति, अभिमानः ॥ वन्दने — अभिवादनम्, [1]अभिवन्द्य ॥ कामनायाम् — अभिलाषः, अभिसारिका, [2]अभिकः-अभीकः ॥ भोजने—अभ्यवहारः ॥ [3]अभ्यङ्गे—अभ्यनक्ति, अभिष्यन्दः ॥ अभितोऽर्थे—

---

1. 'धात्वर्थं बाधते कश्चित्, कश्चित् तमनुवर्तते । विशिनष्टि तमेवान्यः, उपसर्गगतिस्त्रिधा ॥' (वाक्यपदीये) इत्युक्तेषु त्रिप्रकारकेषु, अत्र 'विशिनष्टि तमेवान्यः—' इत्यस्योदाहरणमिदम्। एवमेव यथासम्भवमितरस्थलेष्वपि सन्दर्भवशादुपसर्गस्यार्थं ऊह्यः ।

2. कामनारूपार्थे वर्तमानस्य 'अभि' इत्यस्य क्रियाविशिष्टसाधनवाचिनः स्वार्थे, 'अनुकाभिकाभीकः कमिता' (5-2-74) इति कन्प्रत्ययः, तस्य, पक्षे उपसर्गेकारस्य दीर्घश्च निपातनाज्ज्ञेयः । 'अपि स्निग्धः कृशानो त्वं दर्पं मय्यपि योऽभिकः ॥' (भ. का. 8-92) इति श्लोकोऽत्रानुसन्धेयः ।

3. अभ्यङ्गः – तैलादिना देहस्य अभ्यञ्जनम् । 'अभिष्यन्दः' इत्यत्र 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु' (8-3-72) इत्यनेन विकल्पेन षत्वम् । तेन पक्षे 'अभिस्यन्दः' इत्यपि साधुः ।

अभिनन्दति, अभ्युक्षणम्, [1]अभितः कृष्णं गोपाः ॥ अनुकृतौ—अभिनयः, ॥ स्मृतौ—अभिज्ञानम्, अभिसन्धानम् ॥ न्यक्कारे—अभिभवः ॥ आम्नाये—अभ्यस्यति ॥ नैकट्ये—अभ्याशः, [2]अभिनभ्यम् ॥ पेशलत्वे—अभिजातः ॥ वशीकृतौ—अभिनवम् वयः ॥

अस्यैवाभेः लक्षणेत्थम्भूताख्यानवीप्सासु कर्मप्रवचनीयसंज्ञा । लक्षणे—वृक्षमभि [3]विद्योतते विद्युत । [4]इत्थम्भूताख्याने — साधुर्भक्तो

---

1. अत्र 'अभि' इत्येतत् उपसर्गप्रतिरूपकमव्ययम् — इति तिलकः । अन्यथा क्रियायोग एवोपसर्गसंज्ञाविधानात्, अत्र च तसिप्रत्ययस्य क्रियात्वाभावात् कथमुपपत्तिरिति तस्याशयः । आद्यादित्वात् (वा. 5-4-44) 'अभि' इत्यस्मात् सार्वविभक्तिके तसिप्रत्यये, 'अभितः परितः समया निकषा हा प्रतियोगेऽपि' (पा. 2-3-2) इति कृष्णशब्दस्य द्वितीया।

2. नैकट्यमित्युपलक्षणम्-मध्य-प्रान्तादिदेशविशेषाणामपि । तद्यथा — 'अहमस्मि महामहोऽभिनभ्यमुदीषितः —' (ऋक्. 10-119-12) इत्यत्र अभिनभ्यम् = स्वर्गमध्यपर्यन्तम् इत्यर्थे (मध्यरूपार्थे) अभिः प्रयुक्तः ।

3. अत्र लक्षण-इत्थम्भूताख्यान-वीप्सारूपार्थत्रये क्रमेणोदाहरणानीति ज्ञेयम् । एष्वर्थेषु, 'अभिरभागे' (1-4-91) इति 'अभि' इत्यस्य कर्मप्रवचनीयसंज्ञा । 'कर्मप्रवचनीययुक्ते द्वितीया' (2-3-8) इति तद्योगे वृक्षादीनां द्वितीया । 'अभि द्योतिष्यते रामो भवन्तमचिरादिह ।' (भ. का. 8-89) इत्यत्राप्येवमेव लक्षणार्थेऽभेः कर्मप्रवचनीयता ।

4. इत्थम् = कंचित् प्रकारं भूतः = प्राप्तः । स आख्यायतेऽनेनेति इत्थम्भूताख्यानम् = भक्तत्वादिप्रकारविशेषरूपः 'अभि' इत्यनेन द्योत्यः सम्बन्धः ।

हरिमभि। वीप्सायाम—देवंदेवमभि [1]सिञ्चति। भागे तु—यदत्र [2]ममाभिष्यात् तद् दीयताम्॥ अप्रसिद्धार्थेऽपि क्वचित्। यथा — [3]अभ्याख्यातम्। [4]अभिनिष्टानः, [5]"अभीषुणः सखीनाम्—" (ऋक्—4.31.3)।

---

1. कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधितत्वात् 'उपसर्गात् सुनोति-' (8-3-65) इति प्राप्तं षत्वं नात्रेति ज्ञेयम्। अत्रोदाहरणे वीप्सार्थे एवाभेः कर्मप्रवचनीयतेति कृत्वा, अभिना वीप्साया द्योतितत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन पुनः 'नित्यवीप्सयोः' (8-1-4) इति देवशब्दस्य द्विर्वचनं (वीप्सार्थं) अन्याय्यमिति भाति। एवमेव देवशब्दः क्वचित् कोशे अद्विरुक्त एव च लक्ष्यते।

2. 'अभिरभागे' (1-4-91) इत्यत्र 'अभागे' इत्युक्त्वाऽभेः भागार्थकत्वमपि क्वचिज्ज्ञायते। उदाहरणे भागार्थकत्वं स्फुटम्। कर्मप्रवचनीयसंज्ञायाः भागार्थे निषेधात्, उपसर्गसंज्ञाश्रितम् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (8-3-87) इति षत्वमत्रेति ज्ञेयम्।

3. 'अथाऽभ्याख्यातेषु' (तैत्तिरीयोपनिषत्) इत्यादिषु अप्रसिद्धार्थकत्वमस्य ज्ञेयम्।

4. उपात्तार्थेषु 'अभिनिष्टानः, अभीषुणः—' इत्यादीनां यथासम्भवमन्तर्भावो ज्ञेयः। 'अभिनिष्टानः' इत्यत्र, 'अभिनिसः स्तनः शब्दसंज्ञायाम्' (8-3-86) इति षत्वम्।

5. इगन्तत्वेन, 'इकः सुञि' (6-3-134) इति अभेः दीर्घे, 'सुञः' (8-3-107) इति षत्वे, 'नश्च धातुस्थोरुषुभ्यः' (8-4-27) इति णत्वे च 'अभीषुणः' इति सम्पद्यते।

(96)

"अभीक्ष्णम् पौनःपुन्यसातत्ययोः' (स्व.)

पौनःपुन्यम् = भृशम् इत्यर्थः। भृशार्थे यथा— '**अभीक्ष्ण**-मुष्णैरपि तस्य सोष्मणः —।' (माघे 1-65)।

सातत्ये—'**अभीक्ष्ण**मास्फालयतीव(भ) कुम्भम् —।' (ग-र-म)। अत्र शब्दकल्पद्रुमे, अभिपूर्वकात् क्ष्णुधातोर्डमुप्रत्यये पृषोदरादित्वेन (6-3-109) 'अभि' इत्यस्य दीर्घे, स्वरादित्वेन (1-1-37) अव्ययत्वे च 'अभीक्ष्णम्, इति सिद्ध्यति इति प्रतिपादितम्। एतादृशानामव्ययानां स्वरादिषु (1-1-37), चादिषु (1-4-57) वा स्वरूपतो निपातनमेव शाब्दिकसम्मतम्। लक्षणलब्धा-न्यव्ययानि त्रिप्रकाराण्येव। तदुक्तं **धर्मकीर्तिना**— "लक्षणलब्धानि त्रेधा भवन्ति—अव्ययीभाव – कृदन्त – तद्धितान्तभेदेन। अव्ययीभावाव्ययानि यथा—'मध्येगङ्गम्' इत्यादीनि। कृदन्ताव्ययानि तुमुन्—क्त्वा—ल्यप् — णमुल् — प्रत्ययान्तानि ......। तद्धितान्ताव्ययानि —आम् ..........।" इति (**रूपावतारे**—अव्ययावतारः पु- 128—129)। एतेन '**अभीक्ष्णम्**' इत्यादिकानां व्युत्पत्तिप्रदर्शनं व्युत्पत्तिपक्षे रूपनि-ष्पादनप्रक्रियाज्ञापनार्थमेवेति मन्तव्यम्। 'आयनेयी—' (7-1-2) सूत्र-भाष्यरीत्या **पाणिन्यादिनां** परमर्षीणाम् अव्युत्पत्तिपक्षस्य प्रामाणिकत्वात् अस्माभिः एतादृशस्थलेषु व्युत्पत्तिरुत्तरत्र न प्रदिदर्शयिषितेति ज्ञेयम्। 'च, वा, हि' इत्यादीनामपि **शाकटायन**मतरीत्या **भानुजीदीक्षित**-प्रभृतिभिः व्युत्पत्तिरमरव्याख्यासु प्रदर्शिता। तादृशेष्वपि निरुक्तदिशा वयमौदासीन्यमेव वहाम इत्यपि ज्ञेयम्।

(97)

"अमा रहस्समवायसंयोगसामर्थ्येषु" (स्व. ग. चा.)

रहसि—[1]अमात्यः, '....उप्पंकृतोऽर्चिषि वशेकृद् [2]अमा-कृदास्ते'। (ग. र. म. पु. 140) समवाये—[3]अमावास्या। संयोगे—'यद्यमा[4] रविवारेण'। सामर्थ्ये—[5]अमाकृत्य॥ ऐक्येऽपि तिलकेनोदाहृतम्—'सहभूत्वा आसनम्=अमासनम्।' इति। एवम्, 'काम-

---

1. रहः=एकक्रियायोगः। अमा=अन्तिके भवतीति अमात्यः=मन्त्री। 'अमेहक्कतसित्रेभ्य एव' (वा. 4-2-104) इति भवार्थे त्यप् प्रत्ययः।

2. गणरत्नमहोदधौ साक्षात्प्रभृतिषु (1-4-74) पाठोऽस्याङ्गीकृतः। तेन कृञो योगे गतिसंज्ञायाम्, 'कुगतिप्रादयः' (2-2-18) इति समासे, रूपमेवम्।

3. समवायः=सहावस्थानम्। अमा=सह वसतश्चन्द्रसूर्यौ इति अमावस्या, अमावास्या वा। 'अमावस्यद् अन्यतरस्याम्' (3-1-122) इति निपातनात्अमापूर्वस्य वसेर्ण्यति पाक्षिको वृद्धिनिषेधः। अमावास्या=दर्शः।

4. संयोगः=सम्पर्कः। अत्र रविवारेण तिथिविशेषस्य यदि संयोग इत्यर्थः। केचित्तु अमाशब्दं स्त्रीलिङ्गं मत्वाऽत्र तस्य प्रथमैकवचने रूपमेवमाहुः।

5. अनमा अमा कृत्वा=अमाकृत्य। 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' (वा. 1-4-74) इति वार्तिकात् अभूततद्भावरूपार्थे साक्षात्प्रभृतिगणे पठितानां कृञ्योगे वृत्तिरिति ज्ञेयम्। अत्र पूर्वमसमर्थोऽधुना समर्थो भवतीत्यर्थः।

श्चरताम् **अमा** भूते—' (ऋक् 2-38-6) इत्यत्र, '**अमा**=गृहम्' इति **सायणीये** विवृतत्वात् गृहमित्यप्यर्थोऽस्य प्रकरणादिवशादिति ज्ञायते। "**अमातो** मरुतोऽपि आन्तरिक्षदमायुतः" (ऋक्. 5-50-58) इत्यत्र '**अमातः**=अस्माल्लोकात्।' इति **वेदभाष्ये** विवृतत्वात् इहलोकार्थकत्वमप्यस्येति **वाचस्पत्य** उक्तम्।

अस्यैव [1]तिथिविशेषे, षोडशांशकलायां च विवक्षिते सति स्त्रीलिङ्गता। न तदानीमव्ययत्वम्।

(98)

"अमु" (स्व.)

एतदन्तमव्ययमिति ज्ञेयम्। च्छन्दस्येवायम्। 'प्रतरं [2]दधानाः—' (ऋक्. 10-18-2)।

---

1. 'अमायां तु सदा सोम ओषधीः प्रतिपद्यते।' इति वचनं वाचस्पत्ये उपात्तमिहावधेयम्।

2. 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यत्र वार्तिककारैः 'अम्-आम्—' इति परिगणितेष्वयमपि प्रत्यय एकः। अत्र मकारोत्तर उकारः उच्चारणैकप्रयोजनः सन् इत्संज्ञां लब्ध्वा लुप्यति। प्रयोगे 'अम्' इत्यस्यैव श्रवणम्। स्वरादिषु पाठाद्वा अव्ययत्वमिति ज्ञेयम्। 'अमु च च्छन्दसि' (5-4-12) इति सूत्रेण (किंशब्दात् एकारान्तात् तिङन्तात् अव्ययेभ्यश्च परतो विहितात् घात् = तरप्-तमप्प्रत्ययात् च्छन्दसि विषये अमुप्रत्ययो भवतीति प्रकृतसूत्रार्थः) 'प्रतरम्' इत्यत्र तरबन्तात् अमुप्रत्यये रूपमेवम्। "किंतरम्—किंतमम्, पूर्वाह्णेतरम्—पूर्वाह्णेतमम्, पचतितरम्—पचतितमम्, उच्चैस्तरम्-उच्चैस्तमम्" इत्यादिष्वपि एवमेव निष्पत्तिः, अमुप्रत्ययोपपत्तिश्च यथासम्भवं ज्ञेया। उदाहरणान्यपि च्छान्दसान्येवोह्यानि।

(99)

## "अमुत्र भवान्तरे" (स्व. त.)

देशान्तरेऽपि केचित्। भवान्तरे—'अनेनैवार्भकाः सर्वे नगरे-[1]ऽमुत्र भक्षिताः ।' (कथासरित्सागरे) 'अमुत्र भविता यस्ते तच्चिन्तय शुभाशुभम्।' अमुत्र=जन्मान्तरे इत्यत्रार्थः। देशान्तरे तु—'इहामुत्रफलभोगविरागः' इत्यादिषु यथा। अमुत्र=परदेशे इत्यर्थः। आम्रलिपकः।

(100)

## "अमुथा" (स्व. त.)

अदश्शब्दात् प्रकारार्थे [2]थाल्प्रत्यये उत्वमत्वयोश्चैवं सम्पद्यते अमुथा=अमुना प्रकारेणेत्यर्थः। तद्धितान्ताव्ययमिदम्।

(101)

## "अमुया" (स्व.)

'इत्थम्, तेन प्रकारेण, एवम्' इत्याद्यर्थेषु पदमिदमव्ययमिति[3]केचित्। 'नदं न भिन्नममुया शयानम्—(ऋक्. 1-32-8), पुराणाननुवेनन्तं चरन्तं

---

1. 'अदस्' शब्दात् सप्तम्यर्थे त्रल्प्रत्यये, 'अदसोऽसेर्दादु दो मः' (8-2-80) इत्युत्वमत्वयोश्च रूपमेवम्। असर्वविभक्तितद्धितान्तत्वात्, स्वरादिपाठाद् वा अव्ययत्वमिति ज्ञेयम्। एवमेव 'अमुतः' इत्यत्रापि अमुष्मादित्यर्थे (पञ्चम्यर्थे) तसि प्रत्यये 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययत्वं ज्ञेयम्।
2. अदश्शब्दस्य सर्वनामसंज्ञकत्वात्, 'प्रकारवचने थाल्' (5-3-23) इति थाल्प्रत्ययः।
3. 'ऋक्सूक्तवैजयन्ती' नामके ग्रन्थे 480 - पुटे द्रष्टव्यम्।

पापयाऽमुया ।' (ऋक्. 10-135-2) इत्यादिषु [1]सप्तम्यर्थे च्छान्दसत्वेनैतादृशरूपसाधनस्य **सायणीये** दृश्यमानत्वात् अव्ययत्वमस्य चिन्त्यमिति ज्ञेयम् ।

(102)

"अमुषा" (चा.)

मिथ्याभिन्ने सत्ये वर्ततेऽयम् । 'यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।' (शतपथब्राह्मणे 14-6 ; 9-30) ।

(103)

"अम्" (कु. स्व.)

शीघ्रता, अल्पम्, इति चास्यार्थतया **शब्दकल्पद्रुमे** प्रतिपादितम् । स्वरादिषु 'अम्' इति पाठादव्ययत्वमस्य । अल्पार्थकत्वमस्य **व्याडिप्रोक्त**मिति च तत्रैव प्रत्यपादि ।

(104)

"अम्नः शीघ्रसाम्प्रतिकयोः" (स्व.)

शीघ्रे—**अम्न** एव गच्छति । साम्प्रतिके—[2]**अम्नरेवागच्छति, अम्न** एव ।

---

1. अदस्शब्दात् 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' (7-1-39) इत्यनेन सप्तम्या याजादेशः अत्रेति ज्ञेयम् ।
2. 'अम्नरूधरवरित्युभयथा छन्दसि' (8-2-70) इति छन्दसि रुत्वविकल्पः ।

(105)

"अम्महे आश्चर्ये सन्तोषे च" (स्व.)

[1]'अम्महे पुत्रस्य मे विजयघोषणा वर्तते।' (प्रतिमानाटके 7 अङ्के)।

(106)

"अया" (स्व.)

अनेन प्रकारेण—इत्यर्थेऽव्ययमेतत्। '—शुचि प्रतीकं तम् अया धिया गृणे॥' (ऋ. 1-143-6) इत्यत्र यथा। स्वरादेराकृतिगणत्वेनाव्ययत्वमिति ज्ञेयम्।

(107)

"अयाः" (स्व.)

एतीति [2]अयाः=वह्निः। 'इण आसिः' (दशपाद्युणादिः 9-81) इत्यासिप्रत्यये, स्वरादिषु पाठादव्ययत्वम्।

---

1. भासकृते प्रतिमानाटके सप्तमाङ्के (पु. 130) 'अम्महे' इति प्रयुक्तम्। अत्र महामहोपाध्यायैः गणपतिशास्त्रिवर्यैः, 'अम्महे इत्याश्चर्ये, सन्तोषे च' इति व्याख्यातम्। तदनुसारेणास्माभिरिदमव्ययं स्वरादीनामाकृतिगणत्वेनोल्लिखितमिति ज्ञेयम्।

2. सिद्धान्तकौमुद्यां प्रदर्शितोऽर्थोऽयम्। दशपाद्युणादिवृत्तौ तु 'कामः, आदित्यो वा' इत्यर्थनिर्देशः कृतः।

(108)

**" अयि सम्बोधनानुनययोः "** (च.

प्रश्नानुरागादिष्वपि दृश्यते ।

सम्बोधने—' [1]**अयि** विजहीहि दृढोपगूहनम्— ।'

अनुनये—'**अयि** घनोरु ! पदानि शनैः शनैः' (वेणीसंहारे) ।
'**अयि** साहसकारिणि— ' (रत्नावली)

प्रश्ने—'**अयि** कठोर यशः किल ते प्रियम् ? ।'

अनुरागे—'**अयि** जीवितनाथ जीवसि—' (कुमारसम्भवे 4-3)

अनुराग एव प्रणयकोपरूपाह्वानमिति **निपाताव्ययोपसर्गवृत्तिः** ।

(109)

**" अये कोपविषादसम्भ्रमस्मरणेषु "** (च.)

कोपे—**अये** कोऽयम् ? ॥ विषादे—**अये** श्रान्ताः स्मः ॥ सम्भ्रमे—**अये** धावत ! धावत !! ॥ स्मरणे—'**अये** रामो दाशरथिः—' ॥ " कोमलामन्त्रणे—'**अये** कान्ते मुग्धे चटुलनयने चन्द्रवदने' इत्युद्भटः इति शब्दकल्पद्रुमः ।

---

1. इदं महाभाष्ये 'व्यक्तवाचां समुच्चारणे' (1-3-48) इत्यत्रोदाहृतं वाक्यम् ।

## (110)

### " अरं शीघ्रे " (स्व.)

पर्याप्त्यादिषु अलमिति वक्ष्यमाणस्याव्ययस्यार्थेष्वव्ययमिदमिति व्याख्यातारः। शीघ्रे—[1]'अरं गच्छति घोटकः'। 'तस्मा अरं गमावः' (यजुः 1-1-52)। पर्याप्तौ—'उरुधारामरङ्कृतम्—' (ऋ. 8-1-10)।

भूषणे—'त्वमग्ने द्रविणोदा अरङ्कृते—' (ऋ. 2-1-60)। 'समुचितरीत्या, इत्यर्थेऽपि वेदेष्वयं प्रयुक्तः। तद् यथा—'प्रयाम् इष्वयोऽरमस्तु-वन्तु।' (ऋक् 6-74-1) इत्यादिषु।

## (111)

### " अरे हीनसम्बोधने " (च.)

'हीनानां सावक्षेपे सम्बोधने' इति क्षीरस्वामी। अपकृतिः, असूया चास्यार्थौ - इति मेदिनी। 'अपाकृतिः' इति शब्दकल्पद्रुमः। 'न वा अरे पत्युः कामाय—' (बृहदारण्यकोपनिषत् 6-5-6) इत्यादिषु याज्ञवल्क्यं

---

1. 'कपिलकादीनां संज्ञाच्छन्दसोः' (वा. 8-2-18) इति वचनेनात्र लत्वविकल्पः। एवञ्च 'अलम्' इत्यस्यैव पाक्षिकं रूपमेतदिति ज्ञेयम्।

(111)

प्रति मैत्रेय्या अनुगुणत्वात् नीचत्वमिति ज्ञेयम् । 'आत्मा वा अरे द्रष्टव्यः' इत्यादिषु आत्मेतरज्ञानापाकरणतात्पर्यात् अपाकरणमर्थः । असूयायाम्— 'अरे चेट !'। प्रकरणानुरोधेन रोषाह्वानादिरप्यस्यार्थतया बोध्यः।

(112)

"अरेरे अधमसम्बोधने" (स्व. चा.)

'अरे' इत्यव्ययस्य 'नित्यवीप्सयोः' (8-1-4) इति वीप्सायां द्विर्वचने 'एङः पदान्तादति' (6-1-109) इति पूर्वरूपे च रूपमेवम् ।

'अरेरे' इति सावक्षेपे सम्बोधने पठन्त्यार्याः—इति **तिलकः**। अधमसम्बोधने— "अरेरे राधागर्भसम्भूत। सूतापसद ! किमेवमाक्षिपसि ?" (वेणीसंहारे)। सावक्षेपे सम्बोधने—अरेरे वाचाट। (वेणीसंहार एव)। प्रकरणवशाद्विस्मयादिष्वपि क्वचिदस्य प्रयोगः। तद् यथा 'अरेरे बालकः।' इति। एवं प्रकरणानुरोधेनास्यापि बहवोऽर्थाः नाटकेषु प्रतीयन्ते।

(113)

"अर्थतः" (आद्यादिः, तः)

अर्थेन, अर्थात्, अर्थे इत्यर्थेषु आद्यादित्वात् (वा. 5-4-44) सार्वविभक्तिके तसिप्रत्यये रूपमेवम्। असर्वविभक्तितद्धितत्वादव्ययत्वम्।

'दुष्टः शब्दः **स्वरतो वर्णतो** वा — (पाणिनिशिक्षा 52) इत्यादिषु **'स्वरतः वर्णतः'** इत्यादीनां तृतीयार्थकत्वसम्पादनार्थम् सार्वविभक्तिकतसिप्रकरणे एतादृशानामाद्यादिपाठपरिकल्पनदर्शनादस्यापि तेनैव मार्गेण तसिप्रत्ययान्तत्वमिति ज्ञेयम्। तृतीयान्तार्थे यथा—'**अर्थतः** शब्दतो वाऽपि मनाक् काव्यार्थसूचनम्।' इति।

(114)

## "अर्थे सार्थके सप्रयोजने च" (सा. ग. नि.)

सार्थके—'[1]अर्थेकृत्य श्लोकं पठति।' सार्थकं कृत्वेत्यर्थः। सप्रयोजने—'आस्थाकृताः कृतनमस्कृतयोऽर्थम**र्थेकृत्य** व्रती च नृपती च नृपस्य जग्मुः॥ (छित्तपस्य श्लोकोऽयमिति **गणरत्ने** (पु. 140)। साक्षात्प्रभृतिषु (1-4-74) गणे पाठात् अर्थशब्दसप्तम्यन्तप्रतिरूपकमव्ययमिदमिति **न्यासकारादयः**। **शब्दकौस्तुभे**ऽप्येवमेव। **गणरत्नमहोदधि**-प्रभृतिषु गणपाठसामर्थ्यादेजन्तत्वमिति प्रथमतः प्रसाध्य, पुनस्तत्रैव (ग. र. म.) 'अथवा, एते सप्तमीप्रतिरूपका........निपाताः'इत्यप्युक्तम्। साक्षात्-प्रभृतिगणे पठितानां शब्दस्वरूपाणां कृञो योग एव विकल्पेन गतिसंज्ञा। तेन गतिसंज्ञापक्षे, कृञः क्त्वाप्रत्यये, 'कुगतिप्रादयः' (2-2-18) इति

---

1, 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' (वा. 1-4-74) इति च्व्यर्थे—अभूततद्भावार्थे एवास्य प्रयोग इति ज्ञेयम्। अतएव, अनर्थकं सार्थकं कृत्वा (पठति) अर्थेकृत्य पठति इति वृत्तिरिहेति ज्ञेयम्। सम्पाठवत् (संहिताध्ययनवत्) अर्थरहितानुपूर्वीपाठं न करोति, किन्तु अर्थानुसंधानेन सह पठतीति पर्यवसितोऽर्थः।

समासे, क्त्वायाः, 'समासेऽनञ्पूर्वे—' (7-1-37) इति ल्यप्। एतत्पक्षे चादिषु (1-4-57) अस्य पाठ उन्नेयः। गतिसंज्ञाभावपक्षे समासाभावात् न ल्यबादेशः। तेन **अर्थे कृत्वा** इत्यपि पक्षे साधुः।

(115)

"**अर्वाक् अधरे**" (स्व.)

**अर्वाक्** पूर्वे। इति **क्षीरस्वामी**।

**अधरे**—अधरदेशे, अधरकाले चेत्यर्थः।

काले यथा—वर्षात् षोडशाद**र्वाक्**[1]। **अर्वाक्**कालिकः। 'कथं वाऽऽदीयतामर्वाक् मुनिना धर्मरोधिनी।' (किरातार्जुनीये 11-76) देशे यथा—'**अर्वा**ग्बिलो ऊर्ध्वबुध्नश्चमसः' (बृहदारण्यकोपनिषत् 4-1)।

'त्रिचक्रेण सुवृता यातम् **अर्वाक्**।' (ऋक्. 1-118-2) इत्यादिषु स्थलेषु 'अत्र देशे' इत्यप्यस्यार्थो दृश्यते। एवं मध्यार्थेऽप्यस्य क्वचिद्वृत्तिरिति **वाचस्पत्ये** निरूपितम्। तत्र प्रयोगोऽन्वेष्टव्यः। स्वरादीनामपि निपातवत् बह्वर्थकत्वस्य **शाब्दिकै**रङ्गीकारादनेकार्थकत्वमेतेषामिति ज्ञेयम्।

---

1. अधरे अञ्चतीत्यर्थे, 'ऋत्विग्दधृक् स्रग् दिगुष्णिगञ्चुयुजिक्रुञ्चां च' (3-2-59) इति क्विन्प्रत्यये, अधरशब्दस्य पृषोदरादित्वेन (6-3-109) अर्वादेशे स्वरादिपाठादव्ययत्वे च रूपमेवम्। केचित् 'अर्वाच्' इति चकारान्तममुं पठन्ति। तत्पक्षे अव्युत्पन्नमिदं शब्दस्वरूपमिति बोध्यम्।

(116)

"अलं भूषणपर्याप्तिशक्तिवारणनिषेधेषु" (चा. ग.)

भूषणे— [1]अलंकारः। अलंकृत्य।

पर्याप्तौ—अलमस्त्यस्य धनम्। पर्याप्तमस्तीत्यर्थः। 'राक्षस्यो रावणप्रीत्यै क्रूरं चोचुरलं[2]मुहुः। (भ. का. 8-97)।

शक्तौ— [3]अलं मल्लो मल्लाय। मल्लोऽयं मल्लान्तरेण साकं योद्धुं शक्त इत्यर्थः। 'अन्यथा प्रातराशाय कुर्याम त्वाम् अलं[4]वयम्॥' (भ. का. 8-98)।

वारणे— 'अलं महीपाल तव श्रमेण—।' (रघुवंशे 2-34)।

---

1. 'भूषणेऽलम्' (1-4-64) इति गतिसंज्ञा। तेन अलंकृत्य इत्यत्र 'कुगतिप्रादयः' (2-2-18) इति समासे ल्यप्। अलंकारः= भोजनमपि। अत्र अलं=पर्याप्तं क्रियतेऽनेनेति वृत्तिः। भूषणवत् अलंकरणात् शब्दार्थालङ्कारा अप्येवमुच्यन्ते।

2. अत्र पर्याप्तिरर्थः। 'तुमर्थाच्च भाववचनात्' (2-3-15) इति रावणप्रीत्यै इत्यत्र चतुर्थी।

3. निपातान्यथोपसर्गवृत्तौ तु पर्याप्त्यर्थोदाहरणत्वेनेदमुदाहृतम्। तदानीं मल्लो मल्ला (न्तरा) य पर्याप्त इत्यर्थः।

4. 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' (2-3-16) इति चतुर्थी। अत्र सूत्रेऽलमिति पर्याप्त्यर्थस्य तत्पर्यायाणां च ग्रहणम् इति सिद्धान्त-कौमुदी। तेन 'दैत्येभ्यो हरिरलम्' इतिवत् 'दैत्येभ्यो हरिः प्रभुः, शक्तः, समर्थः' इत्यपि साधुरिति बोध्यम्।

[1]निषेधे—‘आलप्यालम् इदं बभ्रोर्यः स दारान् अपाहरत्।’ (माघे 2-40)। अलं[2]कृत्वा।

‘[3]निरर्थकत्वे, अस्त्यर्थे, अवधारणे, च’ इति **वाचस्पत्ये**। ‘विजयायेत्यलमन्वशान्मुनिर्माम्।’ (किरातार्जुनीये 13-13) इत्यत्र ‘अलम्=भृशम्’ इति **मल्लिनाथ**विवरणात् भूयोऽर्थकत्वमप्यस्येति बोध्यम्।

(117)

‘अले, **अलेले** पिशाचभाषया सम्बोधने।’

इति **शब्दरत्नावली**, इति **शब्दकल्पद्रुमः**।

‘अले सर्वज्ञो बुद्ध इति कथं त्वया ज्ञातम्?।’ इति (**प्रबोधचन्द्रोदये** [3] अङ्के) प्रयोगो दृश्यते।

---

1. वारणमपि यद्यपि निषेध एव पर्यवस्यति, तथापि ईषद्भेदमवलम्ब्य भिन्नार्थकत्वम् इति ज्ञेयम्।

2. ‘अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा’ (3-4-17) इति क्त्वाप्रत्ययः। अत्र ‘प्राचां’-ग्रहणं पूजार्थम्; तेन नित्यं क्त्वाप्रत्ययः। ‘अमैवाव्ययेन’ (22-20) इति नियमान्नोपपदसमासः।

3. ‘अलम्पशुः’ इत्यत्र ‘निरर्थः पशुः’ इति वाचस्पत्यविवरणमिहानुसन्धेयम्। अयं भावः—अलम्पशुः=यज्ञीयः पशुः। तस्य केवलं याग एवोपयोगात्, तदीयक्षीरादीनामनुपयोगात् निरर्थः पशुरित्याख्यायते इति।

(118)

"अव क्रोधे वोधरोधे धैर्यालम्बनभूषणे ।
न्यग्भावाभिभवादानभोजने श्लेषधर्षणे ॥
दर्पैकाग्र्यक्लृप्तिसेवाप्रहासालोकशुद्धिषु ।
अनुत्साहप्रसाराज्ञात्वेलासंहतिखण्डने ॥
सामीप्येषद्व्याप्तिदेशादशाऽऽशङ्कनमिश्रणे ।"

(उ. ग. क. उपसर्गप्रतिरूपकम्)

क्रोधे—अवख्याति । बोधे—[1]अवगतिः ॥ रोधे—[2]अवग्रहः । अवग्राहः । धैर्ये—[3]अवष्टम्भः । आलम्बने—अवलम्बः । भूषणे—अवतंसः ॥ न्यग्भावे—अवाङ् ॥ अभिभवे—अवजानाति, अवमानः, अवक्षेपः ॥ आदाने—अवचिनोति, अवलुम्पति । भोजने—[4]अवष्वणति, अवदंशः ॥ श्लेषे—अवगूहनम् ॥ धर्षणे—अवस्कन्दति, अवमर्दः ॥ दर्पे—अवलेपः । ऐकाग्र्ये—अवधानम्, अवधारणम् ॥ क्लृप्तौ—अवसायः, अवक्रयः ॥ सेवायाम्—अवलगति, अवसज्यते ॥ प्रहासे—अवहेलना, अवस्तनोति ॥ आलोके—अवलोकयति ॥ शुद्धौ—अवदातम् ॥ अनुत्साहे—

---

1. गत्यर्थानां ज्ञानार्थकत्वात् अत्रावपूर्वो गतिर्बोधे वर्तते । 'कश्चित् तमनुवर्तते ।' इति वचनात् धात्वर्थानुगमोऽत्र ।
2. 'अवे ग्रहो वर्षप्रतिबन्धे' (3-3-51) इति विभाषा घञ्। पक्षेऽप् ।
3. 'अवाच्चालम्बनाविदूर्ययोः' (8-3-68) इति आलम्बने = धैर्येऽर्थे स्तम्भधातोः षत्वं ज्ञेयम् ।
4. 'वेश्च स्वनो भोजने' (8-3-69) इति अवपूर्वकस्य स्वनधातोः षत्वं भोजनार्थे ।

अवसीदति ॥ प्रसारे—अवकर्षः । आज्ञायाम्—अवसर्गः ॥ वेलायाम्—अवसरः ॥ संहतौ—स्थाली प्रस्थम् अवहरति ॥ खण्डने—अवद्यति ॥ सामीप्ये—[1]अवष्टब्धे शेते । अविदूर इत्यर्थः ॥ ईषदर्थे—शुना अवलीढा नदी, [2]अवहन्ति । व्याप्तौ—अवकीर्णः पांसुभिः । अवाप्तोऽर्थः ॥ देशे अवकाशः, [3]अवस्करः (वर्चस्को देश इत्यर्थः) । दशायाम्—[4]अवस्था अवतिष्ठमानः; आशङ्कने—अवदिशति वैद्यो ज्वरेन ॥ मिश्रणे—मांसं काशेन अवदधाति ॥

हान्यादिषु निम्नभावे च वर्तते । तद् यथा, हानौ—अवपुष्पः तरुः, [5]अवकोकिलः । वचने [6]अवगिरते, अववादः । 'वचन-क्रियाकृशादि-

---

1. सामीप्यार्थेऽपि, 'अवाच्चालम्बनाविदूर्ययोः' (8-3-68) इति अवपूर्वस्य स्तम्भतेः षत्वम् ।

2. अवहन्ति = तुषाद्यपनोदनोपयोगितया ईषद्धन्ति इत्यर्थः ।

3. 'वर्चस्केऽवस्करः' (6-1-148) इति निपातनात् सुडागमोऽत्र । अवस्करः = अन्नमलम् । अन्यत्र अवकरः ।

4. 'आतश्चोपसर्गे' (3.3-106) इति अङ् । अवतिष्ठमानः इत्यत्र 'समवप्रविभ्यः स्थः' (1-3-22) इति तङ् ।

5. 'अवादयः क्रुष्टाद्यर्थे तृतीयया' (वा. 2-2-18) इति समासः । अवक्रुष्टः कोकिलेन अवकोकिलः ।

6 'अवाद् ग्रः' (1-3-51) इति गिरतेरात्मनेपदम् । अत्र 'गृणातिरवपूर्वो न प्रयुज्यत एव' इति भाष्यात् गृधातोः क्रैयादिकस्य न ग्रहणम् । अवगिरते = विप्रलापं करोतीत्यर्थः ।

अप्रसिद्धम् ।' इति तिलकः । [1]अवकटम्-अवकुटारः । [2]अवटीटम्-अवनाटम्-अवभ्रटम् । [3]वगाहः-अवगाहः । [4]अप(व)स्किरमाणो वृषभो हृष्टः । अवकरः ।

---

1. 'अवात् कुटारच्च' (5-2-30) इति 'अव' इत्यस्मात् कटच्प्रत्ययः। कुटारच्प्रत्ययश्च स्वार्थे। एतौ द्वावपि अवनते प्रसिद्धाविति केचित्।

2. 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' (5-2-31) इति 'अव' इत्यस्मात् संज्ञायां नासिकाविषयके नमने विवक्षिते टीटञ्-नाटञ् भ्रटच्प्रत्ययाः (स्वार्थे) भवन्ति।

3. अत्र, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।' (सि. कौमुद्यां अव्यय-प्रकरणे पठितोऽयं श्लोकः) इति 'अव' इत्यत्राद्याकारस्य लोपः। स च पाक्षिकः, तेन अवगाहः इत्यपि साधुः।

4. अत्र 'अपाच्चतुष्पाच्छकुनिष्वालेखने' (6-1-142) इति सुट्। 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' (वा. 1-3-21) इति शानच् (आत्मनेपदम्)। सूत्रे (6-1-142) 'अवात्' इति इति श्रीकण्ठशास्त्रिभिर्धातुरूपप्रकाशिकायां पाठ आहृतः, स तु चिन्त्यः। 'अपस्किरमाणो वृषो हृष्टः' इत्यत्र हर्षात्पादेनेन विलेखनम्। एवं 'अपस्किरमाणः श्वा आश्रयार्थी' इत्यत्र आश्रयसम्पादनार्थं विलेखनम्। 'अपस्किरमाणः कुक्कुटः' इत्यत्र जीविकामृगयार्थं पादेन आलेखनम्। यथा भवभूतिः (उ. रा. चरित २-९) 'छायापस्किरमाणविष्किरमुख-व्याकृष्टकीटत्वचः' इति सर्वत्राप्यत्र चतुष्पाच्छकुनिकर्तृकत्वात् किरतेः सुट् इति बोध्यम्।

(120)

"अवचक्षे अवख्यातव्यमित्यर्थे" (कृ.)

अवपूर्वकात् 'चक्षिङ् व्यक्तायां वाचि' इत्यस्माद्धातोः **'अवचक्षे'** च' (3-4-15) इति एशप्रत्यये रूपमेवम्। 'अव्ययकृतो भावे' (भाष्ये 3-4-9) इति **भाष्यात्** भावार्थकः प्रत्ययोऽयम्। प्रत्ययस्य शित्त्वेन सार्वधातुकत्वात् ख्याञादेशो न। 'कृन्मेजन्तः' (1-1-39) इति अव्ययत्वम्। 'रिपुणा **नावचक्षे**' (ऋ. 4-58-5) इति प्रयोगः। अवख्यातुमित्यर्थः।

(121)

"अवरस्तात्" (त.)

अधोभागार्थेऽव्ययमिदम्। प्रथमापञ्चमीसप्तमीवृत्तेरवरशब्दात् अस्तातिप्रत्ययः। 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययत्वम्। प्रथमान्ते यथा—**अवरस्तात्** रमणीयम्। पञ्चम्यां यथा—**अवरस्तात्** आगतः। सप्तम्यन्तात्—**अवरस्तात्** वसति।

एवम्, **अवस्तात्** इत्यप्यस्तातिप्रत्ययेऽव्ययं वर्तते। प्रयुज्यते च '**अवस्तात्** स्वर्गं लोकं प्रापयन्तः' (शतपथब्राह्मणे) इति। अत्र 'विभाषाऽवरस्य' (5-3-41) इति विकल्पेन **अवरशब्दस्य** **'अव'** इत्यादेशोऽस्तातिप्रत्यये परत इति विशेषः।

(122)

"अवश्यम् निश्चये" (स्वरादिः)

अवपूर्वकाद् श्यैङ्धातोरौणादिके डमुप्रत्यये, स्वरादिषु पाठादव्ययत्वम्। नञ्पूर्वकाद् वशधातोर्बाहुलकाद् यत्प्रत्ययेऽव्ययसंज्ञेति **शब्दकल्प-**

द्रुमः । निश्चये—'**अवश्यं** यातारश्चिरतरमुषित्वाऽपि विषयाः ।' (भर्तृहरिः 3-13) । अशक्यनिराकरणार्थेऽपि प्रयुज्यते, तद् यथा—'[1]**अवश्यभाविन्यर्थे** वै सन्तापो नेह विद्यते ।' (भारते शान्तिपर्वणि) । [2]**अवश्यपाच्यम्** ।[3] **आवश्यकः** । अनायत्ततायां तु त्रिलिङ्गत्वमस्य यथासम्भवं बोध्यम् ।

(123)

"**अवसे**" (कृ.)

अवधातोः, 'तुमर्थे सेसेनसे असेन्—' (3-4-9) इत्यसेन्प्रत्ययः । एजन्तकृत्त्वादव्ययत्वम् । **अवसे**=अवितुमित्यर्थः । 'आयात्विन्द्रोऽवसे उप—' (यजुः 2-0-47)। छन्दस्येव।

(124)

"**अवस् बहिरित्यर्थे**" (स्व. न.)

**अवो** गच्छति । बहिर्गच्छतीत्यर्थः । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (5-3-39) इति प्रथमापञ्चमीसप्तम्यर्थेषु अवरशब्दादसिप्रत्यये प्रकृतेरवादेशे च रूपमेवम् । असर्वविभक्तितद्धितान्तत्वादव्ययत्वम् । **अवो** रमणीयम्, **अव** आगतः, **अवो** वसति, इति क्रमेण विभक्तित्रयेऽप्युदाहरणम् ।

---

1. अत्र बाहुलकात् कृदन्ते भाविन्शब्दे परे अवश्यमो मकारस्य लोपः ।
2. 'ण्य आवश्यके' इति पचतेः कुत्वनिषेधः । 'लुम्पेदवश्यमः कृत्ये' (वा. 6-3-109) इति अवश्यमो मकारस्य लोपः ।
3. 'अव्ययानां भमात्रे-' (वा. 6-4-144) इति टिलोपः

(125)

"**अविषमम्**" (ति.)

विगतं समम्, विगतत्वं समस्य (इति) वा **विषमम्**, समाद् विप्रकृष्टो हीनो वा देशः इति **केचित्**। न विद्यते विषमो यस्मिन् काले, देशे वा तत् **अविषमम्**। तिष्ठद्गुगणे (2-1-17) पाठादव्ययीभावसमासेऽव्ययत्वम्।

(126)

"**अवे**" (नि.)

हीनानां साक्षेपे आमन्त्रणे निपातोऽयम्। '**अवे** वृषल!' इति प्रयोगः।

**अवेरे** इत्यपि हीनसम्बोधने निपातो वर्तते। वस्तुतोऽयं **अवे**+**अरे** इति निपातद्वयसमुदाय इति बोध्यम्। 'एङः पदान्तादति' (6-1-109) इति पूर्वरूपमत्र। '**अवेरे** चौर!'।

(127)

"**अव्य[धि]थिष्यै**" (कृ.)

**अव्यधिष्यै**=अव्यथ[ध]नाय इत्यर्थः। नञ्पूर्वकाद् 'व्यध(थ)ताडने' (दिवादिः. सक. सेट्.) इत्यस्मात् 'प्रयै रोहिष्यै **अव्यधि(थि)ष्यै**' (3-4-10) इति इष्यैप्रत्ययान्तो निपातितः। एजन्तकृत्त्वात् 'कृन्मेजन्तः' (1-1-39) इति अव्ययत्वम्। तुमुनर्थकोऽयम्। छन्दस्येवास्य प्रयोगः।

(128)

"**असम्प्रति**" (तिष्ठद्गु)

"—'**सम्प्रति**' इति प्रादिसमुदायरूपः शब्दः। स एव नञ्सम्पर्कात् '**असम्प्रति**'—" इति **गणरत्नमहोदधिः**। अयोग्ये काले, अनुपस्थिते काले, अयुक्ते इति च अस्यार्थः। 'यत्रैव संप्रति दध्मो, यत्रैव **असंप्रति**' (शतपथब्राह्मणे)।

अस्यैव स्वार्थिकेऽण्प्रत्यये **असांप्रतम्** इत्यपि भवति। यथा—'विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तु**मसांप्रतम्**।' (कुमारसंभवे 2-55)। **असम्प्रति, असांप्रतम्** इत्युभावपि तिष्ठद्गुगणे (2-1-17) द्रष्टव्यौ। **वर्धमानस्तु** '**असाम्प्रतम्**' इत्येतत् स्वरादित्वेनाङ्गीचकार।

(129)

"**असकृत् पौनःपुन्ये**" (स्व.)

'**सकृत्**' इति सदैकवारार्थयोः स्वरादिषु पठ्यते। तस्यैव नञुपसृष्टात् **असकृत्** इति पुनः स्वरादिषु पाठः। 'एकस्य **सकृच्च**' (5-4-19) इति क्रियाभ्यावृत्तिगणने वर्तमानस्य एकशब्दस्य सुच्प्रत्ययः, प्रकृतेः **सकृत्** इत्यादेशश्च विधीयेते। अत्र क्रियाभ्यावृत्तिरसम्भवान्न गम्यते। अस्य च कृत्वसुच्प्रत्ययापवादत्वं बोध्यम्। 'कृत्वोऽर्थाः' (वा॰ 1-1-38) इति **वार्तिके** कृत्वोऽर्थप्रत्ययानां परिगणितत्वात्, 'तद्धितश्चासर्वविभक्तिः' (1-1-38), इति अव्ययसंज्ञा। '**असकृदेकरथेन तरस्विना**—' इति **रघुः** (9-23)।

(130)

"असामि" (चा.)

पूर्णतया इत्यर्थः। '**सामि**' इत्येतदर्धार्थकमव्ययम्, तस्यैव नञ्तत्पुरुषे रूपमेवम्। अव्ययत्वनिबन्धनानां सर्वेषामपि कार्याणां सम्पादनाय स्वरादिषु पाठः। 'उत यो मनुष्येषु आ यशश्चक्रे **असामि** आ।' (ऋक् 1-25-15)

एवं **असाक्षात्** इत्यस्यापि '**साक्षात्**' इत्यस्य विपरीतार्थे चादिपाठादव्ययत्वं बोध्यम्।

अत्रेदमवधेयम्—**शब्दकल्पद्रुम - वाचस्पत्यादिषु** कोशेषु सर्वेषामप्यव्ययानां नञ्समासे निदर्शितया रीत्या पुनः पृथगव्ययत्वं चादिषु स्वरादिषु वा पाठपरिकल्पनेनोदाहरणप्रदर्शनपुरस्सरं पाठो लक्ष्यते। अस्माभिस्तु विस्तरभिया तत्तदव्ययानां स्वरूपमात्रप्रदर्शने ऐदम्पर्येण तेषामत्रोपादानमनादृतम्—इति।

(131)

"असि" (तिङन्तप्रतिरूपकम्)

'त्वम्' इत्यर्थे, वाक्यालङ्कारे चैतदव्ययं चादिषु द्रष्टव्यम्। 'अस भुवि' इत्यस्य धातोर्लटि मध्यमपुरुषैकवचने '**असि**' इति सम्पद्यते। तस्य प्रतिरूपकमेतदिति बोध्यम्। **भोजस्तु** 'युष्मदर्थानुवादे' इत्याह। त्वमर्थे—'बाल्यादमित्रमस्यासि—'। अत्र '**असि**' इति त्वमर्थे प्रयुक्तम्। वाक्यालङ्कारे—'वेत्स्यसि पार्थिव! त्वमसि सत्यमभ्यथाः।' इति। अत्र 'त्वम्' इति प्रयुक्तत्वात् पुनरसि इति वाक्यालङ्कार एव। वाक्यालङ्कारत्वं

नाम––क्षोदे कृतेऽर्थशून्यत्वमेव। 'शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक!।' इत्यत्र तु कथंचिद्युष्मदर्थकत्वम्। केचित्तु एकेन 'असि' इति प्रयोगेणैव त्वमित्यर्थे, अथवा क्रियायाश्च लाभे सति, असि इति त्रिः प्रयोगोऽत्रापि वाक्यालङ्कार एवेत्याहुः।

(132)

"असे"

एतदन्तमव्ययं स्यात्। तुमुनर्थकोऽयं प्रत्ययः छन्दस्येव प्रयुज्यते। एजन्तकृत्त्वादव्ययत्वम्। 'क्रत्वे दक्षाय जीवसे' (ऋक्. 1-36-14) जीवसे = जीवितुमित्यर्थः॥ छन्दस्येव।

एवं 'असेन्' इति प्रत्ययान्तमप्यव्ययसंज्ञकं बोध्यम्। प्रत्ययस्य नित्त्वात्, 'ञ्नित्यादिर्नित्यम्' (6-1-197) इति स्वरविशेषः (आद्युदात्तः) प्रकृतेर्भवति, इति विशेषः।

(133)

"असौ" (साक्षात्)

अदश्शब्दार्थेऽव्ययमिदं साक्षात्प्रभृतिषु (1-4-74) कैश्चित् पठ्यते। 'असौनामायमिदंरूपः' इति शतपथब्राह्मणे प्रयुक्तं च। साक्षात्प्रभृतिषु पठितत्वात् कृञो योगे गतिसंज्ञायाम्, 'कुगतिप्रादयः' (2-2-18) इति समासे ल्यपि असौकृत्य इति भवति। 'अग्नौ' इति पठितस्य एव पाठभेद इति केचित्।

(134)

## "अस्तं शैलविशेषादर्शनयोः" (स्व.)

शैलविशेषवाचकत्वम्— 'अस्तं भास्वान् प्रयातः—' इत्यादिषु ज्ञेयम्। अदर्शने— 'धृतिरस्तमिता रतिश्च्युता—' (रघु॰ 8-65)। [1]**अस्तमती। अस्तमित्यस्यादर्शनमेव** वास्तवार्थः। शैलविशेषार्थकत्वं तु कविसमयसिद्धमेवेति बोध्यम।

(135)

## "अस्ति असृग्धनसत्तासु" (ति. प्र.)

सत्तार्थकस्यासधातोर्लटि तिङन्तप्रतिरूपकमिदं स्वरादिषु पठितमिति बोध्यम्।

असृजि—[2]**आस्तेयं**=चर्मभाजनम्। **अस्ति**कायः।

धने—[3]**अस्तिमान्** चैत्रः। धनीत्यर्थः। आस्तित्वम्।

---

1. अस्तम् अततीति अस्तमतः, गौरादित्वात् (4-1-41) स्त्रियां ङीषि अस्तमती इति सम्पद्यते। अस्तमती=शालपर्णीवृक्षः।

2. अस्तौ भवं आस्तेयम्। "आस्तेयो मद्ः। 'अस्तीति धनार्थकमव्ययम्।' इति रामः।" इति प्रक्रियासर्वस्वम्। 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' (4-3-56) इति भवार्थे ढञ्।

3. 'सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः।' (श्लोकवार्तिकम् 5-2-94) इति मतुप्।

सत्तायाम्—**अस्ति**क्षीरा गौः। (विद्यमानक्षीरेत्यर्थः।) [1]**आस्तिकः**, **आस्तीकः**। 'अतिथिर्बालकश्चैव राजा भार्या तथैव च। **अस्ति** नास्ति न जानन्ति देहि देहि पुनः पुनः॥' (**चाणक्ये**)।

'**अस्ति**सिचोऽपृक्ते' (7-3-97) इत्यत्रापि '**अस्ति**सिचः' इत्यस्य 'विद्यमानसिचः' इति व्याख्यानं **सिद्धान्तकौमुद्यादिषु** दृश्यते। '**अस्त्याह** कालसामान्ये तिङन्तप्रतिरूपकम्' इति **त्रिकाण्डशेषः**।

(136)

"**अस्तु निषेधासूयाङ्गीकारयोः**" (स्व. ति. प्र.)

निषेधे—**अस्तु** साम्ना। **अस्तु**ङ्कारः।

असूयाङ्गीकारे—एव**मस्तु**, को नाम दोषः। असूयापूर्वकोऽङ्गीकारः = **असूयाङ्गीकारः**। **अस**धातोः लोट्प्रथमपुरुषैकवचने रूपमेतम्। तस्य स्वरादिपाठादव्ययत्वम्। अस्य पीडा-प्रतिक्षेप-प्रकर्ष-प्रशंसा—लक्षणादयोऽर्थाः **वाचस्पत्ये** प्रतिपादिताः। उदाहरणानि यथासम्भवमूह्यानि। **वाङ्मयार्णवे**ऽपि "**अस्तु** स्यादभ्यनुज्ञानेऽप्यसूयापीडयोरपि। प्रतिक्षेपे प्रशंसायां प्रकर्षे लक्षणेऽपि च" इति अस्यार्थाः परिगणिताः।

---

1. 'अस्तिनास्तिदिष्टं मतिः' (4-4-60) इति ठक्। अस्ति परलोकादिकमिति मतिर्यस्य स आस्तिकः। प्रत्ययस्य कित्त्वादादिवृद्धिः। आस्तिक एव आस्तीकः। 'अन्येषामपि दृश्यते' (6-3-137) इति मध्यमवर्णस्य दीर्घः। आस्तीकः = ऋषिविशेषः। अत्र निपाताव्ययोपसर्गवृत्तौ तिलकेनोदाहृतम् 'अस्त्यत्र कश्चिद् पश्यसि विद्वांसम्।' इति। अस्यायमर्थः—अत्र विद्यमानं विद्वांसं पश्यसीति। अव्ययत्वादत्र द्वितीयाविभक्त्यर्थकत्वम् 'अस्ति' इत्यस्येति ज्ञेयम्।

(137)

**" अस्थाने "** (नि. चा.)

न स्थाने **अस्थाने**। 'अकाण्डे' इत्यर्थः। **'कोऽयमस्थाने सम्भ्रमः ?'**। सप्तम्यन्तप्रतिरूपकमव्ययमेतत्।

(138)

**" अस्मत्रा "** (त.)

'अस्मासु' इत्यर्थे अस्मच्छब्दात् तदधीनवचने कृ-भू-अस्तिधातु-योगे 'देये त्रा च' (5-4-55) इति त्राप्रत्ययः। तस्य च असर्वविभक्तितद्धि-तत्वाद् [1]अव्ययत्वम्। **'अस्मत्रा** ते सध्र्यक् [2]**सन्तु'** (ऋक्· 1-1-32)।

(139)

**" अस्मि अस्मदर्थानुवादाहमर्थयोः "** (स्व. ति. प्र.)

**अस्मदर्थे**—'अविद्या[3]**ऽस्मि**तारागद्वेषाभिनिवेशाः' (योगसूत्रे 2-3)।

---

1. गणरत्नमहोदधौ तु 'सुच् कृत्वसुच् त्रा तस् थ दा काम् हि धैधाः—' (श्लो. 12) इत्यत्र 'त्रा' प्रत्ययमुपादाय 'सुजाद्यश्चादिगणे (1-4-57) भवन्ति।' इति प्रतिपादितम्। तेनास्य मते त्राप्रत्य-यस्य निपातत्वेनाव्ययत्वमिति विशेषः।

2. 'व्यवहिताश्च' (1-4-82) इति असधातोः व्यवधानेन छन्दसि प्रयोगः। लोके तु 'अस्मत्रा सन्तु' इति भवेत्, 'ते प्राग्धातोः' (1-4-80) इति नियमात्। (ते=गत्युपसर्गसंज्ञकाः धातोरव्य-वहितं प्राक् प्रयोक्तव्याः इति प्रकृतसूत्रार्थः।)

3. 'अस्मि' इत्यस्य भावः अस्मिता। भावार्थे तल्प्रत्ययः। तदन्तात् टाप्। अत्र तिङन्तप्रतिरूपकत्वात् तल्प्रत्ययस्योपपत्तिः, अन्यथा साक्षात् तिङन्तानां तल्प्रत्ययप्रकृतित्वाभावात् 'अस्मिता' इति न सिद्ध्येदिति बोध्यम्।

अहमर्थे—'त्वा**मस्मि** वच्मि विदुषां समवायोऽत्र तिष्ठति।' (साहित्यदर्पणे) (त्वामहं वच्मीत्यर्थः।)। 'उडुपे**नास्मि** सागरम्॥' (रघुवंशे 1-2) इत्यत्रापि '**अस्मि**' इत्येतदहमर्थकमव्ययमिति **गणरत्नमहोदधौ** प्रतिपादितम्। परं तु **मल्लिनाथ**प्रभृतिभिः '**अस्मि**=भवामि' इत्येव विवृतत्वात् अत्र न तिङन्तप्रतिरूपकमव्ययमिति बोध्यम।

(140)

"**अह क्षेपादेशप्रशंसासु**" (चा.)

क्षेमार्थेऽपि **शाश्वतः**। '**अह** प्रशंसाक्षिपयोर्नियोगे च विनिग्रहे।' इति **वाङ्मयार्णवः**। आचारातिक्रमणेऽपि **केचित्**। 'पूजायाम्' इति **प्रौढमनोरमा**।

क्षेपे—स्वय**मह** अश्वेन याति, गुरुं पदातिं गमयति।

आदेशे—अय**मह** महारण्यं गच्छतु।

प्रशंसायाम्—**अह!** बालो वक्ति। (उत्कृष्टं वक्ति, इत्यर्थः।)

क्षेमे—'अय**मह** जीवतु शाश्वतीः समाः'।

अत्र क्षेप एवाचारातिक्रमः। आदेशनियोगावभिन्नार्थकौ। एवं प्रशंसैव पूजा। "आचारातिशये—'**अत्यह** तदिन्द्रोऽमुच्यत, देवो हि सः' (शतपथब्राह्मणे)" इति **वाचस्पत्यम्**।

(141)

"**अहम्**" (सु. प्र.)

अस्मच्छब्दार्थे, ममकारार्थे च सुबन्तप्रतिरूपकमव्ययमिदं चादिषु द्रष्टव्यम्। [1]अहंयुः, [2]अहन्ता, [3]अहम्मतिः। [4]अहमहमिका।

(142)

"**अहह अद्भुतखेदयोः**" (नि.)

अनुकम्पासन्तोषादिष्वपि दृश्यते।

"अहहेत्यद्भुते खेदे परिक्लेशप्रकर्षयोः।

तथा सम्बोधनार्थेऽपि प्रयुक्तमिदमव्ययम्।" इति **वाङ्मयार्णवः**।

अद्भुते—'अहह महतां निस्सीमानश्चरित्रविभूतयः' (भर्तृहरिः 2-28)।

---

1. 'अहंशुभयोर्युस्' (5-2-140) इति मत्वर्थे युस्प्रत्यये रूपमेवम् अहंयुः=अहंकारवान् 'अहमिति शब्दान्तरमहङ्कारे वर्तते।' इति अत्र (5-2-140) काशिका।

2. अहमो भावोऽहन्ता। अत्रापि सुबन्तप्रतिरूपकाव्ययत्वात् तल्प्रत्ययः: 'अहन्ते! नाहं ते विहरणपदं देशिकगिरः स्वदन्ते नः स्वान्ते सपदि गतसन्देहविषया।।' इति (वेङ्कटनाथीयं) सुभाषितम्।

3. 'अहम्' इति मतिः अहम्मतिः। धातुकाव्ये (1-60) तु 'हम्म गतौ' इत्यस्मात् धातुनिर्देशे श्तिप्प्रत्यये हम्मतिशब्दं निष्पाद्य, न हम्मतिः अहम्मतिः इति गत्यर्थानां ज्ञानार्थकत्वेन साधितम्।

4. अहमहंशब्दोऽस्त्यस्येत्यर्थे वीप्सायां द्वित्वे व्रीह्यादित्वात् (5-2-116) ठन्प्रत्यये च रूपमेवम्।

खेदे—'अहह कष्टमपण्डितता विधेः' (भर्तृहरिः 2-88)।

अनुकम्पायाम्—'अहह निन्द्योऽसि'।
सन्तोषे—'अहह मे भाग्यम्!'॥

"सम्बोधने—'अहह तात! पणस्तव दारुणः।' (महानाटके 1-9) इति शब्दकल्पद्रुमः। प्रकर्षार्थकोऽपि क्वचिदयं दृष्टः। यथा—'अहह महापङ्के पतितोऽसि!' (हितोपदेशे)। यथासम्भवं प्रकरणानुरोधेन बह्वर्थकत्वमस्य बोध्यम्। अह+ह इति निपातद्वयसमुदायोऽयम्।

(143)

"अहहा खेदाद्भुतयोः" (नि.)

'अह+हा' इति निपातद्वयसमुदायोऽयम्। खेदे यथा—'भिक्षित्वाऽपि बुभुक्षिता यद् अहहा........।' (गणरत्नमहोदधौ)।

(144)

"अहहो खेदे" (नि.)

'अहहो चक्षुः कृतघ्नं कियत्॥' अह+हो इति निपातद्वयमिदं समुदितमेतदर्थकमिति ज्ञेयम्।

(145)

"अहे क्षेपवियोगयोः" (नि.)

'अहे राम! घनश्याम! चुम्बामि मुखपङ्कजम्।' (वाचस्पत्ये उपात्तमिदमव्ययम्)।

(146)

### "अहो खेदाद्भुतानुकम्पासन्तोषेषु" (नि.)

खेदे—**अहो** प्रमादः । अद्भुते—**अहो !** आश्चर्यम् । अनुकम्पायाम्—**अहो** निन्द्योऽसि । सन्तोषे— '**अहो** ! भाग्यमहो ! भाग्यमहो ! वयमहो ! वयम् ' ।

सम्बोधनेऽपि । '**अहो** ! बतासि स्पृहणीयवीर्यः—' । '**अहो**[1] अयं बालः पाठकः ' इत्यत्राश्चर्यस्याप्यद्भुतत्वान्नार्थभेदः शङ्कयः । **केचित्** तु इदंप्रथमतया परिदृश्यमानमद्भुतमिति, लोकोत्तरविलक्षणस्वभाववस्तु च आश्चर्यात्त्वहत्वमिति अद्भुताश्चर्ययोः भेदं निरूपयन्ति । '**अहो**' इत्यस्यैव प्राकृतभाषायाम्, '**अह्यो**' इति रूपम् । यथा—'**अह्यो** दासीएपुत्त—' (प्रतिमानाटके अङ्के) इति । अत्र '**अह्यो**' इति सकोपामन्त्रणे इति **केचित्** ।

(147)

### "अहोनुखलुभोः" (नि.)

**अहो, नु, खलु, भोः** इति निपातचतुष्टयसमुदायोऽयम् । नाटकेषु बहुलमेवमेव प्रयुक्तमिदम् । परिक्लेशेऽस्य वृत्तिः । **प्रतिमानाटके** (२ अङ्के) '**अहोतुखलु**' इत्यपि प्रयुज्यते । अत्र **व्याख्याता** '**अहोतुखलु**.... निपातसमुदायोऽयं कष्टे ' इत्युक्तम् । तदपीहावधेयम् । एवम् , **अहोबत** इत्यपि समुदितं प्रयुज्यते ।

---

1. अत्र, 'ओत्' (1-1-15) इति प्रगृह्यसंज्ञायाम्, 'प्लुतप्रगृह्या अचि नित्यम्' (6-1-125) इति प्रकृतिभावः ।

(148)

"अह्नाय शीघ्रार्थे" (चा.)

'अह्नाय सा नियमजं क्लममुत्ससर्ज॥ (कुमारसम्भवे 5-86)।

'अह्नाय देवि! दयते यदसौ मुकुन्दः।' (गोदास्तुतिः)।

(149)

"आ वाक्यस्मरणयोः" (चा.)

वाक्ये—[1]आ! एवं नु मन्यसे। स्मरणे—आ! एवं किल तत्।

अनुकम्पायामपि प्रयुज्यते। यथा—आ देवदत्तो दीनः। समुच्चयो ऽप्यस्यार्थत्वेन मेदिन्यां परिगणितः। यथा— 'देवेभ्यश्च पितृभ्यश्च आ।' इति। अत्र आकारः समुच्चयं, इति केचित्। वस्तुतस्तु-अत्र चकारद्वयेनैव समुच्चयस्य प्रतिपादितत्वात्, 'उक्तार्थानामप्रयोगः' इति भाष्यादिषु असकृदुक्तेन न्यायेन आकारोऽत्र स्तोभार्थक इति युक्तमुत्पश्यामः। (स्तोभः—मन्त्रादिषु केवलं पादपूरणाद्यर्थो वर्णविशेषः।)

(150)

"आईम्" (चादिः)

मन्त्रस्तोभाक्षरमिदम्। अस्य प्रयोगो लोके मृग्यः। मन्त्रशास्त्रेषु यथासम्भवं द्रष्टव्यः।

(151)

"आङ्"

"आङ् आभिमुख्ये करणे ग्रहणे श्लेषधर्षणे।
क्रान्तौ शापाधानकाङ्क्षानिषेधप्रह्वतावधे॥
विस्रम्भेऽभिविधौ बन्धे स्पर्धानिर्देशभूषणे।
सम्प्रदाये पारतन्त्र्ये स्नाने संस्थानदैर्घ्ययोः॥

---

1. अत्र, 'निपात एकाजनाङ्' (1-1-14) इति प्रगृह्यसंज्ञायाम्, 'प्लुतप्रगृह्या अचि नित्यम्' (6-1-125) इति प्रकृतिभावः। '—वाक्यस्मरणयोरङित्॥' (वा. 1-1-14) इति वचनादङिदाकार एष इति ज्ञेयम्। पूर्वं त्वमेवं नैवममंस्थाः, इदानीं त्वेवं मन्यसे इत्यर्थः।

विज्ञानेऽङ्गीकृतौ त्यागे उत्कण्ठाऽऽवृत्तिभोजने ।
स्थानाध्मानश्रमाह्वाननैकट्ये कालयापने ॥
स्पर्शावष्टम्भोपरमे भृशे कृच्छ्रादिकर्मणोः ।" (उ. नि. उ. प्र.)
व्यापृत्यादिष्वपि दृश्यते ।

आभिमुख्ये—आयाति, आगतः। करणे—आचारः। ग्रहणे—आदानम्, आसादयति। श्लेषे-आलिङ्गनम्, आमृशति। कान्तौ-आरोहति, आवृणोति, [1]आक्रमते चन्द्रमाः। शापे-आक्रोशः, आक्षारयति। आध्माने-आवपति, आवानम्। काङ्क्षायाम्-आशास्ते, आशंसनम्। निषेधे-आक्षेपः, आगूरते। प्रह्वतायाम्-आवर्जनम्, 'दोर्दण्डाऽऽञ्चित (आञ्छित) चन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः—, (महावीरचरिते 1-74)। वधे—[2]आलम्भ्यो गौः। विस्रम्भे-आश्वासः। [3]अभिविधौ-आच्छादयति। [4]आकुमारं यशः पाणिनेः,

1. अत्र 'आङ उद्गमने' (1-3-40) इति तङ्। 'ज्योतिरुद्गमन इति वक्तव्यम्' (वा. 1-3-40) इति वचनात् सूर्यचन्द्रादिज्योतिषामुद्गमन एवायं तङिति विशेषः।

2. 'आङो यि' (7-1-65) इति नुमागमोऽत्र। आङ्पूर्वको लभधातुः क्वचित् वधे वर्तते।

3. आ=समन्तात् छादयतीति वृत्तिः। आङोऽत्राभिविधौ क्रियायोगः। "तेन सह अभिविधिः, तेन विना मर्यादा" इति शाब्दिकसमयः।

4. कुमारमभिव्याप्य पाणिनेः यशो वर्तते इत्यर्थः। 'आङ्मर्यादाभिविध्योः' (2-1-13) इति पञ्चम्यन्तेन कुमारशब्देन आङो विकल्पेन समासः। पक्षे 'आ कुमारेभ्यः पाणिनेर्यशः' इति वाक्यमपि साधु। तत्र, 'पञ्चम्यपाऽऽङ्परिभिः' (2-3-10) इति पञ्चमी। समासाभावपक्षे, 'आङ् मर्यादावचने' (1-4-89) इति आङः कर्मप्रवचनीयसंज्ञा। अत्र सूत्रे मर्यादेत्युपलक्षणम्, अभिविध्यर्थस्यापि ग्रहणमिति काशिकादिषु स्पष्टम्।

आकुमारेभ्यः। बन्धे- '[1]करोऽयमामुक्तविवाहकौतुकः' (कुमारसम्भवे ५. ६६); 'आमुञ्चतीवाभरणम्' [रघुवंशे १३-२१] आमुक्तवान् प्रतिसरं भगवान् वसिष्ठः' (रामायणचम्वाम् अयोध्याकाण्डे); आमुक्तमाल्यदा। स्पर्धायाम्-मल्लो मल्लम् [2]आह्वयते। निर्देशे--आज्ञा। [3]भूषणे-आभ्रियते इति आभरणम्। आकल्पः। सम्प्रदाये-आमनन्ति। पारतन्त्र्ये आयत्तः, आहितः। स्नाने-आप्लवते। संस्थाने - आ क्रियते इति आकृतिः। दैर्घ्ये-आयामः-आयतिः = कालदैर्घ्यम्, [4]आयच्छते; आयच्छति रज्जुम्। आहते शिरः, आहन्ति सर्पम्। विज्ञाने-आभाति। अङ्गीकृतौ—आशृणोति गाम। त्यागे-आयोजयति, आश्रावः। उत्कण्ठायाम्—आतनुते प्रियम्। आस्था। आध्यानम्। आवृत्तौ—आवृत्तिः, आसूत्रयति। भोजने—आहारः। स्थाने—आधारः, आकरः। आध्माने—आपूरणम्, आनह्यति। श्रमे—आयासः। आह्वाने—आकारयते, आमन्त्रयति। नैकट्ये—आसन्नः। कालयापने- [5]आगमयस्व तावत् कञ्चित् कालं प्रतीक्षस्व इत्यर्थः। स्पर्शे- 'गामालभ्यार्कमीक्ष्य च' (मनुः 5.87)

---

1. 'धात्वर्थं बाधते कश्चित्' (वाक्यपदीये) इति वचनात् अत्र आङ् धात्वर्थबाधकः। आमुक्तवान्-बद्धवान् इत्यर्थः।
2. 'स्पर्धायामाङः' (1-3-31) इति ह्वेञः आत्मनेपदम्। स्पर्धा—संघर्षः, पराभिभवेच्छा।
3. 'आतश्चोपसर्गे' (3-3-106) इत्यङ्।
4. आङ्पूर्वकाद् यमधातोरकर्मकात् 'आङो यमहनः' (1-3-28) इति तङ्। सकर्मकात् तु परस्मैपदमेव-'आयच्छति रज्जुम्' इति यथा।
5. 'आगमेः क्षमायामात्मनेपदं वक्तव्यम्' (वा. 1-3-21) इति तङ्। ''क्षमा = उपेक्षा, कालहरणमिति यावत्।'' इति काशिका।

'कपिञ्जलान् आलभेत'। अवष्टम्भे—आलम्बः। उपरमे—[1]आयच्छति कूपाद्रज्जुम्। भृशे—आभाषते, भृशं भाषते, इत्यर्थः। कृच्छ्रे—आपत्। आदिकर्मणि-आरभते॥ व्यापृतौ—आयुक्तः।

मर्यादायाम्—[2]आ पाटलिपुत्रात् आपाटलिपुत्रं वा वृष्टो देवः। ईषदर्थे—आ उष्णम्=[3]ओष्णम्, सुखोष्णम। '[4]आलोहितांशुकमनाकुलहेतिजालम्—' (वरदराजपञ्चाशति 44 श्लो.)। विस्मये—[5]आश्चर्यम्। प्रतिष्ठायाम्—[6]आस्पदम्। सप्तम्यर्थे—'अभ्र [7]आँ अपः'।

---

1. आयच्छति—कूपाद्रज्जुमुपरमतीत्यर्थः। अत्र धातोः सकर्मकत्वात् 'आङो यमहनः' (1-3-28) इति तङ् न।
2. 'आङ् मर्यादावचने' (1-4-89) इति आङः। कर्मप्रवचनीयसंज्ञा। 'आङ् मर्यादाभिविध्योः' (2-1-13) इति समासविकल्पः। समासाभावपक्षे 'पञ्चम्यपाङ्परिभिः' (2-3-10) इति पञ्चमी। आपाटलिपुत्रम्—पाटलिपुत्रं वर्जयित्वेत्यर्थः।
3. आ=ईषत् उष्णम्—ओष्णम्। 'सुखोष्णम्' इत्यत्र, 'ओमाङोश्च' (6-1-95) इत्यनेन आङ्परकत्वात् पररूपम्।
4. ईषदर्थेऽत्र आङ्। ईषल्लोहितः=पीतः आलोहितः। 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्॥' (भाष्ये 1-1-14) इत्यत्र अर्थानां न परिगणनम्, किंतु निदर्शनतया केषाञ्चिदर्थानामुदाहरणमिति बोध्यम्। अत एवात्र चकारेण निरुक्तानामर्थानां ग्रहणमित्यपि ज्ञेयम्।
5. 'आश्चर्यमनित्ये' (6-1-147) इत्यनेन अनित्ये=विस्मयार्थे आङः सुट् निपात्यते।
6. 'आस्पदं प्रतिष्ठायाम्' (6-1-146) इति निपातनादत्रापि सुडागमः।
7. अत्र, 'आङोऽनुनासिकश्छन्दसि' (6-1-126) इति सप्तम्यर्थे विद्यमानस्य आङः अनुनासिकत्वं छन्दसि विषये विधीयते।

मुखं [1]व्याददाति। [2]पुष्पाहरः। [3]आहवः। [4]आच्छाया। [5]व्याव-क्रोशी।

अनुकम्पायामपि प्रयुज्यते। यथा–आ देवदत्तो दीनः। समुच्चयोऽपि **मेदिन्याम्** अस्यार्थत्वेन परिगणितः। यथा-'देवेभ्यश्च पितृभ्यश्च **आ**' इति। अत्र आकारः समुच्चये इति **केचित्**। वस्तुतस्तु चकारद्वयेनैव समुच्चयस्य प्रतिपादितत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन आकारः स्तोभार्थक इति युक्तम्। (स्तोभः–केवलं मन्त्रेषु पादपूरको वर्णविशेषः।)

(152)

**"आः कोपपीडयोः"** (चा.)

कोपे—'वियां मातरम् **आः!** प्रदर्श्य नृपशून् भिक्षामहे निस्त्रपाः—' इति **तिलकादयः**। पीडायाम्—'**आः** कष्टं बत ही चित्रम्

---

1. आङ उत्तरस्य ददातेर्लेटि रूपमेवम्। 'आङो दोऽनास्यविहरणे' (1-3-20) इत्यत्र 'अनास्यविहरणे' इत्युक्तत्वात् अत्र न तङ्। आस्यविहरणम्=आस्यव्यापारः।
2. 'आङि ताच्छील्ये' (3-2-11) इति हरतेरच्प्रत्ययः। अत्र आङ-स्ताच्छील्यमर्थः। पुष्पाणि आ, हरतीति पुष्पाहरः-पुष्पहरणैकस्वभावः।
3. 'आङि युद्धे' (3-3-73) इति आङ उत्तरस्य ह्वयतेरप् प्रत्ययः, सम्प्रसारणं च भवतः। निपाने तु आहाव इति भवति।
4. 'आङ्माङोश्च' (6-1-74) इति आङ उत्तरस्य छकारस्य तुक्।
5. वि, आङ् अव पूर्वकात् क्रुशधातोः स्त्रियाम्, 'कर्मव्यतीहारे णच्' (3-3-4 ) इति णच्प्रत्ययः। 'णचः स्त्रियामञ्' (5-4-14) इति स्वार्थेऽञ्। 'टिड्ढाणञ्—' (4-1-15) इति ङीप्। 'वि+आङ्+अव' इत्येतदुपसर्गत्रयं समुदितं सत् स्वभावात् कर्मव्यतीहारे वर्तते। कर्मव्यतीहारःपरस्परं स्वस्वकृत्यस्य विनिमयः।

हं मातर्देवतानि धिक् ।' (भट्टिः 6-11) विस्मयादिष्वपि दृश्यते—'आः कथं दाशरथिः!' इति यथा। 'स्मृतिः, स्पर्धा, तर्जनम्' इत्यादयोऽप्यस्यार्था इति **शब्दरत्नावली**।

(153)

**"आकाशे"** (चा.)

"—'दूरस्थाभाषणं यत् स्यात् अशरीरनिवेदनम्।

परोक्षान्तरितं वाक्यं तद् **आकाशे** निगद्यते ॥' इति **भरतोक्ते** नाटकाङ्गे वाक्यभेदे—" इति **वाचस्पत्यम्**। नाटकेषु, तत्रापि भाणे '**आकाशे** कर्णं दत्वा' इत्यादयः प्रयोगा एतदुदाहरणानि। वस्तुतः अन्तरिक्षार्थकाकाशशब्दस्य सप्तम्येकवचनान्तत्वाभ्युपगमेनापि एतस्य निर्वाहः सुकरः।

(154)

**"आकीम्"** (चा.)

वर्जने, वितर्के च चादिगणे (1-4-57) पठितस्य **माकीम्** इत्यस्याव्ययस्य पाठभेद एवम् इति **केचित्**। वितर्कार्थे '**आकीं** सूर्यस्य रोचनाद् विश्वा देवा उषर्बुधः।' (ऋक्. (1-14-9) इति प्रयोगदर्शनात् अस्यापि चादिषु सर्वसम्मतः पाठ एव प्रामाणिकः।

(155)

**"आके अन्तिकदूरयोः"** (चा.)

'त्वमग्ने! ऋभुर**आके** नमस्यः' (ऋक्. (2-1-10) इत्यत्र दूरार्थकत्वम्। '**आके**निपासो अरभिर्दविध्वतः' (ऋक् 4-4-56) इत्यत्रान्तिकार्थत्वम्। छान्दसोऽयम्।

(156)

## "आचके कामनायाम्" (त्रि. प्र.)

'त्वामवस्युराचके' (यजुः 2-1-1) इत्यत्र **'आचके—कामये'** इति **भाष्यम्**। छान्दसोऽयम्।

(157)

## "आक्ली विचारे" (ऊर्यादिः)

**'विचारे** अविचारितरमणीये' इति **केचित्**। 'विकारे' इति **काशिका** (1-4-61)। [1]**आक्ली**कृत्य।

(158)

## "आतङ्क कुत्साविनाशप्रतिग्रहेषु" (ति. प्र.)

कुत्सायाम्—भुङ्क्ष्वाऽऽतङ्क[2] तृप्तः। विनाशे—**आतङ्क** क्षीरं दधिभावाय। प्रतिग्रहेऽस्य प्रयोगो मृग्यः।

(159)

## "आतमाम्" (नि.)

अतिशयाभिमुख्ये, अत्यन्तसमन्ताद्भावे च अर्थेऽस्य वृत्तिः। 'महो देवं कथम् **आतमाम**ख्यायत, आत्मा हि महदुक्थम्' (शतपथब्राह्मणे)। वस्तुतस्तु '**आङ्**' इत्युपसर्गात् तमप्प्रत्यये, 'किमेत्तिङव्यय—'(5-4-11)

---

1. ऊर्यादिगणे (1-4-61) पाठादस्य गतिसंज्ञा। च्विडाजन्तयोः सह पाठात् ऊर्यादीनामपि कृञो योग एव गतिसंज्ञा। 'ते प्राग् धातोः' (1-4-80) इति धातोः प्राक् प्रयोगः। 'कुगतिप्रादयः' (2-2-18) इति समासे ल्यप्।
2. आङ्पूर्वकात् तञ्चधातोः भक्षणार्थकात् लोण्मध्यमपुरुषैकवचनान्तपदस्य प्रतिरूपकमेतदव्ययम्।

इत्यनेन तदन्तात् आम्प्रत्यये, '**किंतराम्, किंतमाम्**' इत्यादिवत् रूप सम्पद्यते इति बोध्यम्।

(160)

"**आताली वर्णे**" (ऊर्यादिः)

'-विस्तारे' इति **भोजः**। '—उत्तमार्थे' इति **केचित्**। '—त्रिद्राकुलीभावे' इति **वर्धमानः**। ऊर्यादित्वात् कृञो योगे गतिसंज्ञायां समासे ल्यपि **आतालीकृत्य** इति सम्पद्यते।

(161)

"**आतृदः**" (कृ.)

आङ्पूर्वकात् '**उ तृदिर्** हिंसानादरयोः' (रुधादिः सक॰ सेट्.) इत्यस्मात् 'सृपितृदोः कसुन्' (3-4-17) इति कसुन्प्रत्ययः। तुमर्थे छन्दसि रूपमेतत्। 'क्त्वातोसुन्कसुनः' (1-1-40) इति कसुनन्तस्य अव्ययसंज्ञा। 'पुरा जर्तृभ्य **आतृदः**' (ऋक् 8-1-12)।

(162)

"**आत् प्रश्नाधिकारानन्तर्यप्रतिज्ञासमुच्चयेषु**" (चादिः)

प्रश्ने—'विश्वकर्मा विमना **आद्** विहायाः' (ऋक् 10-82-2)।

अधिकारे—'**आत्** क्रतून् वर्तयिष्यामः'।

आनन्तर्ये—'**आद्** इद् द्यावा पृथिवी अप्रथेताम्' (अनन्तरं रोदसी प्रथित इत्यर्थः।)

प्रतिज्ञायाम्—'आत् सोऽस्मि काश्यपः सोमः।'

समुच्चये— 'अङ्गिरात् उपमन्युरात्'।

'वेगेन' इत्यर्थेऽपि क्वचिद् दृश्यते; यथा—'—आद् इत् पतिम-कृणुतं कनीनाम्॥' (ऋक् 1-116-10)।

(163)

"आत्मना" (वि. प्र.)

'स्वेन' इत्यर्थे विभक्तिप्रतिरूपकमव्ययमेतत्। 'गोप्यः पुनर्जातमिवात्मनैव प्रैक्षन्त सम्मोदपयोधिमग्नाः॥' (यादवाभ्युदये 8-78) इत्यत्र तु "आत्मनेति प्रकृत्यादित्वात् (वा. 2-3-18) तृतीया; सुबन्तप्रतिरूपक-मव्ययमिति केचिद् आहुः" इति अप्पय्यदीक्षिताः।

(164)

"आदङ्क कुत्साविनाशप्रतिग्रहेषु" (ति. प्र.)

'आतङ्क' इति पूर्वं प्रपञ्चितस्य पाठान्तरमिदम्, तत्रैवास्य विवेचनं द्रष्टव्यम्।

(165)

"आदह हिंसोपक्रमकुत्सनेषु" (ति. प्र.)

हिंसायाम्-'आदहारीन् पुरन्दर!।' उपक्रमे—'आदह भक्तस्य भोज-नाय।' (भक्तस्य= अन्नस्य भोजनायोपक्रमस्वेत्यर्थः।) कुत्सने—कुर्वादह यदि करिष्यसि। आङ्पूर्वाद्दहतेः लोण्मध्यमपुरुषैकवचनप्रतिरूपकमिदम्।

(166)

" आदितः " (आद्यादिः)

आदौ इति **आदितः**। आद्यादित्वात् (वा. 5-4-44) सार्वविभक्तिक-स्तसिः। '**तस्यादित** उदात्तमर्धह्रस्वम्' (1-2-32) इत्यत्र 'आदौ **आदितः**' इति **वृत्तिः**।

(167)

" आनुषक् आनुपूर्व्ये " (स्व.)

'**आनुषक्** प्रविशतीह बन्धुता।' इति **वर्धमान**प्रभृतयः।

(168)

" आनुषद् अनुमाने " (स्वर.)

एतत्, '**अनुषक्**' इति पठित्वा, "**आनुषत्** इति आकारम् दकारं च **केचित्**।" इति **गणरत्नमहोदधिः**। उभयथाऽपि उदाहरणं मृग्यम्।

(169)

" आपमित्यकम् " (कृ.प्र.)

अपमित्य = विनिमयेन प्राप्तस्य भावः **आपमित्यकम्**। अपपूर्वकात् **मयतेः** '**उदीचां माङो** व्यतीहारे' (3-4-19) इति क्त्वायाम्, '**कुगति-प्रादयः**' (2-2-18) इति समासे, ल्यपि, '**मयतेरिदन्यतरस्याम्**' (6-4-70) इति धात्वाकारस्य इकारे तुकि **अपमित्य** इति सम्पद्यते। तस्मात् '**अपमित्ययाचिताभ्यां** कक्कनौ' (4-4-21) इति कक्प्रत्यये, **आदि-वृद्धौ** च **आपमित्यकम्** इति भवति। 'याच्ञयाऽऽप्तं याचितकम्, निमयाद्

आपमित्यकम्।' इति **अमरः** (2-9-4)। अपमित्य इत्येतदन्तं कृदन्त-(ल्यबन्त) प्रतिरूपकमव्ययम्। **आपमित्यकम्** इति तु क्लीबान्तम्।

(170)

**" आम प्रतिवचनावधारणाभ्युपगमस्मरणेषु "** (चा.)

प्रतिवचने—'**आमे**तीव प्रत्यवोचन् गजानामुत्साहार्थं वाचमाधोरणस्य।' (शिशुपालवधे—18-10)। अवधारणे—गच्छाम्याम। अभ्युपगमे **आम** मैथिलि!। स्मरणे—**आम** चिरस्य स्मृतम। 'स्मरणेऽपि अङ्गीकारो मूलम्।' इति **तिलकः**।

(171)

**" आमण्डम् अङ्गीकारे "** (चा.)

'**आमण्डम्** अभ्युपगमे' इति **त्रिकाण्डशेषः**।

(172)

**" आम् प्रतिवचनावधारणयोः "** (चा.)

प्रतिवचने—**आम्**, किं मां ब्रवीषि?। अवधारणे—**आम्**, चिरस्य प्रबुद्धोऽस्मि। अङ्गीकार-निश्चय-ज्ञानादयोऽप्यस्यार्थत्वेन **वाचस्पत्ये** परिगणिताः। यथासम्भवं तेषामप्युदाहरणान्यूह्यानि।

(173)

**" आम् "** (त)

'**आम्**' इत्येतदन्तमव्ययं भवति। यथा—किन्तराम्, किन्तमाम् पूर्वाह्णेतराम्, पूर्वाह्णेतमाम्, पचतितराम् पचतितमाम्, उच्चैस्तराम्

**उच्चैस्तमाम्** इत्यादि । अत्र 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' (5-4-11) इति **आमुप्रत्यय** इति ज्ञेयम् । किमः, एकारान्तात्, तिङन्तात्, अव्ययेभ्यश्च विहितो यो घः (=तरप्तमप्प्रत्ययौ) तदन्तात् प्रातिपदिकात् अद्रव्यप्रकर्षे आम् भवतीति सूत्रार्थः। उकारस्य 'उपदेशेऽजनुनासिकः—' (1-3-2) इति इत्संज्ञायाम्, 'तस्य लोपः' (1-3-9) इति लोपः। सूत्रे 'किम्' इति स्वरूपस्य ग्रहणम्। एवम्, 'एत्' इति एदन्तनिदानस्य ग्रहणम्, तेन '**सायाह्णेतराम्, सायाह्णेतमाम्**' इत्यादयोऽपि सिद्ध्यन्ति। एवम्, तिङन्तेभ्यः सर्वेभ्योऽपि लकारेभ्यो-**आम्** भवति। तेन **वक्तितराम्, वक्तितमाम् विराजतेतराम् विराजतेतःमाम्** इत्यादयोऽपि साधव इति बोध्यम्। अव्ययेभ्योऽपि सति प्रयोगे **आम्** भवति, ततश्च **सुतराम् सुतमाम्** इत्यादीनि सिद्धानीति ज्ञेयम्। 'अद्रव्य-प्रकर्षे' इत्युक्तत्वात् निरुक्तेषु निदानेषु सत्स्वपि द्रव्यप्रकर्षे विवक्षिते **उच्चैस्तरः उच्चैस्तमः** इत्येव; अत्र **आम्** न भवतीति ज्ञेयम्। तिङन्तसामान्यस्यैव आम्प्र-योजकत्वात् णिजन्तसन्नन्तादिभ्य आनिदेशिकधातुभ्योऽपि अद्रव्यप्रकर्षे आम् साधुः। तेन **कारयतितमाम्** इत्यादयः साधव इति बोध्यम्। अव्ययीभाव-समासान्तस्यापि अव्ययत्वं यद्यपि भवति, तथापि अव्ययीभावान्तं शब्दस्वरूपं आम्प्रयोजकं न, 'अव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचाराः प्रयोजनम्' (वा. 1-1-41) इति प्रयोजनानां **भाष्ये** परिगणितत्वात्। किञ्च, अस्य आम्प्रत्ययस्य तद्धितान्तत्वेन 'अभिधानलक्षणाः कृत्तद्धितसमासान्ताः' इति **भाष्यकारै**रसकृदुक्तत्वात् अव्ययीभावान्तानां **आम्** न भवति इति च **बोध्यम्**।

(174)

"आम्" (स्वरादिः)

स्वरादिषु 'अम् आम्' इति पठ्यते। तत्र 'आम्' इत्यनेन तद्धितस्य आमः, 'कास्प्रत्ययादाममन्त्रे लिटि' (3-1-35) इति विहितस्याम-श्च तन्त्रेण ग्रहणम्। अयम आम् आगम इति वाचस्पत्ये प्रोक्तम्। वस्तुतः तिङ्-शिद्भयो भिन्नत्वात् 'धातोः' (3-1.91) इत्यधिकृत्य विहितत्वाच्चायमार्धधातुकः इति परे। प्रत्ययत्वाङ्गीकार एव भाष्यसम्मतिरस्ति। लिटि मन्त्रेतरविषये 'कासृ शब्दकुत्सायाम्' इति धातोः, प्रत्ययान्तेभ्यो धातुभ्यश्च आम्प्रत्ययो भवतीति सूत्रार्थः। कासाञ्चक्रे, लोलूयाञ्चक्रे इत्युदाहरणे। प्रत्ययान्तत्वेनात्र सन्-यङ्णिच्प्रभृतयो ग्राह्याः। क्यचस्तु आम्प्रयोजकत्वं न, अव्ययात् क्यचो ऽनभिधानात्। एवञ्च चिकीर्षाञ्चकार, बोभूयांचक्रे इत्यादयः सिद्धानि। आमो मकारान्तस्य कृदन्तत्वेन प्रातिपदिकसंज्ञायां सुप्रत्ययः, स्वरादिपाठादामः परस्य सोः 'अव्ययादाप्सुपः' (2-4-82) इति लुक्। 'कृञ्चानुप्रयुज्यते लिटि' (3-1-40) इति लिट्परस्य कृञोऽनुप्रयोगः। 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' (1-3-63) इति यथासम्भवं परस्मैपदमात्मनेपदं वा भवति। यद्यपि, 'अनुप्र-युज्यते' (3-1-40), 'अनुप्रयोगस्य' (1-3-63) इत्यादिभिः आममनु धातोः प्रयोग एव प्रामाणिक इति ज्ञाप्यते, तथैव च लोके प्रयुज्यते च। तथापि 'उक्षां प्रचक्रे नगरस्य मार्गान्' (भट्टिकाव्ये 3-5) 'विभयां प्रच-कारासौ' (भट्टिकाव्ये 6-2) 'तं पातयां प्रथममास पपात पश्चात्' (रघुवंशे 9-61) 'संयोजयां विधिवदास समेतबन्धुः' (रघुवंशे 17-86) इत्यादिषु कवयो निरङ्कुशस्वातन्त्र्येण बहुलं प्रयुञ्जते। एतेषामपि साधुत्वान्वा-

ख्यानार्थं प्रमाणं मृग्यमेव। अत एव **जयमङ्गलायाम्** 'उक्षान् प्रचक्रे' इति, 'प्रविभयांचकार' इति च पाठः परिकल्पितः। **वार्तिके**ऽपि 'विपर्यास-निवृत्त्यर्थं वा, व्यवहितनिवृत्त्यर्थं च' इति प्रकृतसूत्रे पठितत्वात्, "अन्वेव च कृञोऽनुप्रयोगो यथा स्यात्—**ईहांचक्रे**। व्यवहितस्य मा भूत् इति '**ईहां** देवदत्तश्चक्रे' इति" इति **भाष्या**च्चेदं सिद्धम्। एवंच व्यवहितप्रयोगस्यापि साधुत्वकल्पनप्रयासो विफल इति, **मुनित्रया**सम्मत इति चेत्यलम्।

(175)

## "आयतीगवम्" (तिष्ठद्गु॰)

दोहार्थं जलपानार्थं निवासार्थं वा आयत्यो गावो यत्र काले स कालः **आयतीगवम्**। 'तिष्ठद्गुप्रभृतीनि च' (2-1-17) इत्यत्र गणे पाठात् अव्ययीभावसमासः, तस्य च 'अव्ययीभावश्च' (1-1-41) इत्यव्ययत्वम्। 'नाव्ययीभावाद् अतोऽम् त्वपञ्चम्याः' (2-4-83) इति सप्तम्या अमभावः। गणपाठादेवात्र पुंवद्भावाभावः, शत्रादेशः, समासान्तोऽच्प्रत्ययश्चेति ज्ञेयम्। 'आतिष्ठद्गु जपन् संध्यां प्रक्रान्तामायतीगवम्' इति **भट्टिः** (4-14)। तिष्ठद्गुप्रभृतिषु पठितानि शब्दस्वरूपाणि यथासम्भवं कालवाचकानि, देशवाचकानि च भवन्ति। तदेवोक्तम् '**अन्यपदार्थे**—' इति **वृत्तौ**। यस्य शब्दस्वरूपस्य कालवाचकत्वमिष्टं तस्यैव देशवाचकत्वमपि **काशिकाद्यन**मिमतम्। **गणरत्नमहोदधिकार**स्तु यथासम्भवमेतेषां देशवाचकत्वमपि प्रत्येकं अभिप्रैति। एवंच बहुव्रीहिसमासस्यापवादोऽयमिति भावः। देशवाचकत्वे तु बहुव्रीहिर्दुर्वारः—आयत्यो गावो यत्र स **आयद्गुः** इति।

(176)

**“ आयतीसमम् ”** [तिष्ठद्गु.]

आयत्यः समाः यत्र काले सः **आयतीसमम्**। **समा** = वत्सरः। संवत्सरारम्भकाल एवमुच्यते। अत्रापि तिष्ठद्गुप्रभृतिगणे पाठसामर्थ्यात् शत्रादेशः, पुंवद्भावश्च। **केचित्** तु आयत्या समम्—**आयतीसमम्** इति तृतीयासमासं वर्णयन्ति।

(177)

**“ आरात् दूरसमीपयोः ”** [स्व.]

दूरे — **आरादुपकारकम्**। समीपे — ‘विचित्रमुच्चैः प्लवमानम् **आरात्**’—[भट्टिः 2.17]। परस्परविरुद्धार्थकत्वमस्य शब्दशक्तिस्वाभाव्यादिति बोध्यम्। [1]आरातीयः।

(178)

**“ आर्द्रे सरसत्वे ”** [सा.]

साक्षात्प्रभृतिषु (1-4-64) गणे ‘**आर्द्रम्**’ इति पठ्यते। अस्य कृञो योगे विकल्पेन गतिसंज्ञा। गतिसंज्ञापक्षे ‘**कुगति**’ (2-2-18) इति समासे ल्यपि **आर्द्रकृत्य** इति सिद्ध्यति; ‘साक्षात्प्रभृतिषु च्व्यर्थवचनम्’ (वा.

---

1. आरात्=दूरे, समीपे वा भवः—आरातीयः। ‘वृद्धाच्छः’ (4-2-114) इति छप्रत्यये ईयादेशः। ‘येषां च विरोधः शाश्वतिकः’ (2-4-9) इत्यत्र ‘शाश्वतिकः’ इति सौत्रप्रयोगात् ‘अव्ययानां भमात्रे टिलोपः’ (वा. 6-4-144) इति टिलोपः कादाचित्कः, अतश्चात्र न टिलोप इति बोध्यम्।

1-4-74) इति वचनात् पूर्वं नीरसं सन्तमधुना सरसं कृत्वेत्यर्थः। 'अग्नौकृता-मथ हुतैरुदकंकर्दशावार्द्रीकृते विहसनेकृति पद्मिनीनाम' इति **गणरत्ने**। गतिसंज्ञाऽभावपक्षे **आर्द्रं** कृत्वा इति असमस्तं पदद्वयमिति बोध्यम्। 'गति-संज्ञासन्नियोगेन लवणादीनां [आर्द्रशब्दस्यापि] मकारान्तत्वं निपात्यते।' इति **काशिका**। एतेनास्य मते गतिसंज्ञाऽभावपक्षे **आर्द्रीकरोति, आर्द्रीकृत्य** इत्यादीनि रूपाणि सम्पद्यन्ते इति ज्ञायते। तेन् 'गोपालनादि यदिद भवदीयकर्मेत्या**र्द्रीकरोति** विदुषां हृदयं तदेतत्'॥' (अतिमानुषस्तवे 54) इत्यादयः सिद्धा इति ज्ञेयम्। आर्द्रशब्दस्य स्थाने गतिसंज्ञासन्नियोगेन, **'आर्द्रम्'** इति मान्तादेशो वा, इति **शब्दकौस्तुभः**। **'आर्द्रे'** इत्येकारान्तं **केचित्** पठन्ति। तदानीं गतिसंज्ञासन्नियोगेन एदन्तत्वं गणपाठसामर्थ्यात्, निपातनाद्वा भवतीति बोध्यम्।

(179)

"आर्य प्रतिबन्धे" (स्व.)

**शाकटायन**मतेनास्य स्वरादित्वम्। **'आर्यहलम्'** इति बलात्कारार्थे स्वरादिषु पठितस्य **'आर्य'** इति प्रतिबन्धे, **हलम्** इति प्रतिषेधविवादयोः इति अव्ययद्वयत्वमर्थविशेषश्चास्य मतेऽङ्गीकृतम्।

(180)

"आर्यहलं बलात्कारे" [स्व.]

**'आर्यहलं** गृह्णाति' बलात्कारेण गृह्णाति, इत्यर्थः। **'आर्य'** इति प्रतिबन्धार्थकम्, **'हलम्'** इति प्रतिषेधविवादयोः' इति च **शाकटायन**-

मतत्वेन ग्रन्थेषु तत्र तत्रोच्यते। '**अलम्**' इति प्रतिषेधार्थकस्यैव क्वचित् प्राकृतभाषायां '**हलम्**' इति रूपमिति **केचित्**।

(181)

"**आलम्बी हिंसाप्राकाश्ययोः**" [ऊर्यादिः]

**आलम्बी**कृत्य-हिंसित्वा प्रकाशयित्वा च, इत्यर्थः। ऊर्यादिगणपठितत्वात् क्रियायोगे गतिसंज्ञा। च्विडाचोः कृभ्वस्तियोगे गतिसंज्ञाविधानात्, तत्साहचर्यादूर्यादीनामपि कृभ्वस्तियोगे एव गतिसंज्ञा, इति **काशिका**। लोके तु कृञो योग एव बहुलं दृश्यते। **गणरत्नमहोदधिकार**मतेनास्य ऊर्यादित्वम् इति **शब्दकौस्तुभे** प्रतिपादितम्। '**आलम्भी**' इति **क्वचित्** पाठो लक्ष्यते।

(182)

"**आलोष्टी हिंसायाम्**" [ऊर्यादिः]

'**अलोष्टी**' इति **शब्दकौस्तुभे** पाठः। '**आलोष्टी**' इति **वर्धमानः**। अस्यापि कृञो योगे गतिसंज्ञा। **आलोष्टी**कृत्य—हिंसित्वेत्यर्थः।

(183)

"**आविस् प्राकाश्ये**" (स्वरादिः, सा. ऊ.)

'**आवि**र्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्।' (मेघसन्देशे 1-22) कृभ्वस्तियोगे एवास्य प्रयोगः। साक्षात्प्रभृतिष्वपि पठ्यतेऽयम्। तेन कृञो योगे विकल्पेन गतिसंज्ञा। ऊर्यादिपाठात् कृभ्वस्तिभ्यां योगे नित्यं

गतिसंज्ञेति विशेषः । **आविर्भावः, आविष्कारः आविरासीत्** इत्युदाहरणानि बोध्यानि । [1]**आविष्ट्यः**, [2]**आविस्तराम्** । 'ते प्राग् धातोः' (1-4-80) इत्यनेन गत्युपसर्गसंज्ञकानां शब्दस्वरूपाणां धातोः प्रागेव प्रयोग इति नियमितत्वात् 'वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः।' (माघः 10-19), 'अभवन् युगपद् विलोलजिह्वायुगलीढोभयसृक्कभागमाविः ।' (माघः 20-42) इत्यादिषु व्यवहितप्रयोगोऽसाधुरेवेति **वर्धमानहरदत्तप्रभृतयः** ।

'पक्षान्तरैरपि परिहारा भवन्ति' इति न्यायेन, 'कर्तृकर्मणोश्च भूकृञोः' (3-3-127) इति **सूत्रभाष्ये 'स्वाढ्यम्भवम्'** इति प्रयोगात् ; एवम्, 'ते प्राग् धातोः' (1-4-80) इत्यत्रैव '**सुकटंकराणि** वीरणानि' इति **भाष्य**प्रयोगाच्च, एवम् 'छन्दसि परेऽपि' (1-4-82) 'व्यवहिताश्च' (1-4-82) इति सूत्रयोः प्रत्याख्यानाच्च गतिसंज्ञकानां व्यवहितप्रयोगोऽपि प्रामाणिक इति **हरदत्त**खण्डनपूर्वकं **शब्दकौस्तुभे** समर्थितम् ।

---

1. आविरित्यस्य निपातत्वेनाव्ययत्वम् । 'अव्ययात् त्यप्' (4-2-104) इत्यत्र 'आविसश्छन्दसि' (वा. 4-2-104) इति वचनं बाहुलकाभिप्रायम् ; तेन लोकेऽपि त्यप् भवतीति भोजः । 'ह्रस्वात् तादौ तद्धिते' (8-3-101) इति षत्वम् । आविष्ट्यः = प्रकाशे भवः ।

2. आविस्तराम् इत्यत्र अतिशयेन प्रकाशो विवक्षितः । 'आविस्तरां वा अग्निः कर्मणा' इति शतपथब्राह्मणम् । अत्र 'ह्रस्वात्तादौ तिङि प्रतिषेधः' (वा. 8-3-101) इत्यत्र तिङन्ताद्विहितस्यामोऽपि ग्रहणमिति पक्षाश्रयणेन षत्वं नेति केचित् ।

'ते प्राग् धातोः' (1-4-80) इति सूत्रस्य प्रयोगनियमार्थकत्वम्, संज्ञानियमार्थकत्वम्, इति पक्षद्वयं वैयाकरणनिकायेऽभ्युपगतम्। तत्र प्रयोगनियमार्थकत्वपक्षे **आविरादीनां** व्यवहितप्रयोगे दोषसद्भावेऽपि, संज्ञानियमार्थकत्वपक्षे न दोषः; अत एव 'अनुकरणं चानितिपरम्' (1-4-62) इति सूत्रेऽनितिपरग्रहणं प्रत्याख्यातम्, इत्यभ्युपगम्य **हरदत्तोक्तदूषणोद्धारः व्याकरणसिद्धान्तसुधानिधौ** कृतः।

वस्तुतस्तु 'उपसर्गगतिविभक्तिस्वरप्रतिरूपकाश्च निपाताः' (ग. सू 1-4-57) इति क्वचित् पाठात् गतिप्रतिरूपका अपि गतिकार्यं क्वचिदेव लभन्त इत्यतः एतादृशानां व्यवहितप्रयोगोऽपि नातीव दुष्टः। अत एव **निपाताव्ययोपसर्गवृत्तौ तिलकेन** 'प्रादुराविः प्रकाशे' इत्यत्र 'गतिप्रतिरूपकौ चैतौ सम्भवत एव।' इति स्पष्टमेवाभिहितम, इत्यलमत्र।

(184)

"आशु" (स्व.)

शैघ्र्यार्थकमिदम्। यथा '**आश्वपेहि मम सीधुभाजनात्**' इति। अनव्ययमपि लक्ष्यते त्रिलिङ्गेष्वपि। यथा **आशुः**=षष्टिरात्रेण पच्यमानो व्रीहिविशेषः। **आशुकारी**।

(185)

"आस बभूवार्थे" (ति. प्र.)

'लावण्य उत्पाद्य इवास यत्नः॥' (कुमारसम्भवे 9-35)। अस्य चादित्वं बोध्यम्। **केचित्तु** निपाताव्ययसंज्ञामस्याहुः। **वामनस्तु** 'अस

गतिदीप्त्यादानेषु' (भ्वादिः, सक, सेट्, उभ.) इत्यस्मात् लिटि रूपं साधयित्वाऽस्यानव्ययत्वमिच्छतीति **वर्धमानः**। **वल्लभस्तु** तिङन्तप्रतिरूपको निपात इति नाभ्युपगच्छतीति **गणरत्ने** प्रतिपादितम्। वस्तुतस्तु सर्वशिष्ट-सम्मतत्वात्, तिङन्तप्रतिरूपकमव्ययस्यैवेति **भाष्यादिषु** स्पष्टमित्यन्यत्र विस्तरः।

(186)

## "आस्" (स्व.)

'**आः**' इति पूर्वं विलिखितस्य सकारान्तः पाठ एवम्। तत्रैव विशेषाः द्रष्टव्याः। स्मरण-आक्षेप-कोप-सन्ताप-पीडा-सगर्वगर्जन-खेद-प्रभृतयोऽस्यार्थत्वेन **वाचस्पत्ये** निर्दिष्टाः। यथासम्भवमुदाहरणानि नाटकादिषु सुलभानि।

(187)

## "आस्था आदरे प्रतिज्ञायां च" (सा.)

'**आस्था**कृताः कृतनमस्कृतयोऽर्थमर्थेकृत्य व्रती च नृपती च नृपस्य जग्मुः॥' इति **गणरत्ने** उदाहृतम्। साक्षात्प्रभृतित्वात् कृञो योगे गतिसंज्ञा इति विशेषः। यथासम्भवम् आदरः, प्रतिज्ञा वा अत्रार्थो बोध्यः। आङ्पूर्वकात् स्थाधातोः 'आतश्चोपसर्गे' (3-3-106) इत्यङि टापि यद्यपि **आस्था** इति रूपं सिद्ध्यति, अर्थश्च न भिद्यते; तथापि च्व्यर्थलाभार्थं साक्षात्प्रभृतिषु पाठः, समासार्थश्चेति बोध्यम्।

(188)

"आह उवाचार्थे" (ति. प्र.)

'अस्याह कालसामान्ये तिङन्तप्रतिरूपकम्।' इति **त्रिकाण्डशेषः**। 'अथाऽऽह वर्णी विदितो महेश्वरः—' (कुमारसम्भवे 5-65)। 'आह क्षेपनियोगयोः' इति **मेदिनी**। दृढसम्भावनमस्यार्थ इति **शब्दरत्नावली**। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (3-4-84) इत्यनेन ब्रूञ्धातोर्लटि यद्यपि आह इति पाक्षिकं रूपं सम्पद्यते; तथापि तस्य वर्तमानकालिकत्वात्, अस्य च कालसामान्यवाचित्वाच्च कालभेदार्थं तिङन्तप्रतिरूपकत्वेनाव्ययत्वमाश्रितमिति ज्ञेयम्। स्पष्टमिदम्, 'वर्तमाने लट्' (3-2-123) इत्यत्र **दुर्घटवृत्तौ**।

(189)

"आहिमवतम्" (अव्य.)

हिमवत आ = **आहिमवतम्**। 'आङ् मर्यादाऽभिविध्योः' (2-1-33) इत्यव्ययीभावसमासे, 'अव्ययीभावे शरत्प्रभृतिभ्यः' (5-4-907) इति (हिमवच्छब्दस्य शरत्प्रभृतिषु पाठात्) समासान्ते टच्प्रत्यये रूपमेवम्। **आहिमवतम्** हिमवन्तमभिव्याप्य इत्यर्थः।

(190)

"आहो वितर्कयथार्थयोः" (स्व.)

वितर्के "स्थाणुरयम्, आहो पुरुषः?"

यथार्थे—'**आहो** रिक्तः कथमपि भवेदेष दैवात् तदानीम्'— (काव्यप्रकाशे)। प्रश्नविचारावपि वितर्कावान्तरभेदावेव। यथा—

"यत्रायं पुरुषो म्रियते, उद् अस्मात् प्राणाः क्रामन्ति, **आहो** न" (बृहदारण्यकोपनिषत्) इत्यत्र प्रश्नार्थकत्वम्। तथा, '**आहो** निवत्स्यति समं हरिणाङ्गनाभिः।' (शाकुन्तले 1-25) इत्यत्र विचारार्थकत्वम्। '**आहो** अयम्' इत्यादिषु ओदन्तनिपातत्वेन प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्याः----' (6-1-125) इति प्रकृतिभाव इति विशेषः।

(191)

"**आहोस्वित् वितर्कयद्यर्थयोः**" (चादिः)

'**आहो**' इत्यनेन वितर्कार्थकस्य 'स्वित्' इति निपातस्य समुदये **आहोस्वित्** इति सम्पद्यते। पूर्ववदेवार्थः। **प्रौढमनोरमायाम्** चादिप्रकरणे विकल्पार्थकत्वमप्यस्योक्तम्। '**आहोस्वित्** शाश्वतं स्थान तेषां तत्र द्विजोत्तम!' इति **महाभारते** (सभा. ५. अ.)। '**आहो-स्वित्** प्रसवो मयापचारितैर्विष्टम्भितो वीरुधाम्' (शाकु. ५) **आहो** इति, **स्वित्** इति च भिन्नं द्विपदम्, इति **केचित्**।

(192)

"**इ अनुकम्पायाम्**" (चा, स्वरप्रतिरूपकम्)

'इ इन्द्रं पश्य!' अत्र, 'निपात एकाजनाङ्' (1-1-14) इति निपातसंज्ञायाम्, 'प्लुतप्रगृह्या अचि नित्यम्' (6-1-125) इति प्रकृति-भावः। 'सम्बोधनजुगुप्साविस्मयेषु' इति **प्रौढमनोरमा** (चादिषु)। **वाचस्पत्ये** तु खेदरोषोक्तिनिराकरणमदनिन्दादयोऽप्यस्यार्थत्वेन निर्दिष्टाः। यथासम्भवमुदाहरणान्यूह्यानि। 'इ खेदे परुषोक्तौ चापकृतावनुकम्पने।' इति **वाङ्मयार्णवः**।

(193)

"इतः" (आद्यादिः)

अनेन, अस्मात्, अस्मिन् वा इत्यर्थे आद्यादित्वात् (वा॰ 5-4-44) तस्प्रत्यये रूपमेवम्। तद्धितान्ताव्ययमिदम्। 'प्रयुक्तमप्यस्त्रमितो वृथा स्यात्' (रघु. 2-34) इत्यत्र सप्तम्यन्तात् तसिः। 'तद् ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः।' (कुमार. 2-28) इत्यत्र पञ्चम्यर्थः। एवमन्यत्राप्यूह्यम्। अस्यैव चकारेण योगे **इतश्च** इति भवति। तस्य च द्वित्वे **इतश्चेतश्च** इति निपातसमुदायोऽनियतदिग्भागादौ वर्तते। एवम्, **ततः** इत्यस्यापि समुदयेन **इतस्ततः** इत्यपि पठ्यते। 'अनियतस्थाने' इत्यर्थः। 'लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततः चन्द्रमरीचिगौरैः।' (कुमार. 1-13) इत्यादिषु यथा।

(194)

"इतरेद्युः" (त.)

इतरस्मिन् अहनि-इत्यर्थे, 'सद्यः परुत् परार्यैषमः परेद्यवि अद्य पूर्वेद्युर-न्येद्युरन्यतरेद्युरितरेद्युः—' (5-3-22) इत्यादिना निपातनात् एद्युसुच्प्रत्य-यान्तो साधुः। अयं भावः-इतरशब्दात्, 'पूर्वान्यान्यतरेतरापराधराधरोभयो-त्तरेभ्य एद्युसुच्' (वा. 5-3-22) इति वचनात् एद्युसुच्प्रत्ययः। यत्तु काशि-कादिषु एद्युस्प्रत्यय इत्युक्तम् तद्भाष्यविरोधात्, स्वरविरोधाच्च न साधु इति प्रागेवावोचाम। विस्तरस्त्वन्यत्र।

(195)

## "इति हेतुप्रकारस्वरूपसमाप्तिविवक्षानियमशब्दप्रादुर्भावैवमर्थेषु"

(चादिः)।

हेतौ—हन्तीति पलायते। 'वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत सेति ननन्दतुस्तौ।' (रघु॰ 2-22)। 'विप्र इत्यभिभवत्यपि त्वयि'। (रघु. 11-84)।

प्रकारे—'इति मदमदनाभ्यां रागिणः स्पष्टरागान्।' (माघे 10-91)। इतिवृत्तम्, इतिहासः। 'गौरश्वो हस्तीति जातिः'।

[1]स्वरूपे—'वृद्धिरित्येव या वृद्धिः'। (महाभाष्ये 1-1-1)। [2]वायो इति

---

1. स्वरूपद्योतकत्वमितिशब्दस्य त्रेधा सम्भवति। तद् यथा—शब्दस्वरूपद्योतकता, प्रातिपदिकार्थद्योतकता, वाक्यार्थद्योतकता चेति। तत्र शब्दस्वरूपद्योतकत्वे इतिशब्दस्य, तेन योगे न प्रथमादयो विभक्तयः। तद् यथा—'कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते।' (हरिवंशे) इत्यादिषु। "अत एव गवित्याह: 'भू सत्तायाम्' इतीदृशम्।" (भर्तृहरिः) इत्यादिषु च 'भू' इत्यस्माद् विभक्तयो न। प्रातिपदिकार्थद्योतकत्वे तु प्रथमा भवत्येव। यथा—'दशरथ इत्युदाहृतः'। (भट्टिः 1-1)। वाक्यार्थद्योतकत्वे तु 'निपातेनाभिहिते प्रातिपदिकार्थे प्रथमा' इति वचनात् प्रथमादयो न भवन्ति। 'प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका।' (श्लोकवार्तिकम्) इत्यादिषु यथा। विस्तरस्तु मञ्जूषादिषु बोध्यः।

2. 'वायो इति' इत्यत्र, 'सम्बुद्धौ शाकल्यस्येतावनार्षे' (1-1-16) इत्यनेन सम्बुद्धिनिमित्तकस्य ओकारस्य विकल्पेन प्रगृह्यसंज्ञा। प्रगृह्यसंज्ञापक्षे, 'प्लुतप्रगृह्या अचि नित्यम्' (6-1-125) इति प्रकृतिभावः। एवम्, 'ऊञः' (1-1-17), 'ऊँ' (1-1-18) इत्याभ्याम्, 'विति' इत्यादिषु स्थलेषु प्रगृह्यसंज्ञाविकल्प इति

वायविति। विति। उ इति ; उ इति, विति ॐ इति। झटिति, पटिति। पटत्पटेति।

समासौ—'अ अ इति' (अष्टाध्यायी 8-4-68)। 'पृथिव्यापस्तेजो वायुराकाशः कालो दिगात्मा मन इति द्रव्याणि' (वैशेषिकसूत्रे 4-1-5)। [1]विवक्षाऽनियमे — 'तदस्यास्त्यस्मिन् इति मतुप्' (5-2-94)। शब्दप्रादुर्भावे—[2]इतिपाणिनि। पाणिनिशब्दः प्रसिद्ध इत्यर्थः।

एवमर्थे—'क्रमादमुं नारद इत्यबोधि सः॥' (माघे 2-3)। मतेऽपि—

---

बोध्यम्॥ झटिति, पटिति इत्यादिषु स्थलेषु 'अव्यक्तानुकरणस्यात इतौ' (6-1-98) इति पररूपम्। 'पटत्पटिति' इत्यत्र तु 'नाम्रेडितस्य ; अन्त्यस्य तु वा' (6-1-99) इति पाक्षिकं पररूपम् : तेन पक्षे 'पटत्पट इति' इत्यपि साधुः। आम्रेडितस्थलेऽपि पररूपपक्षे 'पटत्पटिति' इति केचिदुदाहरन्ति। 'यं प्रव्रजन्तम्—' इति भागवतश्लोकेऽपि 'द्वैपायनो विरहकातर आजुहाव पुत्रेति' इत्यत्र प्लुतस्य वैकल्पिकत्वात् सन्धिर्निर्दिष्टः। 'सुश्लोका ३ इति सुश्लोकेति' इत्यादिषु तु 'अप्लुतवदुपस्थिते' (6-1-129) इत्यनेनाप्लुतवद्भावः। उपस्थितः = अनार्ष इतिशब्दः। विस्तरस्तु प्रौढमनोरमादिषु द्रष्टव्यः।

1. विवक्षाया अनियमो विवक्षाऽनियमः। उपात्तार्थेष्वेव विश्रान्तिरिति विवक्षाया नियमो नेति भावः। अत एवात्र (5-2-94) सूत्रे तदस्य, तदस्मिन् इत्यर्थद्वयस्यैव विवक्षेति न; किन्तु "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति श्लोकवार्तिकोपात्तानां ससाधिकानामप्यर्थानां प्रदर्शकतयाऽर्थद्वयोपादानमिति भावः।

2. अत्र, 'अव्ययं विभक्ति—' (2-1-6) इत्यादिना शब्दप्रादुर्भावार्थे अव्ययीभावसमासः। शब्दप्रादुर्भावः = शब्दस्य प्रकाशता। पाणिनिशब्दो लोके प्रकाशत इत्यर्थः।

'**इति** आपिशलिः ।' आपिशलेरेवं मतमिति भावः ।

प्रकर्ष-व्यवस्था-प्रकृति-वक्ष्यमाणपरामर्श-समुच्चय-आश्चर्य-निदर्शन-अव-धारण-प्रत्यक्ष-मान-प्रकाशादयोऽस्यस्यार्थत्वेन **कोशेषु** निर्दिष्टाः ।

प्रकर्षे—**इतिवररुचि** । वररुचिशब्दः प्रकर्षेण विराजत इत्यर्थः । शब्दप्रादुर्भावार्थे 'अव्ययं विभक्ति—' (2-4-6) इत्यनेनाव्ययीभावसमासः ।

व्यवस्थायाम्—'**ज्वलिति**कसन्तेभ्यो णः' (3-6-140) । वस्तुतः **ज्वलिति**रित्यत्र धातुनिर्देशे श्तिपि, ग्रहादित्वात् (वा. 3-3-94) गृहीतिरित्यादिष्विव इडागमे रूपमेवम् । **केचित्** आश्चर्यस्यैतदुदाहरन्ति ।

प्रकृतौ—'**इत्युक्तवन्तं** परिरभ्य दोर्भ्याम्' (किरातार्जुनीये 19-84) ।

वक्ष्यमाणपरामर्शे—'विनिश्चितार्था**मिति** वाचमाददे ।' (किरात० 2-3) ।

समुच्चये—'गार्ग्यो वात्स्यो भारद्वाज **इति**' ।

आश्चर्ये—'ज्व**लिति**कसन्तेभ्यो णः' (3-2-944) । अत्र **काशिका**—'इतिशब्द आश्चर्यः ।' इति । "अनेकार्थत्वात् निपातानाम्, 'उच्चावचेष्वर्थेषु निपतन्तीति निपाताः' इति **निरुक्तकारो** निपातशब्द निराह ।" इति **पदमञ्जरी** । एतेनाश्चर्यत्वमस्येति बोध्यम् ।

निदर्शने—'आपो नारा **इति** प्रोक्ताः—' (मनु० 2-32) ।

अवधारणे—'गुणानित्येव तान् विद्धि—' (रामायणे) । अत्रेदमत्रावधेयम्—

एवार्थकत्वमस्याङ्गीकृत्य **शब्दकल्पद्रुम** एवमुदाहृतम् । वस्तुतोऽत्र वाक्ये एवकारस्यापि श्रवणात् अवधारणमेवकारलभ्यमेव ।

प्रत्यक्षे—**इतिकर्तव्यता** । कर्तव्यस्य कर्मणः प्रत्यक्षेणानुसंहार इत्यत्रार्थः ।

माने—इतिहासः, इतिवृत्तम् ।

प्रकाशे—इतिहरि । अव्ययीभावसमासोऽत्र ।

अनुकर्ष-सन्निधि[1]पदार्थविपर्यासादिष्वपीति **केचित्** । एवमितरेषामप्यर्थानां यथासम्भवमुदाहरणान्यूह्यानि ।

(196)

"इतिवत् सादृश्ये" (नि.)

**'वत्'** इति सादृश्यार्थकमव्ययं स्वरादिषु पठ्यते । तस्य **इतिशब्देन योगे** निपातसमुदायोऽयं 'तद्वत्' इत्यर्थे वर्तते ।

(197)

**"इतिह लोकप्रवादागमयोः"** (चा.)

**'इति+ह'** इति निपातद्वयसमुदायोऽयम् । लोकप्रवादे—**इतिह चकार** । आगमे—'**इतिह** स्मोपाध्यायो ब्रूते-पुनर्वसुरात्रेय इति' ।

---

1. अर्थनिर्देशोऽयं गणरत्नमहोदधौ दृष्टः । वस्तुतोऽत्र 'पदार्थविपर्यास' इत्येव पाठः स्यादित्यस्माकोऽभ्यूहः ; यतः—'न वेति विभाषा' (1-1-144) इत्यादिषु स्थलेषु इतिशब्दस्य पदार्थविपर्यासकरत्वेन वार्त्तिकैरङ्गीकारात् ।

(198)

"इतीव इत्यर्थे" (नि.)

'इति' इत्ययं इत्थमर्थे वर्तते ; 'इव' इति वाक्यालङ्कारे । समुदितस्यापि इत्यर्थकत्वं क्वचित् । यथा—' संस्कारपूताभिरितीव वाग्भिः—' (यादवाभ्युदये 8-42) ।

(199)

"इत् अनन्तरावधारणेत्थमर्थवाक्यालङ्कारेषु" (नि.)

'इद्' इत्यप्यमुं केचित् पठन्ति ।

अनन्तरे—'आदिद् द्यावापृथिवी अप्रथेताम् ।' अनन्तरं द्यावापृथिवी प्रसिद्धे अभूतामित्यर्थः ।

अवधारणे—'उपोपेन्नु मघवन् ! भूय इन्नु' (यजु. 1-1-4) ।

इत्थमर्थे—'सम्राड् विश्व इत् तानि वरुणस्य व्रतानि' (यजु. 4-1-1)

वाक्यालङ्कारे—'द्रुपदादिवेन्मुमुचानः ।' निगडान्मुक्त इत्यर्थः । अत्र 'इत्' इतीदमनर्थकम् । अनर्थकानां शब्दानामेव, 'वाक्यालङ्कारः' इति व्यवहारः ।

(200)

"इत्थं इदम्प्रकारे" (त.)

इदंशब्दात् प्रकारवचने 'इदमस्थमुः' (5-3-24) इति थमुप्रत्यये, प्रकृतेः 'एतेतौ रथोः' (5-3-4) इति 'इत्' इत्यादेशे च 'इत्थम्' इति

सम्पद्यते। प्राग्दिशीयत्वेन विभक्तिसंज्ञकत्वात् 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययसंज्ञा। 'इत्थं व्रतं धारयतः प्रजार्थम्—' (रघु-2-25)। [1]इत्थङ्कारम्।

(201)

"इत्था इत्थमित्यर्थे" (त.)

इदम्शब्दात्, 'प्रकारवचने थाल्' (5-3-23) इति थाल्प्रत्यये, 'एतेतौ रथोः' (5-3-4) इति प्रकृतेरिदादेशे, असर्वविभक्तितद्धितान्तत्वेनाव्ययत्वम्। 'मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः॥' (कठोपनिषत्)। सत्यार्थकत्वमप्यस्य वाचस्पत्ये प्रदर्शितम्।

(202)

"इदम् अत्रेत्यर्थे" (स्व.)

सुबन्तप्रतिरूपकमव्ययमिदं बाहुल्येन च्छन्दस्सु परिदृश्यते। 'नाराशंसम् इदं स्वस्ति हुवे देवं सवितारं नमोभिः॥' (ऋ. 2-38-9)। अत्र

---

1 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' (3-4-67) इति 'इत्थम्' इत्यस्मिन् उपपदे सति सिद्धाप्रयोगे कृञो णमुल्प्रत्ययः। सिद्धाप्रयोगो नाम निरर्थकत्वं कृञ इति बोध्यम्। 'इत्थङ्कारं भुङ्क्ते'- इत्थं भुङ्क्ते, इत्यर्थः। अत्र केचित् कृञ इव भूधातोरपि णमुल् विधीयते, इति मत्वा 'इत्थम्भावम्' इत्यप्युदाजह्रुः। 'कर्मण्याक्रोशे कृञः खमुञ्' (3-4-25) इति सूत्रात् 'कृञ' इत्यस्यैवानुवृत्तेः सर्वैराद्रियमाणत्वात् तत्र प्रमाणं मृग्यम्। 'इत्थम्भूतलक्षणे' (2-3-21) इत्यादिनिर्देशेश्च क्तान्तस्यैवोपपत्तेः, णमुलन्तस्य तेनापि न साधुत्वकल्पनं न्याय्यम्। 'इत्थम्भावः' इति घञन्तप्रयोगस्तु यथाकथञ्चित् समर्थयितुं शक्यते। यदि पुनः 'इत्थम्भावम्' इति णमुलन्तः प्रयोगः प्रामाणिकः परिदृश्यते, तर्हि अगतिकगत्या बाहुलकेनैव निर्वोढव्यमित्यन्यत्र विस्तरः।

'इदम्' इत्यस्य 'अत्र स्थाने, समये वा,' इत्यर्थः। **इदन्तनः** इत्यत्राव्ययत्वादेव, 'सायंचिरं प्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इति ट्युः, ट्युल् वा प्रत्यय उपपन्नः।

(203)

"इदा इदानीमर्थे" (स्व.)

**इत्+आ** इत्यनयोः समुदायः। 'इदाऽह्नः पीतिमुत वो मदम् धुः—' (ऋक् 4-35.11)। **इदा**=अधुना इत्यत्रार्थः। इदमत्र बोध्यम्—संवत्सरविशेषस्य 'इदावत्सरः' इति श्रुतिषु प्रसिद्धिरस्ति; तत्र संवत्सर-परिवत्सर-**इदावत्सर**-उदावत्सर—इद्वत्सररूपेण पञ्चधा वत्सरविभागं कृत्वा, तत्तत्कालेषु क्रियमाणानां दानधर्मादीनां फलविशेषः प्रतिपाद्यते। तत्रापि **इदावत्सरशब्दस्य** 'अस्मिन् वत्सरे' इत्यर्थ एव।

(204)

"इदानीं सम्प्रत्यर्थे" (त.)

**इदम्शब्दात्** सप्तम्यन्तात् काले विवक्षिते 'दानीं च' (5-1-18) इति **दानींप्रत्ययः**। अस्य च प्राग्दिशीयप्रत्ययत्वात् '**इदम इश्**' (5-1-1) इति **प्रकृतेरिश्** आदेशः। शित्त्वात् सर्वादेशः। असर्वविभक्तितद्धितान्तत्वात् **अव्ययत्वम्**। 'हविषे दीर्घसत्रस्य सा **चेदानीं** प्रचेतसः।' (रघुः 1-81)।

(205)

"इद्धा प्राकाश्यसामीप्यस्मरणेषु" (स्व.)

प्राकाश्ये—'समिद्धमिद्धेश महो दधासि' (भागवते)। सामीप्य-स्मरणयोरप्येवमुदाहार्यम्।

(206)

"इमथा इदमिवेत्यर्थे" (त.)

इदंशब्दात् इवार्थे, 'प्रत्नपूर्वविश्वेमात् थाल् छन्दसि' (1-1-104) इति थाल्प्रत्ययः। सूत्रे 'इमात्' इति निर्देशात् 'एतेतौ रथोः' (5-3-4) इति इदादेशं बाधित्वा प्रकृतेरिमादेशः। छन्दस्येवायं प्रयुज्यते। 'तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम्।' (ऋक्. 5-44-1)।

(207)

"इव ईषदर्थोपमोत्प्रेक्षावाक्यालङ्कारेषु" (चा.)

ईषदर्थे—कडार इवायम्। उपमायाम्—चन्द्र इव मुखम्। उत्प्रेक्षायाम्—'लिम्पतीव तमोऽङ्गानि' (मृच्छकटिके 4-16)। वाक्यालङ्कारे—'किमिव न शक्तिहरं ससाध्वसानाम्॥' (माघे. 7-52)। वाक्यालङ्कारो नाम निरर्थकत्वम्। निदर्शनमपि उपमायामेव पर्यवस्यति; यथा—'क इव दीनं हन्यात्'। अवधारणार्थेऽपि यथा—'श्रिये पूषन् इषुकृतेव देवाः'। (ऋक् 1-184-3)।

(208)

"इष्ट्वीनम् इष्ट्वेत्यर्थे" (कृ.)

यजधातोः क्त्वाप्रत्यये, 'वचिस्वपियजादीनां किति' (6-1-65) इति सम्प्रसारणे, 'सम्प्रसारणाच्च' (6-2-228) इति पूर्वरूपे, 'व्रश्चभ्रस्जसृजमृजयजराज—' (8-2-36) इत्यादिना षत्वे, ष्टुत्वम्। 'इष्ट्वीनमिति

च' (7-1-48) इति क्त्वाप्रत्ययान्तस्य ईनमादेशो निपात्यते । 'इष्ट्वीनं देवान्' । इष्ट्वा इति लोके प्रयोगः । मान्तत्वात् 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञा ।

(209)

"इष्यै" (कृ.)

एतदन्तमव्ययं स्यात् । "अपामोषधीनां रोहिष्यै ।" अत्र रुह-धातोः इष्यैप्रत्ययः । एजन्तकृत्त्वात् 'कृन्मेजन्तः' (1-1-19) इत्यव्ययसंज्ञा ।

(210)

**"इस् सन्तापकोपदुःखानुभवेषु" (स्व.)**

यथासम्भवमुदाहरणान्यूह्यानि । शब्दरत्नावलीदृष्टमिदमव्ययम् ।

(211)

"इह" (त.)

अस्मिन् जन्मनि, देशे, काले, विषये इत्याद्यर्थेषु तद्धितान्तमव्ययमिदम् । इदंशब्दात् सप्तम्यन्तात् त्रलोऽपवादतया **'इदमो हः'** (5-2-1) इति हप्रत्यये, **'इदम इश्'** (5-3-3) इति प्रकृतेः 'इश्' इत्यादेशे च **इह** इति सम्पद्यते । [1]**ऐहिकम्,** [2]**इहत्यः,** [3]**इहामुत्र, इहामुत्रफलभोगविरागः ।**

---

1. इहशब्दस्य कालार्थकत्वे, शैषिकः 'कालाट्ठञ्' (4-3-11) इति ठञ्। ञित्त्वादादिवृद्धिः ।
2. 'अमेहक्वतसित्रेभ्य एव' (वा. 4-2-104) इति त्यप् प्रत्ययः शैषिकः ।
3. इह च अमुत्र च इत्यर्थे अव्ययसमुदायोऽयम् । एतल्लोके परत्र च इत्यर्थः । इहामुत्रफलभोगविरागः इति साधनचतुष्टयेषु एकः ।

(212)

"ई परिज्ञाने" (नि.)

ई ईदृशः संसारः। विषादानुकम्पे अप्यस्यार्थाविति **मेदिनी**। मकारान्तत्वमस्य **केचिद**भ्युपगच्छन्ति 'ईम् दुःखभावने कोपे चाव्ययं परिकीर्तितम्।' इति **वाङ्मयार्णवः**। क्रोध-दुःखभावन-प्रत्यक्ष - सन्निधि-सम्बोधनान्यप्यर्थाः **हेमचन्द्रे**णास्योक्ताः। यथासम्भवमुदाहरणानि ज्ञेयानि। अस्य एकाच्कनिपातत्वात् प्रगृह्यसंज्ञा। तेन अचि परतः प्रकृतिभावो विशेषः।

(213)

"ईम्" (नि.)

अथशब्दार्थे, इदमर्थे च निपातोऽयं प्रायश्छान्दसः। अथ-शब्दार्थे यथा—'एमेनमवृधन् अमृताः' (यजुः)। 'आ+ईम्' एतौ निपातौ अथार्थौ।' इति **वेदभाष्यम्**। इदमर्थे—'चयत ईम् अर्यमो अप्रशस्तान्।' (ऋक्. 1-167-8)। 'ईम्—इमम' इति **भाष्यम्**।

(214)

"ईर्मा" (नि.)

'अत्र' इत्यर्थे निपातोऽयं छान्दसः। यथा—'**ईर्मा**ऽन्यद् वपुषे वपुश्चक्रं रथस्य येमथुः।' (ऋक्. 5-73-3)

(215)

"ईषत् अल्पाप्राप्तयोः" (अ.)

अल्पे—**ईषत्** पचति। अप्राप्ते—[1]'ईषत्करः कटो भवता॥ सूक्ष्मार्थेऽपि। यथा—'**ईषद्** धौतं नवं शुक्लं सदशं यन्न धारितम्' (वसिष्ठस्मृतिः) इत्यत्र, '**ईषत्**—सूक्ष्मतन्तुकम्' इति **रघुनन्दनेन** व्याख्यातमिति **वाचस्पत्ये** उदाहृतम्। [2]ईषत्पाण्डुः।

(216)

"ईही भर्त्सने" (नि.)

ईही मूर्ख!। 'हीही' इत्यस्य पाठभेदोऽयमिति **केचित्**। **ई+ही** इति निपातद्वयसमुदायोऽयम्। विस्मयकोपादयोऽप्यस्यार्थत्वेन **कचित्** परिगणिताः।

(217)

"उ अवधारणे" (नि.)

'उ उत्तिष्ठ!।' अत्रास्य एकाच्कनिपातत्वात् प्रगृह्यसंज्ञायाम् अचि परतः प्रकृतिभाव इति बोध्यम्। अस्यैव क्रियाविशेषार्थे ज्ञिकरणम्; यथा

---

1. 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (3-3-126) इति खल्। 'उपपदमतिङ्' (2-2-18) नित्यसमासः।

2. अत्र, 'ईषदकृता' (2-2-27) इति समासः; स च तत्पुरुषः।

'उञ्' इति। 'उञः' (1-1-17) इत्यनेन विकल्पेन प्रगृह्यसंज्ञायाम् उ इति, विति इति प्रकृतिभावविकल्पो भवतीति बोध्यम्।

वितर्क-सम्बोधन-पदपूरण-पादपूरण-रोषोक्ति-अनुकम्पा-प्रश्न-अङ्गीकार-नियोगादयोऽप्यर्थास्तत्र तत्र निर्दिष्टाः। 'उ सम्बोधनरोषोक्त्योरनुकम्पानियोगयोः। पदस्य पूरणे पादपूरणे चाव्ययं स्मृतम्॥' इति **वाङ्मयार्णवे**। यथा वितर्के—क उ एति ?। सम्बोधने—'उ मेति माता तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम॥' (कुमारसम्भवे 1-26)। पदपूरणे—'उपो रुरुचे युवतिर्न योषा' (ऋक्. 7-77-1)। अत्र 'उप+उ' इति समुदितमव्ययम्। उकारः पदपूरकः सन् स्वरविपर्यासकोऽस्तीत्यतः पदपूरकत्वमिति ज्ञेयम्। पादपूरणे—'तदेवाग्निस्तद् वायुः तत्सूर्यः तदु चन्द्रमाः॥' (तैत्ति-आर.-10-1)। रोषोक्तौ—'क वर एन सयुग्वानमिव रैक्वमात्थ ?' (छान्दोग्ये) अत्र 'कं उ अरे' इति पदच्छेदः। उकारोऽत्र रोषोक्तौ। अनुकम्पायाम्—'न वा उ एतन्म्रियसे न रिष्यसे—' (तैत्ति. ब्रा. 3-7.8.3)। प्रश्ने—'वेत्थो यथेमं लोकं पुनरापद्यत इति' (बृह. उप.) वेत्थ+उ इति च्छेदः। उकारोऽत्र प्रश्नार्थकः। अङ्गीकारनियोगयोरप्येवमूह्यम्। नियोगोऽवधारणमिति **केचित्**। अतिसर्जनमिति **परे**।

(218)

## " उच्चा उपर्यर्थे " (नि.)

'....नीचादुच्चा चक्रथुः पातवे वाः।' (ऋक्. 1-116-22)। छान्दसोऽयम्। लोकेऽपि क्वचित् प्रयुज्यते। यथा—'....उच्चा रणत्पक्षिगणास्तटीस्तम्।' (माघ 4-18)।

(219)

## " उच्चैः महत्त्वे " (स्व.)

'——उत्कृष्टे' इति **शाकटायनः**। 'किं पुनर्यस्तथोच्चैः।' (मेघसन्देशे 17)। '**उच्चै**रुदात्तः' (1-2-29) इत्यादिषु स्थलेषु ऊर्ध्वभागार्थकत्वमस्येति ज्ञेयम्। तुङ्गत्व——औन्नत्यादयोऽस्यार्थविशेषाः प्रकरणानुरोधेनोह्याः।

अस्याव्ययस्य घप्रत्ययान्तस्य गुणवाचित्वे 'किमेत्तिङव्ययघादाम्——' (5-4-11) इति आमुप्रत्यये **उच्चैस्तराम्**, **उच्चैस्तमाम्** इति साधुः। यथा '**उच्चैस्तरां** वा वषट्कारः' (1-2-35) इत्यत्र। द्रव्यप्रकर्षे तु विवक्षिते '**उच्चैस्तरो** वृक्षः' इत्यादिषु न आमुप्रत्यय इति च ज्ञेयम्। [1]**उच्चकैः**। [2]**उच्चैः**कृत्य, **उच्चैः** कृत्वा, **उच्चैः**कारं वा आचष्टे।

**केचित्तु** एतदव्ययं सुबन्तप्रतिरूपकमिति मन्वते। **उच्च**शब्द औन्नत्यार्थकोऽस्ति; तस्य तृतीयाबहुवचने **उच्चैः** इति सम्पद्यते। तस्य प्रतिरूपकमेतदिति तेषामाशयः। **परे** तु सान्तमेतदभ्युपगच्छन्ति।

---

1. 'अव्ययसर्वनाम्नामकच् प्राक् टेः' (5-3-71) इति अकच्प्रत्यये रूपमेवं सम्पद्यते।
2. अत्र, 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (3-4-59) इति अव्यये उपपदे कृञः क्त्वाणमुलौ भवतः। 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (परि. 75) इति वचनात् सुबुत्पत्तेः प्राक्, 'उपपदमतिङ्' (2-2-19) इति समासः। स च समासः, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति विकल्प्यते। तेन समासपक्षे ल्यपि उच्चैःकृत्य इति सिद्ध्यति।

(220)

" उत वितर्कबाढार्थप्रश्नसमुच्चयपक्षान्तरपादपूरणेषु " (चा.)

'उतात्यर्थे विकल्पे च तर्के प्रश्ने समुच्चये ।' इति वाङ्मयार्णवः। वितर्के—स्थाणुरयम उत पुरुषः? । बाढार्थे—'अपि तुद्यद्गजदन्तः परिणत उत पर्वतं भिन्द्यात्' । प्रश्ने—उत दण्डः पतिष्यति ? । समुच्चये—'स्वभावो बलवानुत' (किरातार्जुनीये 5-22); 'उत भीम उतार्जुनः' । पक्षान्तरे—'एकमेव वरं पुंसामुत राज्यम् उताश्रमः।' पादपूरणे—'स सर्वलोकस्य शुभो भवत्युत' । 'शुभं कर्म करोम्युत'।

अत्यर्थेऽपि-' धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत' (गीता 1-40) ।

'किमेतदारण्यमुत ग्राम्यम्' (पञ्चतन्त्रे) इत्यादिषु अस्य एवकारार्थकत्वमपि दृश्यते । आरण्यमेव ग्राम्यं किम् ? इति तत्र वाक्यार्थः ।

उत+स्वित् इति समुदितं निपातद्वयं वितर्कार्थकमिति ज्ञेयम् ।

उत+अहो, अथवा उत+आहो इति समुदितमपि निपातद्वयं वर्तते। अस्यार्थस्तु—'उताहो इति सम्प्रोक्तं परिप्रश्नविचारयोः' इति मेदिन्यामुक्तः । गौरयम्, उताहो गवयः ? । 'यक्षी वा राक्षसी वा त्वमुताहोऽसि सुराङ्गना ?।' (महाभारते) ।

एवम्, उताहोस्वित् इति च विकल्पार्थको निपातसमुदायो वर्तते यथा—'....उताहोस्वित् स्वेन कायेन याति ॥' (महाभारते) इति ।

(221)

" ..................उत् जन्मोच्चैस्त्वभूषणे ।

तर्कोर्ध्वानिक्षणोद्योगविवाहत्याग [भासने] ।

विनाशकथनोद्भासविपर्यासविलेखने ।

हिंसौत्सुक्योपदाशंसाऽसूयामाध्यस्थ [स्थ्य] साहसे ।

प्राबल्यतृप्तिनिर्देशदिग्योगे व्रतनिर्गमे ॥ '' इति क्षीरस्वामी ।

जन्मनि—उत्पत्तिः। 'धनमुत्तिष्ठति ग्रामात्'। 'यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत् फलम्' (शाकुन्तले 2-13)। उदयः, उद्भवः ।

उच्चैस्त्वे—उत्तरः, उत्तमः । भूषणे—उत्तंसयति । तर्के—उल्लेखः, उत्प्रेक्षा, उत्पश्यामः । ऊर्ध्वे—[1]उद्यच्छते भारम्—उत्तानः, उत्क्षेपणम्, [2]उलूखलम् । अवेक्षणे—उदीक्षामहे । 'अपेक्षणम्' इति केचित् । तदाऽपीदमेवोदाहरणम् । उद्योगे—उद्यमः। विवाहे—उद्वाहः। त्यागे—उत्सर्गः। भासने—उज्ज्वलः। विनाशे—उत्सन्नम्। कथने—उच्चारयति। अभ्यासे [3]"किं

1. 'समुदाङ्भ्यो यमोऽग्रन्थे' (1-3-75) इति उत्पूर्वकस्य यमधातोः कर्त्रभिप्राये क्रियाफलेऽग्रन्थविषये प्रयोगे आत्मनेपदं भवति। भारमुद्यच्छते। सकर्मकादयं भवति। 'इषुगमियमां छः' (7-3-77) इति शिति प्रत्यये छकारः।

2. उलूखलमिति। अत्र उत्—खं यस्य तद् उलूखलम् इति वृत्तिः। पृषोदरादित्वात् 'उत्' इत्यस्योपसर्गस्य अन्त्यवर्णस्थाने 'ल' इति वर्णविपर्यासवर्णागमौ भवतः।

3. किं न उत् उत् उ—इतीह पदच्छेदः। अभ्यासो नामात्र द्विरुक्तिः। 'प्रसमुपोदः पादपूरणे' (8-1-6) इति 'उत्' इत्यस्य पादपूरणार्थकं द्विर्वचनमिति ज्ञेयम्। सामर्थ्याच्छन्दस्येवेयं द्विरुक्तिः।

नोदुदु हर्षसे दातवा उ (ऋक् 4-21-9)'। विपर्यासे—उद्वेलः। विलेखने—उत्किरति। हिंसायाम्—उत्क्राथयति, उन्नाटयति, उन्मूलनम्।औत्सुक्ये—उत्कण्ठा, [1]उत्कः, उत्सुकः। उपदायाम्—[2]उत्कोचः। शंसायाम्—उत्कृष्टः, उत्सवः। [3]असूयायाम्—उत्कुरुते वाग्भिः। माध्यस्थ्ये—उदासीनः। साहसे—[4]उत्कुरुते कन्याम्; सहसा कामयते कन्यामित्यर्थः। प्राबल्ये—उत्कटः कामः। तृप्तौ—उत्क्तोऽयमन्नेन। निर्देशे—उद्देशः। दिग्योगे—उदीची दिक्। उदक् देशः कालो वा। व्रतनिर्गमे—उदीक्षणम्।

---

1. 'उत्' इत्यस्मात् संसाधनक्रियावाचिनः, तदर्थे कन्प्रत्ययो भवति, 'उत्क उन्मनाः' (5-2-80) इति निपातनात्। उत्को देवदत्तः, उत्कः प्रवासी। उत्सुक इत्यर्थः।

2. उत्कोचो नाम अन्याय्येन मार्गेण धनादिदानं धनप्रतिग्रहो वा तदेतदुच्यते उपदेति।

3. अत्र तिलकेन 'सूचने' इत्युपादाय विवृतम्। असूयाया एव सूचनमपि पर्यायशब्दः। क्षीरस्वामी तु मूलेऽसूयापदं प्रायुङ्क्त। यथामूलं सर्वत्र तिलकेन विवरणे क्रियमाणेऽपि, अत्र पर्यायपदेन विवरणस्य तात्पर्यं तावत्—'गन्धनावक्षेपण—' (1-3-32) इत्यत्र गन्धनशब्दस्य सूचनार्थकत्वेन शब्दविद्भिः विवरणात् अत्र च तद्धातुप्रयोगात् तदेव सूचनमिहासूयाशब्देनोच्यते इति ज्ञापनार्थमिति बोध्यम्।

4. अत्रापि 'गन्धनावक्षेपण—' (1-3-32) इत्यादिना साहसिक्ये उत्पूर्वकस्य कृञस्तङ्। साहसम्=अन्यायप्रवृत्तिः।

परार्थे—उत्तरः। क्वचित् महत्त्वार्थकत्वमप्यस्य दृश्यते। यथा—उद्ग्रन्थः, उदारः। अप्यर्थकत्वमप्यस्येति **शब्दकल्पद्रुमः**। यथासम्भवमुदाहरणान्यूह्यानि। '[1]यदुद्वतो निवतो यासि बप्सत्' (ऋक् 10-142-4)। '[2]उद्वा च उद्वती च'।

(222)

**" उत्तरतः "** (त.)

सप्तमीपञ्चमीप्रथमावृत्तेरुत्तरशब्दात् स्वार्थेऽतसुच्प्रत्ययः 'दक्षिणोत्तराभ्यामतसुच्' (5-3-28) इति विधीयते। दिग्देशकालेषु गम्येषु प्रत्ययोऽयं विधीयते। सप्तम्यन्ते—**उत्तरतो** [3]ग्रामस्य वसति। उत्तरस्यां दिशि वसतीत्यर्थः। पञ्चम्यन्ते—**उत्तरत** आगतः। उत्तरदेशादागत इत्यर्थः। प्रथमान्ते—**उत्तरतो** रमणीयम्। एवं कालवाचकत्वमपि यथासम्भवमूह्यम्।

अत्र **वाचस्पत्ये** उत्तरशब्दात् तसिल्प्रत्यय इति प्रतिपादितम्; तत्तु भाष्यकैयटादिविरुद्धम्। [4]**उत्तरपश्चात्**।

---

1. 'उपसर्गाच्छन्दसि धात्वर्थे' (5-1-118) इति स्वार्थे वतिप्रत्ययोऽत्र। उद्वतः इति द्वितीयाबहुवचनम्—उद्वतानि इत्यर्थः। छन्दस्येवास्य प्रयोगः।
2. 'छन्दसीवनिपौ च वक्तव्यौ (वा. 5-2-109) इत्यत्र वार्तिके चकारेण उपसर्गात् 'व, वत्' इत्येतावपि प्रत्ययौ भवतः। लोके तु नैवमुपसर्गात् केवलात् प्रत्ययः।
3. अत्र 'षष्ठ्यतसर्थप्रत्ययेन (2-3-30) इति ग्रामशब्दात् षष्ठी इति बोध्यम्।
4. अत्र 'दिक्पूर्वपदस्य अपरस्य पश्चभावो वक्तव्यः आतिश्च प्रत्ययः' (वा. 5-3-32) इति वार्तिकेन उत्तरपूर्वस्य अपरशब्दस्य पश्चभावे आतिप्रत्यये च रूपमेवमिति बोध्यम्। अस्य समुदायस्याव्ययत्वं ज्ञेयम्।

(223)

"उत्तरा" (त.)

उत्तरशब्दात् दिग्देशकालेषु गम्येषु '**उत्तराच**' (5-3-38) इति आच्प्रत्ययः। स च सप्तमीप्रथमान्तयोर्भवति। असर्वविभक्तितद्धितान्तत्वात् प्रकृतिप्रत्ययसमुदायस्याव्ययसंज्ञा। सप्तम्यन्ते यथा—**उत्तरा** वसति। प्रथमान्ते—**उत्तरा** रमणीयम्।

(224)

"उत्तरात्" (त.)

दिग्देशकालेषु गम्येषु उत्तरशब्दात् '**उत्तराधरदक्षिणादातिः**' (5-3-34) इत्यातिप्रत्यये रूपमेवम्। '**तद्धितश्चासर्वविभक्तिः**' (1-1-38) इत्यव्ययत्वम्। सप्तमीपञ्चमीप्रथमान्तेष्वेवास्य प्रयोगः। **उत्तराद्** वसति, **उत्तराद्**ागतः, **उत्तराद्** रमणीयम्, इति क्रमेणोदाहरणानि। 'आते शुष्मा वृक्ष एतु पश्चाद**उत्तराद्** अधराद् आ पुरस्तात्।' (ऋक् 6-19-9)।

(225)

"उत्तरात्तात्" (त. नि.)

छन्दसि '**उत्तरात्**' इत्यव्ययात् परतो बाहुलकात् तातिप्रत्यये निपातत्वेनाव्ययसंज्ञायां रूपमेवम्। 'सप्त वीरासोऽधरादुदायन् अष्ट **उत्तरात्तात्** समजग्मिरन्ते।' (ऋक्. 10-27-15)।

(226)

"उत्तराम्" (त. नि.)

'उत्' इत्यस्मात् उत्कर्षार्थे तरप्प्रत्यये तदन्तात् आमुप्रत्यये च रूपमेवम्। **उत्तराम्**=अतिशयितोत्कर्षेण, इत्यर्थः। 'उदेनम् **उत्तरां** नयाग्ने घृतेनाहुतः' (यजुः तै. सं.4-6-3-1)। एवम् **उत्तमाम्** इत्यपि। निपातावेतौ छान्दसौ।

(227)

"उत्तराहि" (त.)

प्रथमासप्तम्यर्थयोः उत्तरशब्दात् दिग्देशकालविषये, 'उत्तराच्च' (5-3-38) इत्याहिप्रत्ययः। **उत्तराहि** रमणीयम्, **उत्तराहि** वसति। **औत्तराहः** इत्यत्र भवार्थे शैषिकः 'उत्तरादाहञ्' (वा. 4-2-104) इत्याहञ् प्रत्ययः। '**उत्तराहि** वसन् रामः समुद्राद् रक्षसां पुरम्।' (भट्टिः 8-107)। अत्र 'अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' (2-3-29) इत्यनेन आहिप्रत्यययोगे समुद्रशब्दात् पञ्चमी इति बोध्यम्।

(228)

"उत्तरेण" (त.)

उत्तरशब्दात्, 'एनबन्यतरस्याम् अदूरेऽपञ्चम्याः' (5-3-35) इति प्रथमासप्तमीसमर्थात् एनप् प्रत्ययः। तस्य चासर्वविभक्तितद्धितत्वात् तदन्त-

स्याव्ययत्वम् । ‘दक्षिणेन हिमवन्तम्, **उत्तरेण**[1] पारियात्रम्’ (भाष्ये (6-3-109) । **उत्तरेण** रमणीयम् । ‘तत्रागारं धनपतिगृहादु**त्तरेणा**स्मदीयम्’ (मेघसन्देशे 2-12) ।

(229)

## “उत्तरेद्युः” (न.)

उत्तरस्मिन् अहनि—इत्यर्थे, ‘सद्यः परुत् परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरु**त्तरेद्युः**’ (5-3-22) इति निपात्यते । **उत्तर**शब्दात्, ‘पूर्वान्यान्यतरेतरापराधरोभयो**त्तरेभ्य एद्युसुच्**’ (वा. 5-3-22) इति एद्युसुच्प्रत्ययः । स्वभावादयं अधिकरणशक्तिप्रधानः । **उत्तरेद्युः**=आगामिदिने ।

(230)

## “उदकम्” (सा. ग.)

अस्य **क्लेदो**ऽर्थः । साक्षात्प्रभृतिषु (1-4-74) गणे एवं पाठादस्याव्ययत्वम् । कृञो योगे गतिसंज्ञा, तेन ‘**कुगतिप्रादयः**’ (2-2-18) इति समासे, ल्यपि **उदकं**कृत्य इति सम्पद्यते । गतिसंज्ञासंनियोगेन उदकशब्दस्य मकारान्तत्वमपि गणपाठसामर्थ्यादिति बोध्यम् । ‘अम्नीकृतामथ हुतं **उदकं**कृदाशावार्द्रीकृते विहसनेकृति पद्मिनीनाम् ।’ (गणरत्नमहोदधौ) । गतिसंज्ञायाः पाक्षिकत्वात् पक्षे समासो न । तेन **उदकं** कृत्वा इत्यपि भवति । ‘साक्षात्प्र-

1. अत्र ‘एनपा द्वितीया’ (2-3-31) इति पारियात्रशब्दस्य द्वितीया ।

भृतिषु च्व्यर्थवचनम' (वा. 1-4-74) इति वचनात् उदकंकृत्य इत्यत्र पूर्वमक्लिन्नमिदानीं क्लिन्नं कृत्वा इत्यर्थो बोध्यः।

(231)

"उप सामीप्यदाक्षिण्यप्रजनारम्भभेदने।
उत्कोचाराधने ज्ञानावज्ञाप्रस्तावशिक्षणे॥
भोगाभोजनसादृश्यभूषालिङ्गनगर्हणे।
सान्त्वनानुग्रहत्यागापकारे यज्ञकर्मणि॥
यत्नच्छायारहोभाषाविरामोद्वाहलेपने।
औद्धत्येऽङ्गीकृतौ युक्तावाचान्तावासने बलौ।
लिप्सासम्पर्कगुह्येषु भृशाध्याहारवैकृते।"

[उ. ग. क. प्र.]

सामीप्ये—उपढौकते, उपसर्पणम्, [1]उपत्यका, [2]उपकुम्भम्, उपसर्गः॥ दाक्षिण्ये—उपरुध्यते। प्रजने—उपसर्या गौः, गर्भग्रहणे

---

1. 'उपाधिभ्यां त्यकन् आसन्नारूढयोः' (5-2-34) इति आसन्नार्थे वर्तमानात् 'उप' इत्यस्मात् त्यकन्प्रत्ययः। असेदमवधेयम्। अत्र 'उप' इति उपसर्गप्रतिरूपकम्; न तु उपसर्गः। क्रियायोगाभावात्। अस्य च स्वरादिषु पाठादव्ययत्वमिति बोध्यम्। 'उपत्यकाऽद्रेरासन्ना—' इत्यमरः। आसन्नभूमावेऽपि भट्टिः प्रायुङ्क्त—यथा—'समुद्रोपत्यका हैमी'। (5-89) इति।

2. कुम्भस्य समीपे उपकुम्भम्। 'अव्ययं विभक्तिसमीप—' (2-1-6) इत्यादिना सामीप्येऽव्ययीभावसमासः। अदन्ताव्ययीभावत्वात् 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' (2-4-83) इति सुपः अमादेशः। 'अमि पूर्वः' (6-1-107) इति पूर्वरूपम्। 'अव्ययीभावश्च' (1-1-41) इति समुदायस्याव्ययत्वम्।

प्राप्तकालेत्यर्थः। आरम्भे—उपक्रमः, उपज्ञा, उपाकर्म। भेदने—उपजापः। उत्कोचे—उपदा, उपचरति। आराधने—उपतिष्ठते सूर्यम्, 'आग्नेय्या आग्नीध्रमुपतिष्ठते'। ज्ञाने—उपलब्धिः। अवज्ञायाम—उपेक्षा, उपहसति। प्रस्तावे—उपक्षिपति, उपन्यासः, उपोद्घातः, उपोद्धारः। शिक्षणे—उपदेशः। भोगे—उपभुङ्क्ते। अभोजने—उपवासः। सादृश्ये-उपमा, उपपातकम्, उपदेवः, उपधातुः। भूषायाम्—[1]कन्यामुपस्कुरुते। आलिङ्गने—उपगूहति। गर्हणे—उपालम्भः। सान्त्वने—कर्मकरान् उपवदते, उपसम्भाषणम्। अनुग्रहे—उपरोधः, उपकारः। त्यागे—उपहरति। अपकारे—उपद्रवः, उपाहतिः। यज्ञकर्मणि—उपाकरोति पशुम्। यत्ने—[2]'उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः॥' (भट्टि: 8-119)एधोदकस्योपस्कुरुते। छायायाम्—उपरागः। रहोभाषायाम्—परदारान् उपवदते। विरामे—उपरमः। उद्वाहे—कन्यामुपयच्छते। लपने—उपदेग्धि। औद्धत्ये—उपप्लवः। अङ्गीकृतौ—उपेत्य, अभ्युपगमः। युक्तौ—उपपत्तिः। आचान्तौ—अप उपस्पृश्य। आसने—उपविशति। बलौ—उपहारः। लिप्सायाम्—उपयाचते। सम्पर्के—रथिकान् उपतिष्ठते, भक्तकरो लवणेन शाकमुपसृजति। गुणे—

---

1. अत. 'उपात्.' (वा. 6-1-137) इति सुडागमः।

2. 'उपात् प्रतियत्न—' (6-1-139) इति सुडागमः। यत्नः= प्रतियत्नः, गुणाधानमिति यावत्।

**उपहरः**। भृशे—**उपक्षीणः**, [1]**उप** परार्धे हरेर्गुणाः, 'न भवान् अनु रामं चेद् **उप** शूरेषु वा ततः' (भट्टिः 8-86)। अध्याहारे—[2]**उपस्कृतं** वाक्यम्। वैकृते—**उपस्कृताः** प्रकृतयः, [3]**उपस्कीर्णमुखः**॥

हीन-पश्चाद्भाव-उद्योग-व्याप्ति-मारण-मरण-अनुकम्पा-वीप्सादयोऽप्यर्था अस्य ग्रन्थेषु निर्दिष्टाः।

हीने—'**उप**[4] शूरं न ते वृत्तं कथं रात्रिञ्चराधम!।' (भट्टिः-8-87)। पश्चाद्भावे—**उपेन्द्रः**। इन्द्रस्य पश्चाज्जात इत्यर्थः। उद्योगे—**उपभृत्**। एवं व्याप्त्यादिष्वप्यर्थेषु यथासम्भवमुदाहार्यम्।

यत्तु वीप्सार्थे 'देवंदेवमुपचरति' इति वाक्यं **वाचस्पत्य** उदाहृतम्; तच्चिन्त्यम्। अत्र 'नित्यवीप्सयोः' (8-1-4) इति देवशब्दस्य द्विर्वचनात्, 'उक्तार्थानामप्रयोगः' इति न्यायेन '**उप**' इत्यस्य वीप्साद्योतकत्वाभावात्।

---

1. अत्र, 'उपोऽधिके च' (1-4-87) इति अधिकार्थे वर्तमानस्य 'उप' इत्यस्य कर्मप्रवचनीयसंज्ञायाम्, 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (2-3-9) इति परार्धशब्दस्य सप्तमी।

2. अत्र, 'उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च' (6-1-139) इति वाक्याध्याहारे सुट्। 'उपस्कृताः प्रकृतयः' इत्यत्र तु वैकृते सुट्। वैकृतम् = विकारभावत्वम्।

3. अत्र, 'हिंसायां प्रतेश्च' (6-1-141) इति सुडागमः। हिंसाऽप्यत्र वैकृतकारणमिति, 'उप' इत्यस्यात्रार्थसंगतिर्द्रष्टव्या।

4. 'उपोऽधिके च' (1-4-87) इति हीनार्थे वर्तमानस्य 'उप' इत्यस्य कर्मप्रवचनीयसंज्ञायाम्, 'कर्मप्रवचनीययुक्ते द्वितीया' (2-3-8) इति शूरशब्दस्य द्वितीया।

अतश्च, '**उपोप** मे परामृश' (ऋक् 1-126-7) इत्येव वीप्सायामुदाहरण भवतीति ज्ञेयम्। अत्र च, 'प्रसमुपोदः पादपूरणे' (8-1-6) इति पादपूरणे **उप** इत्यस्य द्विर्वचनम्। एतदेवात्र वीप्सेत्युपचरितमित्यास्तां तावत्।

अनुकम्पायाम्- [1]**उपडः - उपकः - उपियः - उपिलः - उपिकः-उपेन्द्रदत्तकः**।

(232)

## "उपचतुरम्" (शरत्.)

चतुर्णां समीपे **उपचतुरम्**। 'अव्ययीभावे शरत्प्रभृतिभ्यः' (5-4-107) इति समासान्तष्टच्। एवमेव **उपचरसम्, उपविपाशम्, उपशरदम्, उपानसम्, उपोपानहम्,** इत्यादिष्वपि प्रक्रियोह्या। **उपजरसम्** इति। अत्र जराशब्दः शरत्प्रभृतिषु पठ्यते। तस्य 'जराया जरस् अन्यतरस्याम्' (7-2-101) इति जरसादेशः।

---

1. अनुकम्पित उपेन्द्रदत्त इत्यर्थे, 'प्राचामुपादेरडज्वुचौ' (5-3-80) इति अडच्वुच्प्रत्ययौ भवतः। प्रकरणात्, 'ठाजादावूर्ध्वं द्वितीयादचः' (5-3-83) इति द्वितीयादच ऊर्ध्वभागस्य लोपः। अडच्प्रत्यये उपडः इति सिध्यति। वुच्प्रत्यये तु 'युवोरनाकौ' (7-1-1) इत्यकादेशे उपकः इति भवति। 'घनिलचौ च' (5-3-79) इति घन्प्रत्यये, 'आयनेयी—' (7-1-2) इत्यनेन यथासम्भवमस्य इयादेशे च उपियः इति भवति। तेनैव इलच्प्रत्यये उपिलः। ठच्प्रत्यये तु उपिकः इति भवति। विस्तरस्त्वन्यत्रेत्यलमत्र।

(233)

"उपरि" (त.)

ऊर्ध्वं ऊर्ध्वे ऊर्ध्वात् इत्यर्थेषु ऊर्ध्वशब्दात् 'उपर्युपरिष्टात्' (5-3-31) इति सूत्रे निपातनात् प्रकृतेः **उप** इत्यादेशः **रिल्प्रत्ययश्च**। ऊर्ध्वकाले, देशे वा इत्यर्थः। प्रायोऽयमधिकरणशक्तिप्रधानः। 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' (मेघसन्देशे)। '**उपर्युपरि** लोकम्'। अत्र, '**उपर्य**ध्यधसः सामीप्ये' (8-1-7) इति द्विर्वचनम्। 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।' (वार्तिकम् 2-3-2) इति द्वितीया।

(234)

"उपरिष्टात्" (त.)

ऊर्ध्वं, ऊर्ध्वात्, ऊर्ध्वे, इत्यर्थे 'उपर्यु**परिष्टात्**' (5-3-31) इति निपातनात् ऊर्ध्वशब्दस्य '**उप**' इत्यादेशः, रिष्टातिल्प्रत्ययश्च। '**उपरिष्टात्** प्रतिष्ठन्ते'। **औपरिष्टः**। अत्र भवार्थेऽणि 'अव्ययानां भमात्रे' (वा. 6-4-144) इति टिलोपे आदिवृद्धौ च रूपम्।

(235)

"उपसि" (नि.)

समीपार्थकमव्ययमिदं छान्दसम्। 'आसीन ऊर्ध्वा**मुपसि** क्षिणाति' (ऋ.क् 10-27-3)।

(236)

"**उपांशु**" (स्व.)

अप्रकाशोच्चारणरहस्यादिष्वयं प्रयुज्यते। अप्रकाशोच्चारणे—'जपतः सदा जप**मुपांशु** वदनमभितो विसारिभिः।' (किरात. 12-8)। रहस्ये—**उपांशु** वधः। '**उपांशु** वचः' इत्यादिषु उपचारात् अप्रकाशोच्चारणार्थकत्वं ज्ञेयम्। निगूढार्थे वाच्यलिङ्गः। मौनाद्यर्थेषु उपचारात् प्रयोगः। उपांशु अनुष्ठेयो यागः **उपांशुयाजः**। यज्ञाङ्गत्वात् '**उपांशुयाज**मन्तरा यजति' इति **कल्पसूत्रकार**वचनप्रामाण्यात् प्रयाजादिशब्देष्विव अत्रापि कुत्वं नेति बोध्यम्।

(237)

"**उपाक्षम्**" (अव्ययी.)

अक्ष्णः समीपे **उपाक्षम्**। 'कूलतीरतूलमूलशालाक्षसममव्ययीभावे' (6-2-121) इत्यत्र '**अक्ष**' इति निर्देशात् समासान्तष्टच्प्रत्ययोऽत्रेति ज्ञेयम्। अन्यथा 'प्रतिपरसमनुभ्योऽक्ष्णः' (कैयट 3-2-115) इति नियमात् टच् अत्रः दुर्लभः।

(238)

"**उपाजे**" (नि. ग.)

दुर्बलस्य बलाधानरूपेऽर्थे '**उपाजे**ऽन्वाजे' (1-4-73) इत्यत्र निपातनात् अव्ययमिदं कृञि परतो विभाषा गतिसंज्ञां लभते। यदा गतिसंज्ञा,

तदानीं ' कुगतिप्रादयः ' (2-2-18) इति समासे, ल्यपि ' उपाजेकृत्य ' इति सम्पद्यते। यदा तु न गतिसंज्ञा, तदा ' उपाजे कृत्वा ' इति व्यस्तमेव। उपपूर्वकस्याजधातोः कप्रत्यये बाहुलकात्, निपातनाद् वा वीभावाभावः ' स्वरादिनिपातम्—' (1-1-37) इत्यव्ययसंज्ञा। इदं च विभक्तिप्रतिरूपकमिति केचित्।

(239)

" उभयतः " (त.)

आद्यादित्वात् (वा. 5-4-44) सार्वविभक्तिके तसिप्रत्यये, तद्धितान्तमिदमव्ययं सम्पद्यते। उभयस्मात् इति उभयतः। 'उभयतः कृष्णंगोपाः' इत्यत्र 'उभसर्वतसोः कार्या धिग्युपर्यादिषु त्रिषु।' (वा. 2-3-2) इति द्वितीया।

(240)

" उभयद्युः " (त.)

' उभयोरह्नोः ' इत्यर्थे उभयशब्दात् ' द्युश्चोभयाद् वक्तव्यः ' (वा. 5-3-22) इति द्युप्रत्ययः। असर्वविभक्तितद्धितान्तत्वादव्ययत्वम्। ' योऽन्येद्युरुभयद्युरभ्येति।' (अथर्व. 1-25-4)। प्रायश्छान्दसोऽयम्।

(241)

" उभया " (त.)

' उभया ' इति प्रकारवचनार्थे उभयशब्दात् छान्दसे आप्रत्यये रूपम्। ' बृहस्पतिर्व उभया न मृळात् ॥' (ऋ. 10-108-6)।

(242)

"उभयेद्युः" (त.)

'उभयोरह्नोः' इत्यर्थे **उभयशब्दात्** 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्' (वा. 5-3-22) इति एद्युसुच्प्रत्ययः। '**सद्यः परुत—**' (5-3-22) इति सूत्रे एवं निपात्यते। 'अग्निहोत्र**मुभयेद्यु**रहूयत' (ऐतरेयब्राह्मणे 5-29)।

(243)

"**उम्**" (चा.)

कोपादिष्वर्थेषु अव्ययमिदम्। '**उम्** रोषेऽङ्गीकृतौ चापि प्रश्नेऽप्यव्ययमुच्यते।' इति **वाङ्मयार्णवः**। कोपे—'**उम्**, सैवास्मि तव प्रिया'। अङ्गीकृतौ—'**उम्**, एवमेतत्'। प्रश्नादिषूह्यमेवम्। स्मृतिरप्यस्यार्थत्वेन **क्वचिद्** पठ्यते। वेदेषु निरर्थकोऽपि पठ्यते। क्रोधवर्जितेऽपि प्रयुज्यतेऽयमिति **शब्दरत्नावली**।

(244)

"उररी" (ऊर्यादिः)

स्वीकाररूपार्थे ऊर्यादिषु पठ्यते। कृञो योगे गतिसंज्ञायाम ल्यपि **उररीकृत्य** इति सम्पद्यते। 'इति काल्पनिकं भेद**मुररीकृत्य**—' (साहित्यदर्पणे)। विस्तारेऽप्ययं **क्वचित** पठ्यते। **क्वचित् उरुरी** इति अस्यानुपूर्वी दृष्टा। अनुकरण-भृशार्थ-शब्द-प्रशंसादयोऽप्यर्था अस्य

निर्दिष्टाः। '—निपाताश्चेति ते त्रयः। अनेकार्थाः स्मृताः प्राज्ञैः पाठस्तेषां निदर्शनम् ॥' इति वाक्यपदीयमत्रानुसन्धेयम्।

(245)

" उरी " (ऊर्यादिः)

स्वीकारविस्तारायर्थेषु ऊर्यादिषु पठ्यते। 'उरीकृत्यात्मनो देहं राज्य-मस्मै न्यवेदयत् ॥' (रघु. 15-70)। उत्तरत्र 'ऊरी' इति पठ्यमानस्यैव पाठभेदोऽयम्।

(246)

" उररी " (ऊर्यादिः)

'उररी' इति पूर्वं (244) विलिखितमत्रानुसन्धेयम्। द्विरूपकोशादिषु उररी, उररी' इति द्वेधा पाठात् अयमपि ऊर्यादिरिति केचित्।

(247)

" उर्विया " (स्व.)

'विस्तरेण' इत्यर्थे छान्दसोऽयं स्वरादिषु द्रष्टव्यः। 'ऋतावाजस्र उर्विया विभाति।' (ऋक्. 2-35-8)।

(248)

" उषा " (स्व.)

प्रातःकालार्थे स्वरादित्वादव्ययत्वम्। यद्यपि स्त्रीलिङ्गनपुंसकलिङ्ग-योरपि उषश्शब्दो वर्तते। तथापि 'उषातनो वायुः' इत्यादिषु स्थलेषु

'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इत्यनेन भवार्थे ट्युल्प्रत्ययस्योपपत्त्यर्थं स्वरादित्वेनाव्ययत्वमपि, इति बोध्यम्।

(249)

"उष्णम्" (साक्षाद्)

साक्षात्प्रभृतिगण (1-4-74) पाठात् उष्णशब्दस्य मान्तत्वम्, च्विप्रत्ययार्थे गम्ये गतिसंज्ञाविकल्पश्च। तेन गतिसंज्ञायां समासे, **उष्णंकृत्य** इति सिध्यति। यदा तु गतिसंज्ञा न, तदानीं **उष्णम्** कृत्वा इत्येव। साक्षात् च्विप्रत्ययस्थले तु **उष्णीकृत्य** इत्येव, नात्र गतिसंज्ञा। '**उष्णंकृतो**ऽर्चिर्पि वशेकृद् अमाकृदास्ते।' इति **वर्धमानः** (पृ. 140)।

(250)

"उह" (चा.)

'उ+ह' इत्यव्ययद्वयसमुदायोऽयं चादिषु द्रष्टव्यः। सम्बोधन-अवधारणावस्यार्थौ। एवम्, '**उहह**' इत्यपि सम्बोधनार्थकमव्ययं निपातसमुदायरूपं चादिष्वेव द्रष्टव्यम्।

(251)

"ऊ" (स्व.)

वाक्यारम्भ-सम्बोधन-रक्षा-दयादिष्वर्थेषु स्वरप्रतिरूपकमिदमव्ययम्। यथासम्भवं प्रयोग उन्नेयः। '**उञ्**' इति पूर्वं विलिखितस्य ञितोऽव्ययस्य स्थाने अयमादेशतयापि क्वचिद् भवति। विस्तरस्तु तत्रैव द्रष्टव्यः। निषेधोऽप्यस्यार्थः। यथा—'ऊ ऊषरे बीजं वपसि' इति।

(252)

"ऊम्" (चा.)

रोषोक्ति-प्रश्न-निन्दा-स्पर्धादिषु निपातोऽयं चादिषु द्रष्टव्यः। स्त्रीणां विकारवचनेऽपि नाटकादिषु प्रयुज्यते। यथा—'ऊम्' नाहमेवं जानामि' इति।

(253)

"ऊररी" (ऊर्यादिः)

अङ्गीकारविस्तारादिषु ऊर्यादिगणे द्रष्टव्यः। **'उररी'** इत्यस्यैव **द्विरूपकोशादिषु** एवमपि पाठः। **'ऊरुरी'** इत्यपि **वाचस्पत्यादिषु** पठ्यते। तत्राप्येवमेवार्थः।

(254)

"ऊरी" (ऊर्यादिः)

अङ्गीकार-विस्तार-दार्ढ्यादिष्वर्थेषु ऊर्यादिषु द्रष्टव्यमिदम्। यथा—'**उरीकर्तुं** कुशलमखिलं जेतुमादीन् अरातीन्—।' (श्रीस्तुतिः)। अत्र विस्तारार्थेऽस्य वृत्तिः। 'तदूरीकृत्य कृतिभिः—' (माघे 2-30) इत्यत्र तु अङ्गीकारोऽर्थः। **केचित्** अनुकरण-शब्द-प्रशंसादिष्वप्यमुं पठन्ति। प्रयोगा यथायथमुन्नेयाः।

(255)

"ऊर्ध्वम्" (स्व.)

ऊर्ध्वदेशरूपार्थेऽधिकरणशक्तिप्रधानकमव्ययमिदम्। यद्यपि ऊर्ध्वथा, ऊर्ध्वशोषम्, ऊर्ध्वदेशः इत्यादिषु स्थलेषु शब्दोऽनव्ययोऽप्यकारान्तः पठ्यते 'ऊर्ध्वः' इति; तथापि मकारान्तमप्यव्ययं 'ऊर्ध्वं प्राणाः ह्युत्क्रामन्ति—' (मनुस्मृतिः) इत्यादिप्रयोगबलादध्यवसीयते। क्वचित् भाविकालपरताऽप्यस्य प्रकरणादिना गम्यते। यथा—'इत ऊर्ध्वमहं भक्त्या रमाकान्तपदार्चनम्' इत्यादिषु।

(256)

"ऋ" (स्व.)

सम्बोधन-गर्हण-वाक्यविकार-परिहासादिषु स्वरप्रतिरूपकमिदं स्वरादिषु द्रष्टव्यम्। मन्त्रस्तोभवचनेऽपि मन्त्रशास्त्रेष्वयं प्रसिद्धः। एकाज्निपातत्वात् प्रगृह्यसंज्ञायाम्, 'ऋ ऋतधामन्!' इत्यादिषु स्थलेषु प्रकृतिभावः।

(257)

"ऋचसे" (कृ.)

'ऋच स्तुतौ' इत्यस्मात् 'तुमर्थे सेसेनसेअसेन्' (3-4-9) इत्यादिना भावे कसेन्प्रत्यये, कित्त्वाद् गुणनिषेधे च रूपमेवम्। 'प्र वां मान्मान् ऋचसे नवानि' (ऋक्. 7-61-6)। 'कृन्मेजन्तः' (1-3-39) इति अव्ययत्वमस्य।

(258)

"ऋतम्" (चा.)

वेदेषु प्रसिद्धोऽयमनव्ययः शब्दः। लोके सत्यार्थेऽव्ययमिदं मान्त्वादिषु द्रष्टव्यम्। ऋतम्भरा = प्रज्ञासंपादकनाडीविशेषः, नदीविशेषश्च। केचित् तु लोकेऽपि मेयलिङ्गकत्वमस्याहुः; तदानीं ऋतं भरतीति 'ऋतम्भरः' इत्यत्र 'संज्ञायां भृ—' (3-2-46) इत्यादिना खच्प्रत्यये, अजन्तत्वेन मुमि रूपस्य साधुत्वं ज्ञेयम्।

(259)

"ऋतुथा" (त.)

ऋतौ ऋतौ इत्यर्थे, अविहितोऽपि थाल्प्रत्ययो बाहुलकात् छन्दसि भवति। तद्धितान्तत्वलक्षणप्रयुक्तमिदमव्ययमिति बोध्यम्। 'या ते गात्राण ऋतुथा कृणोमि' (ऋक्. 1-162-19)। 'ऋतुशः' इत्यत्र 'बह्वल्पार्थात् शस् कारकाद् अन्यतरस्याम्' (5-4-42) इति शस्प्रत्ययः। 'शस्तसी' इति स्वरादिगणपाठात् शस्प्रत्ययान्तस्याव्ययत्वम्। 'यद् भविष्यम् ऋतुशो देवयानम्' (ऋक्. 1-162-4)। एवमन्यत्राप्यूह्यम्।

(260)

"ऋते" (स्व.)

'विना, वर्जनम्' इत्यर्थेऽव्ययमिदं स्वरादिषु द्रष्टव्यम्। 'अत्रेहि मां प्रीतमृते तुरङ्गमात्—' (रघु. 3-63)। अत्र, 'अन्यारादितरर्ते—' (2-3-29) इति पञ्चमी। 'शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम्।' (भारते वनपर्वणि) इत्यत्र द्वितीया तु आर्षत्वात् समाधेया। अस्य विनार्थ-

कत्वात् 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' (2-3-32) इति योगविभागेन प्रकृतस्थले द्वितीयापि साधुरिति कश्चित्। योगविभागे प्रमाणसद्भावेऽपि विनार्थकस्य 'ऋते' इत्यस्यापि स्वरूपग्रहणस्थले ग्रहणे प्रमाणाभाव इति शास्त्रस्थितिः।

**ऋतेकर्मम्** इति **वाचस्पत्य** उपात्तम्। तस्यायं भावः—'कर्म वर्जयित्वा' इत्यर्थेऽव्ययीभावसमासे बाहुलकात् समासान्तोऽच्प्रत्ययः। 'ये कर्मणः क्रियमाणस्य मह **ऋतेकर्म**मुपाजायन्त देवाः' (ऋक्. 10-55-6)।

(261)

"ऋधक्" (स्व.)

सत्य-वियोग-शीघ्र-सामीप्य-लाघवादिष्वर्थेषु स्वरादिषु पठ्यते। सत्ये—'**ऋधग्** वदन्ति विद्वांसः'। वियोगे—'किं स **ऋधक्** कृणवद् यं सहसम्—' (ऋ. 4-18-4)। अत्र पृथक्करणमर्थः। शीघ्रे—'**ऋधग्** गच्छति मारुतिः'। सामीप्ये—'**ऋधग्** यतो अनिमिषं रक्षमाणाः' (ऋक्. 6-1-3)। एवमन्येष्वप्यर्थेषु प्रयोगा ऊह्याः। समृद्धिरप्यस्यार्थत्वेन **क्वचित्** पठ्यते।

(262)

"ऋषट्" (स्व.)

हविर्दानार्थे 'वषट्' इत्यादिवत् इदमप्यव्ययमिति **तिलकदृष्टौ** दृश्यते।

(263)

"ॠ" (नि.)

वाक्यारम्भेऽयं निपात इति **केचित्**। 'ॠ वाक्योपक्रमे त्राणे' इति **वाङ्मयार्णवः**। 'निन्दाभययोरपि' इति **शब्दरत्नावली**। मन्त्रस्तोभवचनेऽपि दृश्यते।

(264)

"ॡ" (नि.)

देवमातरि, दैत्यस्त्रियां, भुवि, भूधरे च रूढोऽयं निपातः। प्रयोगो मृग्यः। एकाक्षरकोशेषु पठ्यते। **केचिद**मुमेव दीर्घान्त पठन्ति।

(265)

"ए" (नि.)

स्मृति-असूया-अनुकम्पा-सम्बोधनादिषु निपातोऽयम्। 'ए स्मृतावप्यसूयाऽनुकम्पाऽऽमन्त्रणहूतिषु' इति **वाङ्मयार्णवः**। यथासम्भवं प्रयोगा उन्नेयाः। सम्बोधने—'ए! इतो भव'।

(266)

"**एकत्र**" (त.)

'एकस्मिन्' इत्यर्थे सर्वनामसंज्ञकत्वादेकशब्दात् 'सप्तम्यास्त्रल्' (5-3-10) इति त्रल्प्रत्ययः। प्राग्दिशीयत्वादस्य विभक्तिसंज्ञायाम्, 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययसंज्ञा।

कालवाचकत्वे तु 'सर्वैकान्यकिंयत्तदः काले दा' (5-3-15) इति दाप्रत्ययः। **एकदा**=एकस्मिन् काले इत्यर्थः। '—**तथैकदा** करे दश।' (मनु. 5-136)।

(267)

"**एकपदे**" (चा.)

'सद्यः, तुल्यकाले, अकस्मात्' इत्याद्यर्थेषु निपातोऽयम्। 'कथ**मेकपदे** निरागसं जनमाभाष्यमिदं न मन्यसे॥ (रघु. 8-48)। 'स्यात् तत्क्षण **एकपदम्**' इति **विश्वकोशात्** क्लीबान्तं शब्दस्वरूपमिदमिति **शब्दकल्पद्रुमः**। **तिलकादिभिस्तु** चादित्वमुररीकृत्य एदन्तमव्ययमिति व्याख्यातम्। 'एदन्तं त्वव्ययं सद्योऽर्थे स्याद् **एकपदे** इति।' इति **वाङ्मयार्णवो**ऽप्यत्रैवानुकूलः।

अत्रेदमवधेयम्—एकः पादः साधनं यस्मिन् प्रहरणे इत्यर्थे द्विदण्डयादित्वात् (5-4-128) समासान्ते इच्प्रत्यये, तस्य भसंज्ञकत्वात् पादशब्दस्य पद्भावे, 'इच्' (ग. सू. 2-1-17) इति वचनात् अव्ययीभावसंज्ञायामव्ययत्वम् '**एकपदि**' इत्यस्य शब्दस्य यद् बोध्यते—तत् अव्ययमन्यत्, भिन्नार्थकमस्मात्—इति।

(268)

"**एकपरि**" (अ.)

एकेन विपरीतं वृत्तमित्यर्थे 'अक्षशलाकासंख्याः परिणा' (2-1-10) इति संख्यावाचक एकशब्दः परिणा समस्यते। अव्ययीभावसमासोऽयम्।

'कितवव्यवहारे च' (वा. 2-1-10) इति वचनात् कितवाभिसन्धिकव्यवहार एवायं समासः। द्यूतशास्त्रे प्रसिद्धोऽयं शब्दः। एकस्याः संख्याया अन्यथा पातने चने जयापजयौ विपरीतौ वृत्तौ इत्यर्थः।

(269)

"**एकान्तम्**" (ति.)

एकोऽन्तो यस्य तत् **एकान्तम्**। **गणरत्नमहोदधौ** तिष्ठद्गुगणे उपात्तोऽयम्। प्रथमैकवचनान्तत्वेनैव सर्वास्वपि विभक्तिषु, सर्वेषु च वचनेष्वस्य प्रयोग इत्यतोऽयमत्र तिष्ठद्गुगणपाठेन निष्पादित इति ज्ञेयम्।

(270)

"**एतर्हि**" (त.)

अस्मिन् काले, इत्यर्थे इदंशब्दात् 'इदमो र्हिल्' (5-3-16) इति र्हिल्प्रत्यये, 'एतेतौ रथोः' (5-3-4) इति प्रकृतेरेतादेशे च **एतर्हि** इति सम्पद्यते। '**एतर्हि** बर्हिणां कालः—'।

(271)

"**एव**" (चा.)

अवधारणनियोगानवक्लृप्तिप्रभृत्यर्थेषु चादिषु पठ्यते। अवधारणे—'**त्वमेव** देव जानासि'। नियोगे—'अद्यैवावां रणमुपगतौ—'। अनवक्लृप्तौ—'चैत्र! **क्वेव**[1] भोक्ष्यसे?' औपम्योत्प्रेक्षावाक्यपूरण-एवमर्थेष्वपि

---

1. 'एवे चानियोगे—' (वा. 6-1-94) इति पररूपत्वम्।

दृश्यते । औपम्ये—'श्रीस्तवैव मेऽस्तु'। उत्प्रेक्षायाम्—'**तमेव** मेना दुहितुः कथञ्चिद् विवाहदीक्षातिलकं चकार' (कुमा॰ 7-24)। **तमेव**=मनोरथमिव, इत्यर्थः। वाक्यपूरणेऽप्येवमुदाहरणीयम्। '**एवौ**पम्ये नियोगे चावधारे वाक्यपूरणे। भवेदव्ययमाचारनियोगे च विनिग्रहे॥' इति **वाङ्मयार्णवो**ऽत्र ज्ञेयः। एवमर्थे तु—'**एवा** न इन्द्रः—' (ऋक् 4-33-7)। अत्र 'निपातस्य च' (6-3-136) इति दीर्घश्छान्दसत्वात्।

एवकारस्त्रिविधः—विशेष्यसंगतः, विशेषणसंगतः, क्रियासंगतश्चेति अत्र विशेष्यसङ्गतस्यान्ययोगव्यवच्छेदोऽर्थः। यथा—'पार्थ **एव** धनुर्धरः' इत्यत्र पार्थान्ययोगव्यवच्छेदबोधनात्। विशेषणसंगतस्य तु अयोगव्यवच्छेदोऽर्थः। यथा—'शङ्खः पाण्डर **एव**' इत्यत्र शङ्खे पाण्डरत्वायोगव्यवच्छेदबोधात्। एवं क्रियासङ्गतस्यात्यन्तायोगव्यवच्छेदोऽर्थः। सम्भवाभिप्रायके 'नीलं सरोजं भवत्ये**व**' इत्यादौ, सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते—इति **वैयाकरणै**रुद्घुष्यते। **दीधितिकार**प्रभृतयस्तु अन्ययोगव्यवच्छेदमात्रमे**व**कारार्थत्वेन स्वीकुर्वन्ति; इतरयोरर्थयोः क्षोदे कृते निर्युक्तिकत्वादित्यन्यत्र विस्तरः।

"विशेषणविशेष्याभ्यां क्रियया च समन्वितः।
अयोगं योगमपरैरत्यन्तायोग**मेव** च॥
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेकतः।"

इति **अधिकरणचिन्तामणि** (231 श्लोकव्याख्यायाम्) समुद्धृतश्लोकोऽत्रावधेयः।

## (272)

## "एवम्" (चा.)

निश्चयाङ्गीकार-प्रकार-प्रकृतपरामर्शोपदेशनिर्देश-इवार्थोक्तपरामर्शैवार्थेषु चादिषु पठितोऽयं निपातः। निश्चये—'**एव**मित्थं यदात्थ त्वम्'। अङ्गीकारे—**एवं** कुर्मः। प्रकारे—**एवं** कुरु। प्रकृतपरामर्शे—'**एवं** वादिनि देवर्षौ—' (कुमार· 6-84)। उपदेशे—**एवं** पठ। निर्देशे—**एवं** तावत्। इवार्थे—यथाऽग्निरे**वं** विप्रः। अग्निरिव विप्र इत्यत्रार्थः। उक्तपरामर्शे—'**एव**मादीन् विजानीयात् प्रकाशांल्लोककण्टकान्' (मनुः)। एवार्थे—**एव**मेतत्, कः सन्देहः?। 'अहार्य**मेवं** मृगनाभिपत्रमियानशेषेण तयोर्विशेषः'। वाकारार्थेऽपि क्वचित्—यथा 'यथेतम**नेवं** च' (ब्र सू.)। समुच्चयेऽपि क्वचिदस्यार्थत्वेन परिगणितः। **एवं**भूतः, [1]**एवं**कारम् इत्यादिषु क्रियाविशेषणत्वम्। **एवं**विधः, **एवं**प्रकारः इत्यादिषु द्रव्यविशेषणत्वमिति बोध्यम्।

## (273)

## "एश्"

एतदन्तमव्ययमिति ज्ञेयम्। अवपूर्वात् 'चक्षिङ् व्यक्तायां वाचि' इत्यस्मात् 'अवचक्षे च' (3-4-15) इति निपातनात् एश्प्रत्यये, प्रत्ययस्य शित्त्वेन सार्वधातुकत्वात् ख्याञादेशो न। तुमुनर्थकोऽयं प्रत्ययः। 'रिपुणा नावचक्षे' (ऋक्· 4-58-5)। अवख्यातुमित्यर्थः। 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम्।

---

1. अत्र, 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' (3-4-27) इति कृञो णमुल्। 'सिद्धाप्रयोगः' इत्यस्य, निरर्थकत्वात् प्रयोगानर्ह इत्यर्थः। एवञ्च 'एवङ्कारं भुङ्क्ते' इत्यस्य 'एवं भुङ्क्ते' इत्येवार्थः।

(274)

## "एहि" (ति. प्र.)

प्रहास-कोपादिष्वर्थेषु तिङन्तप्रतिरूपकमिदमव्ययं चादिषु द्रष्टव्यम्। प्रहासे—'एहि[1] मन्ये रथेन यास्यसि, स गतः।' कोपे—'एहि, त्वया सह न जल्पिष्यामि'। इदं च उदाहरणम्—**निपाताव्ययोपसर्गवृत्ति-गण-रत्नमहोदध्या**द्यनुसारेण दत्तम्। वस्तुतस्तु प्रकृतस्थलेषु '**एहि** मन्ये—' इत्यादिवाक्येषु तिङन्तप्रतिरूपकत्वाश्रयणस्यानतिप्रयोजनकत्वात् चिन्त्यमिद-मुदाहरणम्। किन्तु—'**एहीडम्**' इत्याद्येवोदाहरणमिति बोध्यम्। मयूरव्यंसकादिगणे (2-1-72) '**एहीडम्**, **एहियवम्**, **एहिवाणिजा** [क्रिया] **एहिस्वागता**, **एहिद्वितीया**,' इत्यादयः शब्दाः पठ्यन्ते। तेषु स्थलेषु समासानुपपत्तिमाशंक्य **शाब्दिकैः** '**एहीडादयोऽन्यपदार्थे**' (काशिका 2-1-72) इति वचनेन समासोपपत्तिः कल्प्यते। तादृशस्थलेषु समस्तपदघटकानां '**एहि**' इत्यादीनां तिङन्तत्वकल्पने स्वरादिदोषदर्शनात्, तेषामपनोदनाय तिङन्तप्रतिरूपकत्वमाश्रयणीयमिति—एतान्येवोदाहरणानि न्याय्यानीति ज्ञेयम्।

---

1. 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' (1-4-104) इत्यनेनात्र मन्यतिधातावुपपदे प्रहासे गम्ये धातुसामान्यस्य मध्यमपुरुषविधानात्, अत्रापि 'एहि' इति मध्यमपुरुषः।

(275)

"ऐ" (नि.)

आह्वानामन्त्रणस्मरणेषु निपातोऽयम्। 'ऐ वाचं देहि धैर्यं नः—' (भट्टिः 6-18)। 'ऐशब्दो निपातोऽभिमुखीकरणे वर्तते।' इति जयमङ्गला। 'ऐ [1]ऐश्वर्यमत्ताः!' इत्यादिषु असूयादिष्वपि दृश्यते।

(276)

"ऐकध्यम्" (त.)

एकशब्दात् परस्य धाप्रत्ययस्य अधिकरणविचाले गम्ये 'एकाद् धो ध्यमुञन्यतरस्याम्' (5-3-44) इति ध्यमुञ्प्रत्ययः। अधिकरणविचालो नाम—एकस्यानेकीकरणम्, अनेकस्य वा एकीकरणम्। 'ऐकध्यं भुङ्क्ते, ऐकध्यं कुरु' इत्युदाहरणे। तद्धितान्ताव्ययमिदम्। तदुक्तम्— 'तसिलादिस्तद्धित एधाच्पर्यन्तः।' (ग. सू. 1-1-37) इति।

(277)

"ऐषमः" (त.)

'अस्मिन् संवत्सरे' इत्यर्थे, 'सद्यः परुत् परार्यैषमः—' (5-3-22) इत्यत्र, 'इदमः समसण्' (वा. 5-3-22) इति वचनेन समसण्प्रत्यये, प्रकृतेरिश्भावे, आदिवृद्धौ च ऐषमः इति सिद्ध्यति। 'परुत् पराभूतसरो-

---

1. अत्र, 'निपात एकाजनाङ्' (1-1-14) इति प्रगृह्यसंज्ञायाम्, 'प्लुतप्रगृह्या अचि नित्यम्' (6-1-125) इति प्रकृतिभावः।

जकोशौ परारि सन्दर्शितसन्निवेशौ। इहैषमस्तालफलोपमानौ स्तनौ कियन्तौ परतो भवेताम्॥' [1]ऐषमस्त्यम्—ऐषमस्तनम्।

(278)

"ओ" (नि.)

आह्वानस्मरणानुकम्पादिष्वर्थेषु निपातोऽयम्। 'ओ श्रावय' इत्यामन्त्रणरूपे आह्वाने।

(279)

"ओम्" (चा.)

प्रारम्भाङ्गीकारानुज्ञाऽन्तमनतूष्णीम्भावादिष्वर्थेषु चादिषु पठ्यते। अव-धातोः 'अवतेष्टिलोपश्च' (उणादिः 1-141) इति मन्प्रत्यये टिलोपे, 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (6-4-20) इति उपधावकारयोरूठि सवर्णदीर्घे गुणे च रूपमेवम्। अस्य च परिनिष्पन्नस्य चादिषु पाठादव्ययत्वमिति सर्वे वदन्ति। वस्तुतस्तु व्युत्पत्तिपक्षेऽस्यौणादिकमन्प्रत्ययान्तत्वात्, तस्य च मान्तकृत्त्वात्, 'कृन्मेजन्तः' (1-1-29) इति अव्ययसंज्ञेति युक्तम्। प्रारम्भे— 'हरिः ओ३म्[1] — अग्निमीडे पुरोहितम्'। अङ्गीकारे— 'ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभः'

---

1. 'ऐषमोह्यःश्वसोऽन्यतरस्याम्' (4-2-105) इति शैषिकस्त्यप् विकल्पेन। पक्षे, 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इति ट्युः, ट्युल् वा प्रत्ययः, तुडागमश्च।

1. 'ओमभ्यादाने' (8-2-87) इति प्लुतोऽत्र। अभ्यादानम्—प्रारम्भः।

(शिशुपालवधे—1-75)। अनुज्ञायाम—'अग्नौ करवाणि ओं तथा कुरु'। अन्ते—'....ब्रह्म भूर्भुवस्सुवरोम्'। ब्रह्मणि—'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।' (गीता—17-23)। अत्र ब्रह्म—वेदः, प्रणवः, परमात्मा वा प्रकरणानुरोधेन बोध्यम्। तूर्णीभावे—'कद्वद् ओं कुरु'। मङ्गलार्थकत्वमप्यस्याहुः 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ॥' इति स्मरणात्। मङ्गलं तु नास्याव्ययस्य साक्षाद् वाच्यार्थः; किं तु ओङ्कारश्रवणेन मृदङ्गध्वनिवत् मङ्गलसाधनं भवति। अपाकरणमप्यस्यार्थ इति **वाङ्मयार्णवे** प्रतिपादितम्।

(280)

"ओषम्" (नि.)

'तीव्रम्, शीघ्रम्' इत्याद्यर्थेषु छान्दसोऽयं निपातः। '**ओषम्** इत् पृथिवीमहं जङ्घनानीह वेह वा।' (ऋक्. 10-119-10)।

(281)

"औ" (नि.)

आह्वान-सम्बोधनविरोधनिर्णयादिषु निपातोऽयम्। आह्वानसम्बोधनयोर्विभिन्नार्थकत्वं सन्दर्भवशादुन्नेयम्। मन्त्रस्तोभवचनेष्वपि औकार अव्ययत्वेन दृश्यते।

अस्यैवानुस्वारनादाभ्यां सह पाठे चतुर्थवर्णानां प्रणवत्वमिति, 'चतुर्दशस्वरो योऽसौ सेतुरौकारसंज्ञितः। स चानुस्वारनादाभ्यां शूद्राणां सेतुरुच्यते ॥' (तन्त्रसारसमुद्धृतकालिकापुराणवचनम) इति प्रमाणप्रदर्शनपुरस्सरं **शब्दकल्पद्रुमादिषु** प्रतिपादितम्। **सेतुः**=प्रणवः।

(282)

"**कचन**" (चादिः)

कामप्रवेदने=इष्टप्रश्ने निपातोऽयम्। "स्नासि **कचन** जाह्नव्याम्!"। '**कत्+चिन्**' इति निपातद्वयसमुदायोऽयम्।

(283)

"**कच्चित्**" (चा.)

इदमपि कामप्रवेदन एव। हर्षमङ्गलावध्यर्थः इति **वाचस्पत्य** उक्तम्। '**कच्चिन्नु** धरते तातः—' (रामा. अयो. 100-6)।

(284)

"**कट**" (नि.)

अद्भुतार्थे निपातोऽयम्। '**कट** वेकट चाद्भुते।' इति **त्रिकाण्डशेषः**।

(285)

"**कणे**" (नि.)

श्रद्धाप्रतीघातरूपार्थे, '**कणे**मनसी श्रद्धाप्रतीघाते' (1-4-66) इति गतिसंज्ञा; तेनाव्ययत्वम्। **कणे**हत्य पयः पिबति। गतिसंज्ञकत्वात

अत्र समासे ल्यप्। '....मुह्यन्ति, त्वमनाविलो निरवधेर्भूम्नः **कणो**हत्य यत्।' (श्रीरङ्गराजस्तवे 2-38)।

(286)

"**कथा**" (त.)

केन हेतुनेत्यर्थे छान्दसमिदं ज्ञेयम्। '**कथा**ऽऽख्याने च कथनेऽव्ययं तु कथमर्थकम्।' इति **वाङ्मयार्णवः**। किंशब्दात् हेतौ प्रकारवचने च विवक्षिते 'था हेतौ च छन्दसि' (5-3-26) इति थाप्रत्ययः। तस्य च विभक्तिसंज्ञकत्वात्, '**किमः** कः' (7-2-103) इति प्रकृतेः कादेशः। '**कथा** देवा आसन् पुराविदः (ऋक् 10-64-1)'। 'यथा**कथा**च' इत्यत्र समुदायस्याव्ययसंज्ञा। यथाकथाच = 'अनादरे' इत्यर्थः। 'यथा**कथा**च दक्षिणा'। अनादरेण दीयमाना दक्षिणेत्यर्थः।

(287)

"**कथम्**" (त.)

प्रकार-सम्भ्रम-प्रश्न-सम्भावनादिष्वर्थेषु तद्धितान्तमिदमव्ययम्। '**कथं** कथाप्रकारार्थे हर्षे प्रश्ने च सम्भ्रमे। सम्भावनायां गर्हायां चाव्ययं परिकीर्तितम्॥' इति **वाङ्मयार्णवः**। किम्शब्दात् प्रकारवचने, '**किमश्च**' (4-3-25) इति थमुप्रत्यये, तस्य च प्रत्ययस्य विभक्तिसंज्ञकत्वात्, '**किमः** कः' (7-2-103) इति प्रकृतेः कादेशे रूपम्। प्रकारे—**कथं** करोषि?। सम्भ्रमे—**कथं** हतः कर्णः!। प्रश्ने—**कथ**मजीर्णम?। सम्भावनायाम्—

[1]**कथं** नाम तत्र भवान् वितथं ब्रूयात् ?। असम्भव—हर्षादिष्वप्याहुः। यथा— **कथं** भीतो योत्स्यते ? इत्यत्रासम्भवः । **कथं वत्सो मे रामभद्रः** इत्यत्र हर्षः ।

**कथङ्कारम्** इत्यव्ययम् । अत्र, 'कथम्' इत्यस्मिन् उपपदे 'अन्यथैवकथमित्थंसु सिद्धाप्रयोगश्चेत्' (3-4-27) इति कृञो णमुल् । सिद्धाप्रयोगः = निरर्थकत्वात् प्रयोगानर्ह इत्यर्थः । समुदितमेतदव्ययं मान्तं कृदन्तमिति ज्ञेयम्। '**कथङ्कारं** भुङ्क्ते' = कथं भुङ्क्ते इत्यर्थः ।

एवम्, **कथञ्चन** इत्यसाकल्यार्थे, **कथञ्चित्** इति कृच्छ्रेणेत्यर्थे, **कथमपि** इति अतिकष्टेनेत्यर्थे, **कथंवा** इति विकल्पे इत्यादीन्यव्ययानि तत्तदर्थेषु यथासम्भवं समुदितानि भवन्ति । विस्तरभियाऽस्माभिर्नोट्टङ्कितानि । यथायथमूह्यानि ।

(288)

## "कथंनाम" (नि॰)

**आश्चर्यार्थे** निपातद्वयसमुदायोऽयम्। '**कथंनाम** महात्मानो ह्रियन्ते विषयारिभिः।' (कामन्दकीयनीतिसारे 3-11) ।

---

1. 'विभाषा कथमि लिङ् च' (3-3-143) इति लिङ्। पूर्वसूत्रस्थं 'गर्हायाम्' (3-3-142) इति पदमप्यनुवर्तते । तेन गर्हाऽप्यत्रास्यार्थ इति बोध्यम्। सूत्रे चकारात् यथाप्राप्तं लडादिकमप्यत्र भवति । तेन 'कथं नाम तत्र भवान् वितथं ब्रवीति, कथंनाम तत्र भवान् वितथं वक्ता,......अब्रवीत्, उवाच, इत्यादयोऽपि प्रयोगाः साधव इति बोध्यम्।

(289)

"कद्" (चा.)

हर्ष-किंशब्दार्थादिषु चादिरयं निपातः। हर्षे—'कद् रुद्राय प्रचेतसे ...' (ऋक्. 1-43-1)। किंशब्दार्थे—'न यत् पुरा चकृम कद्....' (ऋक्. 10-4)।

(290)

"कध्यै" (कृ.)

एतदन्तमव्ययसंज्ञकं ज्ञेयम्। 'इन्द्राग्नी आहुवध्यै' (ऋक्. 6-61-13)। अत्र छन्दसि हुधातोः कध्यैप्रत्ययस्तुमुनर्थे 'तुमर्थे से—' (3-4-9) इत्यनेन विहितः। एजन्तकृत्प्रत्ययत्वादेतदन्तस्य, 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञा। 'अव्ययकृतो भावे, इति भाष्येष्ट्या भावार्थकोऽयं प्रत्यय इत्यपि ज्ञेयम्।

एवम् 'कध्यैन्' इति प्रत्ययान्तमपि अव्ययसंज्ञकं बोध्यम्। स्वरे विशेषः। "श्रियध्यै" इत्यत्र कध्यैन्प्रत्ययः। प्रत्ययस्य कित्त्वादियङा-देश इति बोध्यम्। अयमपि छान्दस एव प्रत्ययः।

(291)

"कदा" (त.)

'कस्मिन् काले' इत्यर्थे 'सर्वैकान्यकिंयत्तदः काले दा' (5-3-15) इति किंशब्दात् सप्तम्यर्थे त्रलपवादो दाप्रत्ययः। अस्य च प्रत्ययस्य

प्राग्दिशीयत्वेन विभक्तिसंज्ञकत्वम्। तेन, 'किमः कः' (7-2-103) इति प्रकृतेः कादेशः। 'कदाऽहं कावेरीविमलसलिले वीतकलुषः—'।

अनेन साकं 'चन' इत्यस्य योगे **कदाचन** इति सम्पद्यते। अनिर्धारिते कस्मिंश्चित् काले—इत्यर्थः। '—न पित्र्येण **कदाचन**॥' (मनुः 2-58)।

एवं 'चित्' इत्यस्य योगे **कदाचित्** इति भवति। तस्यापि पूर्ववदर्थः। 'नाक्षैः क्रीडेत् **कदाचित्** तु—' (मनुः 4-74)। 'जातु' इत्यप्यस्यार्थः।

(292)

"कम्" (स्व॰)

वारि-मूर्ध-सुख-निन्दा-व्योम-पादपूरणाद्यर्थेषु स्वरादिषु पठ्यते। चादिरयमिति केचित्। वारिणि—**कञ्जम्** = पद्मम्। **कम्** = जले जायते इत्यत्र व्युत्पत्तिः। जनेर्डः। मूर्ध्नि—**कन्धरः** = कण्ठः। **कम्** = शिरो धरतीति धरतेः पचाद्यच्। सुखे—**कंयुः**। 'यद्वाव **कं** तदेव खम्—' (छान्दोग्ये 4-10-5)। निन्दायाम्—**कन्दर्पः**। **कम्** = कुत्सितो दर्पो यस्य सः — **कन्दर्पः**। व्योम्नि—'**कङ्गामिनः** पक्षिणः'। **कम्** = आकाशे गच्छन्तीति **कङ्गामिनः**। ताच्छील्ये णिनिः। पादपूरणे—'शिशिरं जीवनाय **कम्**'।

कम्बः, कम्भः, कंयुः, कन्तिः, कन्तुः, कन्तः, कँय्यः, इत्यादिषु अस्य, उदकम्—सुखं वा यथासम्भवमर्थ इति बोध्यम्। अत्र सर्वत्र, 'कम्शम्भ्यां बभयुस्तितुतयसः' (5-2-138) इति मत्वर्थे ब भ इत्यादयः प्रत्ययाः।

(293)

"कमुल्" (कृ.)

एतदन्तमव्ययं स्यात्। 'अग्निं वै देवा अपलुपं नाशक्नुवन्'। अत्र अपपूर्वस्य लुप्लधातोः, 'शकि णमुल्कमुलौ' (3-4-12) इति कमुलप्रत्ययः। तुमुनर्थकोऽयं प्रत्ययः छन्दस्येव। अपलोप्तुमित्यर्थः। मान्तकृत्त्वादव्ययत्वम्।

(294)

"कर्हि" (त.)

कस्मिन् काले इत्यर्थे, 'अनद्यतने र्हिलन्यतरस्याम्' (5-3-21) इति किम्शब्दात् र्हिल्प्रत्ययः। अस्य प्रत्ययस्य विभक्तिसंज्ञकत्वात् प्रकृतेः कादेशः। लकारः स्वरार्थः। 'कर्हिस्वित् तदिन्द्र यन्नृभिः—' (ऋक्. 6-35-2)। प्रायशोऽयं छान्दसः। तेन लोकेऽपि प्रयोगो बहुत्र लक्ष्यते।

कर्हि च चिच्च इति समासे कर्हिचित् इत्यपि, 'जातु, कदाचित्' इत्याद्यर्थेषु समुदितं प्रयुज्यते। 'यत् तीर्थबुद्धिः सलिले न कर्हिचित्—'। एवं कर्हिस्वित् इत्यपि बोध्यम्। अत्र कर्हि+चित् इत्याद्याकारेण भिन्नं पदद्वयमित्याश्रयणमेव वरम्, पदपाठाद्यनुसारात्। मुग्धबोधाद्यनुसारेणैकपदत्वे पदपाठविरोधः स्फुटः।

(295)

"कसुन्" (कृ.)

एतदन्तमव्ययं भवति। यथा—'ईश्वरो विलिखः—'। विलिखितुमित्यर्थः। अत्र 'ईश्वरे तोसुन्कसुनौ' (3-4-13) इति ईश्वरशब्द उपपदे छन्दसि विषये लिख्धातोः कसुन्प्रत्ययः तुमुनर्थे। 'क्त्वातोसुन्कसुनः' (1-1-40) इत्यव्ययसंज्ञा। 'पुरा क्रूरस्य विसृपो विरप्शिन्—' 'पुरा जत्रुभ्य आतृदः —' (ऋक्. 8-1-12)। अत्र, 'सृपितृदोः कसुन्' (3-4-17) इति कसुन्। अत्रोभयत्र भावलक्षणे कसुन् इति विशेषः। भावो लक्ष्यते येन तत् भावलक्षणम्। कसुन् छन्दस्येव।

(296)

"कसेन्" (कृ.)

एतदन्तमव्ययं भवति। 'भगाय श्रियसे—'। अत्र 'तुमर्थे सेसेन्— (3-4-9) इत्यादिना कसेन्प्रत्ययः। श्रिञ्धातोः तुमुनर्थे छन्दसि कसेन्प्रत्यये, प्रत्ययस्य कित्त्वादियङादेशे, 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम्। नकारः स्वरार्थः। श्रियसे = श्रयितुमित्यर्थः।

(297)

"कात्" (कृ.)

कुत्सितमतनीत्यर्थे अतधातोः क्विपि, कोः कादेशे, समुदायस्य स्वरादिषु चादिषु वा पाठेऽव्ययत्वम्। तिरस्कारार्थकोऽयम्। 'यन्मयैश्वर्यमत्तेन गुरुः

सदसि कात्कृतः'। **केचित्** साक्षात्प्रभृतिषु (1-4-74) पाठमभ्युपगत्य कृञो योगे विभाषा गतिसंज्ञामस्याहुः। तदानीम्, 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' (वा. 1-4-74) इति वचनादभूततद्भावरूपोऽप्यर्थोऽत्र बोध्यः। येषां साक्षात्प्रभृतिगणो नियतगण इति मतम्—तेषां 'अनुकरणं चानितिपरम्' (1-4-62) इत्यनेन क्रियायोगे गतिसंज्ञायाम्, समासे कात्कृत्येत्यादीनां साधुत्वम्, 'खाट्कृत्य' इत्यादिवत् बोध्यम्। वस्तुतस्तु साक्षादादिराकृतिगण इत्येव न्याय्यम्। विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः।

(298)

## "कामम्" (क्र.)

स्वाच्छन्द्यानिच्छाङ्गीकारपर्याप्तिप्रकामासूयाऽनुगमनादिष्वर्थेषु अव्ययमिदम्। कमुधातोर्णिङन्तात् णमुलि रूपमेवम्। अस्य च चादिषु पाठादव्ययत्वम्। स्वाच्छन्द्ये—**कामं** चरति। अनिच्छाङ्गीकारे—'**कामं** श्वाम्यतु यः क्षमी' (माघे 2-43)। एतदेवानुमतिरित्यपि क्वचिदुच्यते। पर्याप्तौ—'महाभागः **कामं** नरपतिरभिन्नस्थितिरसौ—' (शाकुन्तले 4-10)। प्रकामार्थे '**कामं** प्रत्यादिष्टां—' (शाकुन्तले 5-31)। असूयायाम्—'त्वं **कामं** व्रजसि क्षितीशसविधे—'। अनुगमनेऽप्येवमुदाहार्यम्।

पुनरित्यर्थेऽपि दृश्यते। तद् यथा—'एको दाशरथिः **कामं** यातुधानाः सहस्रशः।' (रघुवंशे 12-45) इति।

(299)

“ **किम्** ” (चा-)

जिज्ञासा - क्षेप - ईषदर्थ - अतिशयाद्यर्थेषु चादित्वादव्ययत्वम्। जिज्ञासायाम्—**किं** गतः!। क्षेपे—‘स **किं**सखा साधु न शास्ति योऽधिपम—’ (किरात 1-5)। ईषदर्थे—न **किम**प्यस्यास्ति। अ**किञ्च**नः। अतिशये—‘ **किम**प्येष प्रगल्भते ’।

कुत इत्यर्थेऽपि प्रयुज्यते। यथा—‘वायुना **किं** न नीतोऽसौ मामयं याचयेदिति।’ इति। सर्वादिगणपठितः किंशब्दोऽन्यः, अव्ययसंज्ञकमिद-मन्यदिति बोध्यम्।

एतेन साकं विभिन्ननिपातयोगं कृत्वा, **किङ्किल, किञ्च, किञ्चन, किञ्चित्, किन्तमाम्, किन्तराम्, किन्तु, किन्नु, किमपि, किमु, किमुत, किंवा, किंस्वित्** इत्यादीनि बहून्यव्ययानि पठन्ति। विभिन्ननि-पातयोगादर्थोऽपि प्रकरणाद्यनुरोधेन विभिन्नो भवति। तेषां सन्दर्भाद्यनुरोधे-नार्थभेदप्रयोगादिकं यथासम्भवमूह्यमिति बोध्यम्। यथा **किङ्किल** इति अनव-क्लृप्त्यमर्षयोरर्थयोश्चादिषु समुदितं पठ्यते। ‘न मर्षये, न श्रद्दधे **किङ्किल** भवान् मिथ्या वक्ष्यति,। अत्र, ‘ **किङ्किला**स्त्यर्थेषु लृट्’ (3-3-146) इति लृट्। अनवक्लृप्तिः—अश्रद्धा। अमर्षः—कोपः।

तत्र **किञ्च** इत्यस्य आरम्भ - समुच्चय - साकल्य - सम्भावना-अवान्तरादयोऽर्थाः।

**किञ्चन** इति अल्प-असाकल्यावर्थेषु वर्तते ।

ईषदसाकल्याकिञ्चित्करादयः **किञ्चिदित्यस्यार्थाः** ।

बहूनां मध्ये एकस्यातिशये गम्ये कुत्सितार्थे **किन्तमाम्** इति ।

कुत्साविशिष्टे द्वयोरेकस्य परिप्रश्ने **किन्तराम्** इति ।

**किन्तु** इत्यस्य प्रागुक्तविरुद्धार्थ–पूर्ववाक्यसङ्कोचज्ञापन · किम्पुनरि-त्यर्थेषु वृत्तिः ।

प्रश्न-वितर्क-सादृश्य-स्थान-करणादयोऽर्थाः **किन्नु** इत्यस्य ।

साकल्यम **किमपीत्यस्यार्थः** ।

प्रश्न-निषेध-वितर्क-निन्दादयः **किमु** इत्यस्यार्थाः ।

प्रश्न-विकल्प-वितर्क-अतिशयादयः **किमुतेत्यस्यार्थाः** । किम्पुनरि-त्यर्थेऽपि दृश्यते । यथा—'प्राकृतोऽपि पुमान् नावमन्तव्यः, **किमुत** राजा'। 'गन्तुमुत्सहते नेह कश्चित्, **किमुत** वानरः॥' (भट्टिः 8-109)।

वितर्क-सम्भावना-पक्षान्तरद्योतकत्वादयः **किंवेत्यस्यार्थाः** ।

जिज्ञासापूर्वको वितर्कः **किंस्विदित्यस्यार्थः** । यथा—'**किंस्विद्** वनं क उ स वृक्ष आसीद् यतो द्यावापृथिवी निष्टतक्षुः।' (तै. ब्रा. 2-8-9-6)

(300)

"किल" (चा.)

आगम-अरुचि-न्यक्कार-सम्भाव्य-हेतु-अलीकादिष्वर्थेषु चादिरयम् । आगमे—'जघान कंसं किल वासुदेवः । (महाभाष्ये 3-2-111) ।

कृष्णकर्तृकः कंसवध आगमसिद्ध इत्यर्थः। अरुचौ—'एवं **किल** केचिद्वदन्ति'। केषाञ्चिदेवं वादो वक्तुररुचिविषय इत्यर्थः। न्यक्कारे—'त्वं **किल** योत्स्यसे, पश्यामः'। सम्भाव्ये—'पार्थः **किल** विजेष्यते कुरून्'। पार्थकर्तृकः कुरुविजयः सम्भावनाविषयः इति बोधः। हेतौ—'स **किल** कविरेवमुक्तवान्' (बालरामायणे 7-9)। अलीके—'प्रसह्य सिंहः **किल** तां चकर्ष।' (रघुवंशे 2-27)। सिंहकर्तृकं नन्दिनीकर्षणमलीकमित्यर्थः। [1]किलकिञ्चितम्।

प्रसिद्धि–सत्य–परकृत्यादिष्वपि दृश्यते। प्रसिद्धौ—'न **किला**नुययुस्तस्य राजानो रक्षितुर्यशः'। (रघु. 1-27)। सत्ये—'तादीत्ना शत्रुं न [2]**किला** विवित्से॥' (ऋक्. 1-32-4)। परकृतौ—'परिगतः **किल** पद्मभिरायुधैः—' (यादवाभ्युदये 3-34)। **परकृतिः**=अन्योक्तेरनुवादः, अन्यचर्याभिनयो वा। एवमयं वार्तायाम्, वाक्यालङ्कारे च क्वचित् प्रयुज्यते। **वार्ता**=निस्सार इत्यर्थः। वाक्यालङ्कारोऽपि, क्षोदे कृतेऽर्थशून्यत्वमित्यधस्तादवोचाम।

## (301)
## "की" (नि॰)

कुत्सार्थकमिदमव्ययमिति वाचस्पत्ये प्रोक्तम्। कीकट - कीकसादिशब्देषु 'की' इति कुत्सितार्थकेन निपातेन समास इति केचित्।

---

1. किल=अलीकेन किम्=ईषत्, चितम्=रचितमित्यर्थः। 'क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम्'।
2. ऋचि, 'निपातस्य च' (6-3-136) इति दीर्घः।

(302)

"कीम्" (नि.)

द्वेषरूपार्थे इदमव्ययमिति तिलकः। 'कीं काटप्राणि (?)' इत्युदाजहार च। उदाहरणे भावोऽनतिस्फुटः।

(303)

"कु" (स.)

पाप-कुत्सा-ईषदर्थ-निवारणेषु स्वरादिरेतत्। पापे—[1]कुष्ठः। 'कूष्ठो देवावश्विना द्या—' (ऋक्. 5-74-1) इत्यादिषु स्थलेषु दीर्घोऽप्यस्य छन्दस्सु परिदृश्यते। कुत्सायाम्—कुपुरुषः—[2]कापुरुषः। ईषदर्थे—कामधुरम्, [3]कोष्णम्—कवोष्णम्—कदुष्णम्। निवारणेऽप्येवमेवोह्यम्।

(304)

"कुतः" (त.)

किंशब्दात् पञ्चम्यर्थवृत्तेः 'पञ्चम्यास्तसिल्' (5-3-7) इति तसिल्। 'कु तिहोः' (7-2-104) इति प्रकृतेः 'कु' इत्यादेशः। आक्षेपविषये

---

1. 'कुगतिप्रादयः' (2-2-18) समासः। 'अम्बाम्बगोभूमि—' (8-3-97) इत्यादिना षत्वम्। कुष्ठरोगस्य पापफलत्वात् एवमुपचारः।
2. 'विभाषा पुरुषे' (6-3-106) इति 'कु' इत्यस्य 'का' इत्ययमादेशो विकल्पेन भवति।
3. 'ईषदर्थे' (6-3-105) इति कोः कादेशः। 'कवोष्णम्' इत्यादिषु तु 'कवं चोष्णे' (6-3-107) इति विकल्पेन कवादेशः। पक्षे 'कोः कत् तत्पुरुषेऽचि' (6-3-101) इति कदादेशः। एवञ्च रूपत्रयमत्रेति बोध्यम्।

हेतौ, प्रश्ने, निह्नवे चायं वर्तते। आक्षेपविषये हेतौ यथा— ‘ मदमूढबुद्धिषु विवेकिता कुतः ? ’ (माघः 13-6)। प्रश्ने—‘ कुतस्त्वा कश्मलमिदं—’ (गीता 2-2) ‘ कुतो भवान् ? पाटलिपुत्रात् ’। निह्नवे—‘ दक्षिणापथं प्रविष्टोऽसि ?, [1]कुतोऽहं दक्षिणापथं प्रविवेश ?। ’ कुतस्तराम्, कुतस्तमाम्, कुतस्त्यः।

(305)

“ कुत्र ” (त.)

किंशब्दात् ‘ सप्तम्यास्त्रल् ’ (5-3-10) इति त्रल्। प्रकृतेः ‘ कु ’ इत्यादेशः। कस्मिन् देशे, कस्मिन् काले इत्याद्यर्थेषु वृत्तिः। देशे—‘ स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते।’ काले—‘कुत्रापि न हि दृश्यते’ अत्र कालोऽर्थः। ‘कुत्र विधेयो यत्नः—’ इत्यादिषु तु विषयोऽप्यर्थः। कुत्रचित् कुत्रचन [2]कुत्रत्यः इत्यादयोऽप्येवमूह्याः।

(306)

“ कुम् ” (चा.)

प्रश्नार्थकोऽयं चादिषु पठ्यते। ‘कुं त्वं करोषि ?’। मन्त्रस्तोभवचनेऽपि दृश्यते।

---

1. अत्र ‘ अत्यन्तापह्नवे च लिड् वाच्यः ’ (वा. 3-2-115) इति लिट्। दक्षिणापथं बहुवारं गतवत एवं निह्नवेन प्रत्युक्तिरिति ज्ञेयम्।
2. ‘ अमेहक्वतसित्रेभ्य एव ’ (वा. 4-2-104) इति वचनात् त्यप्।

(307)

"कुवित्" (चा.)

स्तुति-भूयर्थादिषु चादिरयम् । स्तुतौ—'कुविन् सु नो गविष्टये' (तै. सं. 2-6-11-3) भूयर्थे—'कुविदङ्ग नमसा ये वृधासः—' (ऋक्. 7-91-1) । 'कुविन्नो अग्निरुचथस्य —' (ऋक्. 1-143-7) इत्यादिषु प्रश्नार्थकोऽप्ययं लक्ष्यते ।

(308)

"कुह" (त.)

किंशब्दात् सप्तम्यन्तात्, 'वा ह च च्छन्दसि' (5-3-13) इति हप्रत्यये 'कु तिहोः' (7-2-104) इति 'कु' इत्यादेशः । 'नासत्या कुह चित् सन्तावर्यो—' (ऋक्. 1-184-1) । कुत्रेत्यर्थः ।

(309)

"कूपत्" (चा.)

प्रश्न-वितर्क-प्रशंसासु पठ्यतेऽयम् । प्रश्ने—'कूपत् पठति ?' (किं पठतीत्यर्थः) । वितर्के—स्थाणुः कूपत् पुरुषः ? । प्रशंसायाम्—कूपद्य गायति । काव्येषु मृग्यप्रयोगोऽयम् ।

(310)

"कृतम्" (चा.)

निषेध - वारणादयोऽस्यार्थाः । निषेधे—'कृतं पुरुषशब्देन जातिमात्रावलम्बिना '(किरात. 11-72) । वारणे—'प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथवा गिराकृतम् ।' (रघु. 11-41) । पर्याप्त्यर्थकस्य कृतम् इत्यस्य

'युगपर्याप्तयोः **कृतम्**' इत्यमरवचनात् कृञ्धातोः क्तप्रत्यये नपुंसकलिङ्गत्वं केचिदाशेरते। मल्लिनाथप्रभृयतु अव्ययत्वमेवानुमन्यन्ते इत्यलम्।

(311)

"**कृते**" (चा.)

निमित्तार्थे एदन्तो निपातोऽयम्। 'शरीरस्यापि [1]**कृते** मूढाः पापानि कुर्वते'। (नागानन्दे 4-7)

(312)

"**कृत्वसुच्**" (त.)

एतदन्तमव्ययमिति बोध्यम्। 'शतकृत्वोऽप्यधीयाना ही न विप्रो जडा वयम्'। 'त्रिस्सप्तकृत्वः क्षितिम्'। बहुकृत्वः-बहुधा। अत्र 'बहुगण-वतुडति संख्या' (1-1-23) इति बहुशब्दस्य संख्यासंज्ञायाम्, 'विभाषा बहोर्धाऽविप्रकृष्टकाले' (5-4-20) इति क्रियाभ्यावृत्तिगणने विकल्पेन धाप्रत्ययः। पक्षे 'संख्यायाः क्रियाभ्यावृत्तिगणने—' (5-4-17) इति कृत्वसुच्। एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं = क्रियाभ्यावृत्तिगणनम्।

(313)

"**कृत्वा**" (प्र.प्र.)

क्त्वाप्रत्ययप्रतिरूपकमेतत्। अस्य च 'प्रत्ययप्रतिरूपकाः' इति चादिषु पाठादव्ययत्वमिति ज्ञेयम्। अतोऽत्रासमानकर्तृकत्वेऽपि क्त्वाप्रत्ययः,

---

1. निमित्तार्थकस्य 'कृते' इत्यस्य प्रयोगात् अत्र 'षष्ठी हेतुप्रयोगे' (2-3-26) इति षष्ठी इति ज्ञेयम्।

तेन समासेऽपि ल्यबभाव इत्यादिकमस्य फलमित्याद्यूह्यम्। 'मूर्ख इति कृत्वा त्याज्यः'। कृत्वाचिन्ता। एवं 'प्रसज्यप्रतिषेधः' इत्यादिष्वपि बोध्यम्।

(314)

"केन्" (कृ.)

एतदन्तमव्ययम्। नावगाहे। नावगाहितव्यमित्यर्थः। अवपूर्वकात् गाहू विलोडने' इत्यस्मात् 'कृत्यार्थे तवैकेन्केन्यत्वनः' (3-4-14) इति केन्प्रत्ययः। नकारः स्वरार्थः। कृत्यार्थः= भावः, कर्म वा। एजन्तकृत्त्वात् 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञा। छान्दसोऽयम्।

(315)

"केवलम्" (ख.)

एकमात्रे, अद्वितीयेऽसहाये चार्थेऽस्य स्वरादित्वं तिलकप्रभृतयोऽङ्गी-कुर्वन्ति। शब्दकल्पद्रुमादिषु तु त्रिलिङ्गोऽयं विशेष्यनिघ्नत्वेन पठितः। 'केवलं स्मरणेनैव पुनासि पुरुषं यतः।' (रघु. 10-29)।

(316)

"केवाली" (ऊ.)

हिंसार्थकोऽयमूर्यादिगणे (1-1-61) पठितः। केवालीकृत्य—हिंसि-त्वेत्यर्थः।

(317)

"केवासी" (ऊ.)

एतदपि हिंसार्थकमव्ययम्। केवासीकृत्य हिंसित्वा।

(318)

"कै" (कृ.)

एतदन्तमव्ययम्। "प्रयै देवेभ्यः—" (ऋक्. 1-142-6)। अत्र प्रपूर्वकाद् याधातोः 'प्रयै रोहिष्यै अव्यथिष्यै' (3-4-10) इति ऐप्रत्ययान्तत्वं निपात्यते। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः। एजन्तकृत्त्वादव्ययत्वम्। प्रयै=प्रयातुमित्यर्थः। छान्दसोऽयम्।

(319)

"क्त्वा" (कृ.)

एतदन्तमव्ययसंज्ञकं ज्ञेयम्। एतद्विस्तरस्तु बहुत्रास्माभिः प्रपञ्चितोऽनुसन्धेयः। 'क्त्वातोसुन्कसुनः' (1-1-40) इत्यव्ययत्वम्।

१. अस्य समासे ल्यप् भवति। वेदेषु सोपसर्गादपि क्वचिन्न ल्यप्' यथा—'कृष्णं वासो परिधापयित्वा'। अत्र 'क्त्वाऽपि छन्दसि। (7-1-38) इति (ल्यपा साकं) क्त्वाप्रत्ययोऽपि समाह्रियते। एवम् 'प्रत्यञ्चमर्कं प्रत्यर्थयित्वा' (अथर्व. 12-2-55) इत्यादिष्वपि ज्ञेयम्।

२. क्वचित् यक् भवति। यथा—'दिवं सुपर्णो गत्वाय' (ऋक्. 8-10-8) 'दत्त्वा सविताऽधिपः'। अत्र 'क्त्वो यक्' (7-1-47) इति यक्। अयमपि छन्दस्येव।

३. छन्दसि इषधातोः क्त्वायाम्, 'इष्ट्वीनमिति च' (7-1-48) इति निपातनात् 'इष्ट्वीनं देवान्' इत्यादिषु ईनमादेश इति ज्ञेयम्। अत्र सूत्रे चकारात्, 'पीत्वीनम्' इत्याद्यपि सिद्ध्यतीति वामनादयः।

४. 'स्विन्नः **स्नात्वी** मलादिव', (तै.ब्रा. 2-4-4-9) '**पीत्वी** सोमस्य वावृधे' (ऋक्. 3-40-7) इत्यादिषु '**स्नात्व्यादयश्च**' (7-1-49) इत्यत्र निपातनात् क्त्वाप्रत्ययान्तस्यकारः। लोके तु **स्नात्वा पीत्वा** इत्यादय एव साधवः।

५. '**हित्वा** शरीरं यातव्यम्, **हात्वा** वा'। अत्र 'विभाषा छन्दसि' (7-4-44) इतीत्वविकल्पः।

६. सहधातोः क्त्वायाम् '**साढ्यै साढ्वा**—' (6-3-113) इति निपातनात् ओत्वाभावः। पक्षे क्त्वाप्रत्ययस्य ध्यैभावः। लोके तु **सोढ्वा** इत्येव। **साढ्यै साढ्वा** इति छन्दस्येव।

७. 'दान्त्यनुपूर्वं **वियूय**,' 'यत्रा यो दक्षिणा परिप्लुय' इत्यादिषु स्थलेषु समासे ल्यपि, 'युप्लुवोर्दीर्घश्छन्दसि' (6-4-58) इति प्रकृतेर्दीर्घः; तेन ह्रस्वाश्रितस्तुग् नेति ज्ञेयम्।

एवं बहवो विशेषाः क्त्वाल्यबाश्रिताश्छन्दसि दृश्यन्ते। ते सर्वेऽपि यथाशास्त्रमेवमेवोह्या इति दिक्।

(320)

"क" (त.)

सप्तम्यन्तात् किंशब्दात् '**किमोऽत्**' (5-3-12) इत्यत्प्रत्ययः। अस्य विभक्तिसंज्ञकत्वेऽपि प्रत्ययतकारस्य नेत्संज्ञानिषेधः; 'इदमस्थमुः' (5-3-24) इत्यत्र मकारपरित्राणार्थं उकारानुबन्धकरणेन 'न विभक्तौ तुस्माः' (1-3-4) इत्यस्यानित्यत्वज्ञापनात्। '**क्वाति**' (7-2-105)

इति प्रकृतेः 'कु' इत्यादेशः, यणादेशः। 'कस्मिन् देशे' इत्यर्थः। केचित् किंशब्दात् सप्तम्यन्ताद्विहितस्य त्रलोऽयमपवाद इति वदन्ति। 'कुत्र' इत्यबाधितप्रयोगदर्शनात् अन्ये तन्नाद्रियन्ते। 'क्वैष एतद् बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्....'। क्वचित् अत्यन्तासम्भावनार्थेऽपि प्रयुज्यते; यथा—'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।' (रघु. 1-3) इति। क्वचित्, क्वचन। क्वत्यः। अत्र 'अमेहक्वतसित्रेभ्यः—' (पा. 4-2-104) इति शैषिकस्त्यप् प्रत्ययः।

(321)

"कित्" (स्व.)

भर्त्सनार्थकोऽयम्। 'कित् कितव!'। "पूरणेऽप्याहुः—कित् क्वैतदुपयुज्यते—" इति तिलकः। अयं भावः—पूरणे = पादपूरणेऽप्यस्य वृत्तिरिति।

(322)

"क्से" (कृ.)

एतत्प्रत्ययान्तमव्ययसंज्ञकं बोध्यम्। 'प्रेषे भगाय' (तै.सं. 1-2-11-1)। अत्र प्रपूर्वकादिणः 'तुमर्थे सेसेनसे—' (3-4-9) इत्यादिना क्सेप्रत्ययः। 'आद्गुणः' (6-1-67) इति गुणः। प्रत्ययस्य एजन्तकृत्त्वादव्ययत्वम्। प्रेषे = प्रगातुमित्यर्थः। 'अव्ययकृतो भावे' इति भाष्यकारवचनात् भावार्थकोऽयं प्रत्ययः।

(323)

"**क्षमा**" (स्व.)

शान्तावस्य वृत्तिः। '**क्षमा**करोतु भवान्'। 'क्षितिक्षान्त्योः **क्षमा,** युक्ते क्षमं, शक्ते हिते त्रिषु' इत्यत्र '**क्षमम्**' इत्यपि 'साम्प्रतम्' इत्यर्थेऽव्ययमिति **केचित्** व्याकुर्वन्ति। 'पतिगृहे तव दास्यमपि **क्षमम्**।' (शाकुन्तले 5-27) इत्युदाहरन्ति च। 'यदिदं ते **क्षमं** राजन् गमिष्यामि यथागतम्' इति (वा. रामायणे १-२०-३) इति दशरथं प्रति विश्वामित्रवाक्यम्।

(324)

"**क्षिप्रम्**" (स्व.)

शीघ्रार्थोऽयम्। '**क्षिप्रं** ततोऽध्वन्यतुरङ्गयायी—' (भट्टिः 2-44)। क्रियाविशेषणमप्येतत्। 'क्षिप प्रेरणे' इत्यस्मात् 'स्फायितञ्चि—' (उणादिसू.) इत्यादिना रक्प्रत्ययः। विशेष्यनिघ्नत्वमस्य **केचि**दिच्छन्ति। 'असत्त्वेऽपि च शीघ्रार्थे—' इति **वाङ्मयार्णवादि**प्रामाण्यात् अव्ययत्वं न्याय्यम्।

(325)

"**खमुञ्**" (कृ.)

एतदन्तमव्ययम्। चोर**ङ्कार**माक्रोशति। अत्र 'कर्मण्याक्रोशे कृञः खमुञ्' (3-4-25) इति खमुञ्। चोरोऽसि, दस्युरसि—इत्याक्रोशतीत्यर्थः। मान्तकृत्त्वादव्ययत्वम्। खित्त्वान्मुमागमः।

(326)

"**खलु**" (चा.)

निषेध– वाक्यालङ्कार-जिज्ञासा-अनुनय-नियम-निश्चय-हेतु - विषादादयोऽस्यार्थाः। निषेधे—[1]**खलु** कृत्वा। 'निर्धारितेऽर्थे लेखेन **खलू**क्त्वा **खलु** वाचिकम्।' (माघः—2-70)।

---

1. 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' (3-4-18) इति अत्र क्त्वाप्रत्ययः।

वाक्यालङ्कारे—'अथो खल्वाहुः—'।

जिज्ञासायाम्—'प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते वा हवींषि।' (अनर्घराघवे 1-25)।

अनुनये—'न खलु न खलु मुग्धे! साहसं कार्यमेतत्' (नागनन्दे 2-11)

नियमे—'प्रवृत्तिसाराः खलु मादृशां गिरः'। (किरात. 1-25)। नियमोऽवधारणम्। प्रवृत्तिसाराः एवेत्यर्थः।

निश्चये—'खलु दीयते तुभ्यम्' (निश्चयं दीयत इत्यर्थः)।

हेतौ—'त्वदधीनं खलु देहिनां सुखम्।' (कुमार. 4-10)।

विषादे—'न विदीर्ये; कठिनाः खलु स्त्रियः'। (कुमार. 4-5)।

पादपूरणेऽपि। यथा—'वध्याः खलु न वध्यन्ते—' (रामा. 3-41-6)। वीप्सायामपि दृश्यते; यथा—'काले खलु समारब्धाः फलं बध्नन्ति नीतयः।' (रघुः)। काले खलु=कालेकाले इत्यर्थः। केचित्तु अत्र 'वीप्सा=व्याप्तिः' इति वदन्ति।

(327)

## "खलेबुसम्" (तिष्ठद्गु)

खले बुसानि यस्मिन् काले स कालः खलेबुसम्। तिष्ठद्गुगणे (2-1-16) निपातनात् सप्तम्या अलुक्; अव्ययीभावसमासश्च। 'खलेबुशम्' इति गणरत्नमहोदधिपाठः। खल्यन्ते=सञ्चीयन्ते यशांसि शूरैः, धान्यानि वा लौकिकैः यत्र, तत् खलम् रणाजिरम्, धान्यातपनस्थानं च।

एवं यस्मिन् काले खले यवाः स कालः **खलेयवम्**। अत्रापि तिष्ठद्गुगणपाठात् सप्तम्या अलुक्, अव्ययीभावसमासश्च। अव्ययीभावसमासादन्यत्र खलबुसः खलयवः इति रूपे। **खलबुसः**=युद्धे यः पलायति स उच्यते। **खलयवः**=साम्प्रहारिकः।

(328)

**"खाट्"** (ग.)

'अनुकरणं चानितिपरम्' (1-4-62) इति शब्दस्यास्य क्रियायोगे गतिसंज्ञा। [1]**खाट्कृत्य**। 'चुम्बनसक्तः सोऽस्याः च्युतमूलं दशनमात्मनो वदने। जिह्वामूलस्पृष्टं [2]**खाडिति** कृत्वा निरष्ठीवत्॥' इत्यत्र तु इतिपरकत्वात् न गतिसंज्ञा।

(329)

**"खुम्"** (ग.)

मन्त्रस्तोभवचने गतिसंज्ञकोऽयं मन्त्रशास्त्रेषु मालामन्त्रेषु कूटमन्त्रेषु च प्रसिद्धः। चादिषु पाठ उन्नेयः।

---

1. वृक्षादीनां पतनावसरे 'खाट्' इति यः शब्द उपजायते, तस्यानुकरणमत्र। तेन गतिसंज्ञायाम्, 'कुगति—' (2-2-18) इति समासे ल्यप्।

2. कस्यचित् कवेरयं श्लोकः भाष्यादिषु (1-4-62) उदाहृत इति ज्ञेयम्।

(330)

" खोः " (चा.)

कुत्सायां वर्ततेऽयम्। 'खोः कटं करोति'। कटकरणं यथावत् ज्ञात्वाऽपि सम्यक् न करोतीत्यर्थः।

(331)

" गच्छति " (ति. प्र.)

शक्तेऽर्थे तिङन्तप्रतिरूपकमिदम्। 'नेतुं नाभिरितो न याति विदिशं किं भद्र !....गच्छति'। (ग. र. म. उपात्तः श्लोकः)।

(332)

" गुम् " (नि.)

मन्त्रास्तोभवचनोऽयम्। प्रयोगो मन्त्रशास्त्रेषु मृग्यः।

(333)

" गुलुगुधा " (ग.)

पीडार्थकोऽयं ऊर्यादिषु (1-4-61) पठ्यते। 'क्रीडायाम्' इति केचित्। 'सहार्थे' इति वाचस्पत्यम्। ऊर्यादीनां कृभ्वस्तियोग एव गतिसंज्ञाविधानम्। यद्यपि ऊर्यादिषु सर्वत्र कृञो योग एवोदाहृतः। तथापि उपलक्षणमेतत् अस-भूधात्वोरपीति ज्ञेयम्। गुलुगुधाकृत्य = पीडयित्वेत्यर्थः। 'गुलगुधा' इत्यपि पठन्ति।

(334)

" गुहा " (नि.)

गोपन—नष्टप्रायकरणार्थयोरयं निपातश्छान्दसः। '—यो दासं वर्णमधरं गुहाऽकः।' (ऋक्. 2-12-4)।

(335)

" घ " (चा.)

हिंसा-प्रातिलोम्य - पादपूरणेषु चादिरयम्। 'घ हिनस्ति मृगं व्याधः।' इति **गणरत्नमहोदधिः**।

(336)

" घुम् " (नि.)

मन्त्रस्तोभवचनोऽयं निपातः।

(337)

" घृङ् " (नि.)

अव्यक्तशब्दे निपातोऽयम्। 'घृङ् इति पपात....तद् यद् घृङ् इत्यपतत् तस्माद् घर्मः।' (शतपथब्राह्मणे 14-1-1-10)। छान्दसोऽयम्।

(338)

" च " (चा.)

अन्वाचय-समाहार-इतरेतरयोग-समुच्चय-विनियोग-तुल्ययोगिता-अवधारण-हेतु-पादपूरण-यद्यर्थादिषु वर्ततेऽयम्।

[1]अन्वाचये—भिक्षामट गां च आनय।

[2]समाहारे—पाणी च पादौ च पाणिपादम्।

[3]इतरेतरयोगे—'पचति च पठति च चैत्रः'।

[4]समुच्चये—अहं च त्वं च पुत्र गच्छावः।

विनियोगे—'कृतं च गर्वाभिमुखं मनस्त्वया'।

तुल्ययोगितायाम—'किमन्यदेवं निहताश्च नो द्विषः'।

अवधारणे—'अतीतः पन्थानं तव च महिमा वाङ्मनसयोः' (अतीत एवेत्यर्थः)।

हेतौ—ग्रामश्च गन्तव्यः, शीतं च। (शीताद्धेतोः कथं गम्यते ! इत्यर्थः)।

पादपूरणे—'भीष्मः पार्थस्तथैव च'।

[5]यद्यर्थे—त्वं च गमिष्यसि, फलिष्यति नः कामः।

[6] पक्षान्तरेऽपि प्रयुज्यते। यथा—'शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य !।' (शाकुन्तले)। एवम् 'किञ्च' इत्यर्थेऽपि;

---

1. एकस्य प्राधान्येऽन्यतरस्यानुषङ्गिकत्वे च अन्वाचय इत्युच्यते।
2. परस्परं तिरोहितावयवभेदः समाहारः।
3. मिलितानामन्वय इतरेतरयोगः।
4. परस्परनिरपेक्षस्यानेकस्य एकत्रान्वयः समुच्चयः।
5. यद्यर्थकत्वमस्य नानार्थार्णवसंक्षेपे द्रष्टव्यम्।
6. 'पुनः' इत्यर्थकत्वमस्य पक्षान्तरम्। एतेषां विस्तरादिकं वृत्ति-न्यास-पदमञ्जर्यादिषु प्रपञ्चितं तत्रैव द्रष्टव्यम्। एतेष्वर्थेषु समुच्चयान्वाच-

यथा — 'दधति च विकसद्विचित्रकल्पद्रुमकुसुमैरभिगुम्फितानिवैताः।' (शिशुपालवधे 4-50)।

(339)

"चटु" (चा.)

प्रियवाक्यार्थे चादिरयं मनोरमादिषु पठितो द्रष्टव्यः। क्रियाविशेषणमेतत्; अतो नपुंसकलिङ्गत्वमस्य इति केचिदभ्युपयन्ति।

(340)

"चण्" (चा.)

णकारोऽस्यानुबन्धः। चकारस्यार्थेषु समुच्चयादिषु वर्तते। 'चेत्' इत्यर्थे अस्य णित्वं ज्ञेयम्। आशङ्कायाम् '[1]अयं च वै मरिष्यति'। चेदर्थाः आशङ्काऽप्यर्थावधारणाः। अप्यर्थे—'न च पितृभ्यः पूर्वेभ्यो दास्यति'। अवधारणे—'अप्रायश्चित्तिकृतौ च स्याताम्'। इतीमान्युदाहरणानि ज्ञेयानि। स्पष्टमिदं 'चण् णिद्विशिष्टश्चेदर्थे' (वा. 8-1-30) इत्यत्र भाष्यप्रदीपोद्द्योतादिषु। छान्दसोऽयम्।

---

ययोरसामर्थ्यान्न समासः। स्पष्टमिदम् 'चार्थे द्वन्द्वः' (2-2-29) इत्यत्र।

1. अयं चेद् मरिष्यतीत्यर्थः। 'निपातैर्यद्यदिहन्तकुविन्नेच्चण्—' (8-1-30) इति सूत्रवृत्तौ स्पष्टमिदम्।

(341)

"चतुः" (त.)

क्रियाभ्यावृत्तिगणने चतुश्शब्दात् 'द्वित्रिचतुर्भ्यः सुच्' (5-4-18) इति सुच् तद्धितः। 'सुच्' (ग. सू.) इति स्वरादिषु पाठात् सुजन्तस्याव्ययत्वम्। [1]चतुः पचति—चतुष्पचति।

(342)

"चन" (चा.)

असाकल्यविस्मयोपमानासम्मतिषु वर्तते। असाकल्यम्=अकार्त्स्न्यम्। अस्मिन्नर्थे प्रायः किंवृत्तात् परः प्रयुज्यते। यथा—**कश्चन, काचन, किञ्चन**, इत्यादिषु। किम्वृत्तादित्युक्तेः **कुत्रचन, कदाचन, कुतश्चन, कथञ्चन, यदाकदाचन** इत्यादयः सिद्धा वेदितव्याः।

विस्मये—'याचिता ये न कुप्यन्ति पुरुषाः केचनैव ते'।

उपमायाम्—'अग्निश्चन भाति'। अग्निरिव भातीत्यर्थः।

असम्मतौ—'कुल्माषांश्चनाहर, बिसंचन आहर'। अत्र कुल्माषाहरणं बिसाहरणं वाऽसम्मतम्। अन्यरत् संमत मित्यर्थः।

निषेध-समुच्चय-विध्यर्थेष्वपि वेदेषु दृश्यते। यथा—'ममचन त्वा युवतिः परास....' (ऋक्. 4-18-8)। अत्र निषेधोऽर्थः। 'स्वप्नश्चन

---

1. 'द्विस्त्रिश्चतुरिति कृत्वोऽर्थे' (8-3-43) इति षत्वविकल्पः।

इद् अनृतस्य प्रयोता' (ऋक्. 7-86-6)। अत्र 'स्वप्नश्चन=स्वप्नोऽपि' इति **भाष्यात्** समुच्चयार्थकत्वं ज्ञेयम्। विध्यर्थकत्वम्—'नहि त्वदारे निमिषश्चनेशे॥' (ऋक्. 2-28-6) इत्यत्र बोध्यम्।

वेदेषु '**च+न**' इति पदद्वयसमुदायः, ऐकपद्यं तु अध्यापक-सम्प्रदायाधीनम्; अत एव चकारार्थस्य समुच्चयस्य, नकारार्थस्य निषेधस्य च कुत्रचित् प्रतीतिरिति वृद्धाः।

(343)

"**चनः**" (स्व.)

अन्नश्रद्धादिवाचकमिदम्। अन्ने—'[1]**चनो** दधिध्व पचतोत सोमम्' (ऋक्. 10-116-8)। श्रद्धायां प्रयोगो मृग्यः।

(344)

"**चरमम्**" (स्व.)

अवर-अनम्रार्थयोरेतदव्ययत्वेन स्वरादिविवरणे **तिलकादिभिः** पठितमिदम्। अवरे—'पूर्वमयशः स्फुरति, **चरमम्** अधरः'। अनम्रे—**चरमं** रमणीयम्। क्रियाविशेषणत्वेन **वाचस्पत्यादिषु** विशेष्यनिघ्नत्वं चरमशब्दस्याङ्गीकृतम्। सर्वादिपाठसामर्थ्यात् तदेव युक्तं प्रतीमः।

---

1. अत्र वाचस्पत्यादिषु नपुंसकलिङ्गोऽयं चनश्शब्दः पठितः। वैयाकरण-ग्रन्थेषु तु सर्वत्र स्वरादिषु (अव्ययत्वेन) पठ्यते।

(345)

"चाटु" (चा.)

प्रियवाक्ये वृत्तिरस्य । **प्रौढमनोरमादिषु** चादेराकृतिगणत्वप्रदर्शनार्थं पठितोऽयम् । 'न शब्दश्लोककलहगाथावैरचाटु—' (3-2-23) इति सूत्रस्वारस्ये तु अस्य चादित्वं चिन्त्यप्रयोजनम् ।

(346)

"चि" (नि.)

वेदेषु श्रूयतेऽयं निपातः । प्रयोगो मृग्यः ।

(347)

"चित्" (चा.)

असाकल्याप्यर्थोपमानासम्मतयोऽस्यार्थाः । असाकल्ये—'आश्चर्य-श्चिद् इदं ब्रूयात्—' (निरुक्ते 1-4) । अप्यर्थे—**किञ्चिन्न** प्रयच्छति । किञ्चिदपि न यच्छतीत्यर्थः । उपमाने—अग्निश्चिद् भाति । अग्निरिव भातीत्यर्थः । असम्मतौ—'कुल्माषांश्चिदाहर बुसांश्चिदाहर' । कुल्माषं बुसं वाऽऽहर ; न मे तत्रास्था, इत्यर्थः ।

असाकल्यार्थे प्रायः किंवृत्तात् परः प्रयुज्यते । यथा—**कश्चिन**, **काचित्**, **किञ्चित्**, **कदाचित्**, **कुत्रचित्**, **कर्हिचित्**, **क्वचित्**, **कुतश्चित्** इत्यादि । व्याकरणान्तरेषु प्रत्ययत्वेनायं विहितः ।

'यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्।' (ऋक्. 1-25-1) इत्यत्र शोभार्थकोऽपि प्रयुक्तः।

(348)

"चित्ता" (सा·)

मानसव्यापाररूपार्थे साक्षात्प्रभृतिषु पाठान्तरत्वेन पठितोऽयम्। अचित्ता चित्ता कृत्वा **चित्ताकृत्य**। 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' (वा. 1-4-74) इति वचनात् च्व्यर्थकत्वम्। कृञो योगे गतिसंज्ञायाम्। समासे ल्यपि रूपमेवम्।

(349)

"चिन्ता" (सा.)

पूर्ववदस्यापि मानसव्यापारोऽर्थः। '**चिन्ताकृद्** आश्रितहितोऽरि-विकल्पनेकृत्—' इति **गणरत्नमहोदधिः**।

(350)

"चिरम्" (स्व.)

कालविप्रकर्षोऽस्यार्थः। 'किञ्चिन्नम्रमुखी प्रियेण हसता बाला **चिरं** चुम्बिता' (अमरुके 77)।

अत्रेदमवधेयम्—चिरशब्दोऽनव्ययः सुबन्तोऽप्यस्ति। तद् यथा— 'तन्त्रादचिरापहृते' (5-2-70), '**चिरपरुत्परारिभ्यः** त्नो वक्तव्यः' (वा. 4-3-23) 'अथ साय**चिरयोः** किं निपात्यते?' (भाष्यम् 4-3-23)

इति **सूत्रवार्त्तिकभाष्य**प्रयोगात्। न चात्रापि '**चिरम्**' इत्यस्यैव समास इति भ्रमितव्यम्; समासेऽपि 'अहंयुः, शुभंयुः—' इत्यादिष्विव मकारश्रवणापत्तेः। ततश्च कालविप्रकर्षार्थकश्चिरमित्यव्ययसमानार्थकः सुबन्तोऽप्यस्तीति सिद्धम्। अत एव 'ध्यायन्ती वा **चिर**विरहितान् एकशय्याविहारान्' (हंससन्देशे 2-12) इत्यादयः प्रयोगाः प्राज्ञैः निर्व्यूढा इत्यास्तां तावत्। विस्तरस्तु **लक्ष्मीसहस्ररत्नप्रकाशिकायां** द्रष्टव्यः।

**परे** तु आपिशलव्याकरणे **चिर**शब्दो नपुंसकलिङ्ग उदिष्टः। **पाणिनीये**ऽपि सर्वासु च विभक्तिषु पठ्यते। ततश्च द्विवचनादिषु लुप्तप्रयोगस्य पश्चात् स्वरादिषु पाठेनाव्ययत्वमस्य कल्पितम्। अत एवाद्यापि समानार्थकाः सार्वविभक्तिकाः समानप्रकृतिकाः **चिरम्, चिरेण, चिराय, चिरात्, चिरस्य, चिरे** इत्याकाराः प्रयोगाः (असत्त्ववृत्तयो) लभ्यन्ते। एतेन **चिररात्राय** इत्यपि व्याख्यातम्—इति वदन्ति। अभिधानकोशेषु तु सर्वत्र अव्ययत्वेनैतेषां विवरणं कृतम्—इत्यलमतिविस्तरेण।

'हविर्यत् **चिररात्राय** यच्चानन्त्याय कल्पते।' (मनु. 3-266)।, '[1]**चिरेण** मित्रव्यसनी सुदमो दमघोषजः॥' (शिशु. 2-60), '**चिराय**

---

1. वाचस्पत्ये चिरशब्दादेनप्प्रत्ययेनेदं रूपं प्रसाध्य, 'चिरेण मित्रं बध्नीयात् चिरेण च कृतं त्यजेत्। चिरेण च कृतं मित्रं चिरं धारणमर्हति॥' (भारते. शा. 267-अ.) इति श्लोक उदाहृतः। 'एनपा द्वितीया' (2-3-31) इति अत्र स्थले द्वितीयेति तस्याशयः। 'एनबन्यतरस्याम् अदूरे पञ्चम्याः' (5-3-35) इति एनब्विधायके

निर्धनो भूत्वा भवत्यद्रा महाधनः।', 'चिरादपि बलात्कारो बलिनः सिद्ध-येऽरिषु।' (शिशु. 2-105), 'चिरस्य याथार्थ्यमलम्भि दिग्गजैः।' (शिशु. 1-61) इति प्रयोगाः।

(351)

"चेत्" (चा.)

यद्यर्थे, वारणोपदेशे च इदमव्ययम्। यद्यर्थे—'शान्तिश्चेत् अमृतेन किम्?'। वारणोपदेशे—'न चेत् व्याधीयेत गुरोरुच्छिष्टं भुञ्जीत'।

निश्चयेऽपि। यथा—'स्याल्लिङ्गमपि सापेक्षं तत्सिद्धेरत एव चेत्'। (ब्रह्मसिद्धिः, नियोगकाण्डे ६९ श्लोकः)। अत्र भावशुद्धिर्व्याख्या—'चेत् इति निश्चयेऽपि प्रयुञ्जते वृद्धाः' इति।

'चेत् कुत्सितेऽथ साकल्ये स्तुतौ पक्षान्तरेऽव्ययम्।' इति वाङ्मयार्णवः। असन्देहेऽपि सन्देहवचनमप्यस्यार्थः। यथा—'सत्यं चेद् गुरुवाक्यमेव....' (शब्दार्थचिन्तामणिः)—इति शब्दकल्पद्रुमः।

---

सूत्रे पूर्वसूत्रात् 'उत्तराधरदक्षिणात्' इति प्रकृतेरनुवर्तमानत्वात् चिन्त्यमिदम्। 'परेण नाकम्' इत्यादिसिद्ध्यर्थं 'उत्तराधरदक्षिणात्' इति नानुवर्तनीयमिति मन्यमानानां मतेऽपि 'दिक्छब्देभ्यः—' (5-3-27) इति दिग्वाचकशब्देभ्य एव एनपो विधानस्य सम्मतत्वात्, 'चिरेण' इत्यस्य कालवाचकत्वेन तेनापि निस्ताराभावात्।

## (352)

## "च्विः" (कृ.)

च्विप्रत्ययान्तस्य 'च्विरव्ययम्' (दशपादुणादिः 2-13) इत्यव्ययत्वम्। इति केचित्। वस्तुतस्तु 'ऊर्यादिच्विडाचश्च' (1-4-61) इत्यस्य क्रियायोगे गतिसंज्ञायामव्ययत्वम्। (अभूततद्भावे) 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (5-4-50) इति अभूततद्भावरूपार्थे वर्तमानस्य च्विप्रत्ययो विधीयते। यथा—अशुक्लः शुक्लः सम्पद्यते [1]शुक्लीभवति इति। शुक्लीकरोति, शुक्लीस्यात्; [2]अरूकरोति, उन्मनीभवति, उच्चक्षूकरोति, विचेतीकरोति, विरहीकरोति, विरजीकरोति।

## (353)

## "छम्बट्" (चा.)

अन्तःकरणमस्यार्थः। 'छम्बट्शुद्धिः'—हृल्लाभ इत्यर्थः। आभिमुख्येऽप्याहुः—'छम्बण्मुखो धावति'—इति तिलकः। 'कंबट्' इति क्वचित्पाठः। 'शम्बट्' इति प्रौढमनोरमा।

---

1. 'अस्य च्वौ' (7-4-32) इतीकारः। 'च्वौ च' (7-4-26) इति दीर्घः। च्विप्रत्ययः सर्वलोपी।
2. अत्र 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' (5-4-51) इति अन्त्यलोपश्च्विप्रत्ययसंनियोगेन भवतीति विशेषः।

(354)

" जनः " (चा.)

लोकान्तरवाचीदमव्ययमिति **क्षीरस्वामी**। 'ओं जनः' इति **तिलकेना**-भ्युदाहृतम्। परं तु 'तपस्' इत्यादिवत् नपुंसकलिङ्गत्वमेवास्य लोकवाचकत्वेऽपि न्याय्यमिति प्रतिभाति।

(355)

" जम् " (नि.)

पत्नीवाचकमिदमव्ययमिति **भरतोदाहृतनामप्रपञ्चे** जम्पतीशब्द-विवरणावसरे प्रतिपादितमिति **शब्दकल्पद्रुमः**। 'पत्न्यां जं दमलिङ्गत्वे' इति **नामप्रपञ्चवचनमपि** **अमरसुधायामुपात्तम्**। वस्तुतस्तु—'जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते' (काशिका 2-2-31) इति **अभियुक्तवचनात्** निपातनेनैवास्य निर्वाह इति ज्ञेयम्।

(356)

" जहिजोडम् " (अव्य.)

त्यागजोडार्थक्रियायामिदमव्ययम्। 'जहि, जोडम्' इति यत्र क्रिया-यामुच्यते, तत्रैवं भवति। एवं '**जहिस्तम्भम्**' इत्यपि ज्ञेयम्। **वाचस्प-त्यादिषु** अव्ययत्वेन परिगणितावेतौ। **काशिकादिषु** प्राचीनग्रन्थेषु 'जहि-जोडः' 'उज्जहिजोडः' 'जहिस्तम्बः' 'उज्जहिस्तम्बः' इत्यादीनां मयूरव्यंसकादिगणपठितात् 'जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति

(ग. सू. 2-1-72) इति वचनात् समाससाधुत्वं प्रसाध्य पुँलिङ्गान्तत्वेनैवो-दाहरणात् चिन्त्यमिदमित्यास्तां तावत्।

(357)

" जातु " (स.)

खेदामर्षसम्भावनानिश्चयकदाचिदर्थेषु दृश्यते। खेदे—'न जात्वहं भुञ्जे'। अमर्षे—न जात्वस्य सुकृतमस्ति। सम्भावनायाम्—'शूद्रं को जातु याजयेत्'। निश्चये—'को जातु युध्यतेऽर्जुनेन ?'। कदाचिदर्थे—'न जातु कामः कामानामुपभोगेन शाम्यति' (मनु—2-94)।

कारणोपदेशेऽपि दृश्यते। यथा—'स्वस्थो न जातु बहुभुक्'। गर्हायामप्यनुशासनात् सिद्धम्। यथा—'जातु[1] निन्दसि गोविन्दमपि निन्दसि शङ्करम्।' (मुग्धबोधे)।

(358)

" जामि " (स्व.)

आवृत्तिरस्यार्थः। 'जामयो जामि जल्पन्ति'। बहुवारमित्यर्थः। आलस्यरूपार्थेऽपि यजुषि प्रसिद्धमिदमव्ययम्। स्त्रीलिङ्गान्तः स्नुषाद्यर्थको जामिशब्दोऽन्य इत्यवधेयम्।

---

1. 'गर्हायां लडपिजात्वोः' (3-3-142) इति गर्हायां गम्यमानायां 'जातु' इत्युपपदे कालसामान्ये लट्।

(359)

"जोषक्" (स्व.)

शैघ्र्यार्थकोऽयम्। 'जोषग् यात'। 'ज्योषक्' इति केचित्।

(360)

"जोषम्" (स्व.)

सुखमौनयोरिदं वर्तते। सुखे—[1]'जोषमास्ते जितेन्द्रियः'। मौने—'इति जोषमुपास्महे'। 'ज्यौषम्' इति शाकटायनः। 'जोषं सुखे प्रशंसायां मौने स्याल्लघनेऽपि च' इति वाचस्पत्यार्णवः।

(361)

"ज्योक्" (स्व.)

कालभूयस्त्व शीघ्रार्थ उज्ज्वलार्थेषु वर्तते। कालभूयस्त्वे—'ज्योक् च सूर्यं दृशे' (ऋक्. 6-28-3)। शीघ्रार्थे—'[2]ज्योक्कृत्य नृपतिं गतः'। औज्ज्वल्ये—'सर्वमायुरेति, ज्योक् जीवति....' (छान्दोग्ये)। प्रश्नार्थकत्व-मप्यस्य शब्दार्थचिन्तामण्यादिषु प्रोक्तम्। एवं सम्प्रत्यर्थकत्वं गणरत्न-महोदध्युक्तम्।

---

1. 'जुषी प्रीतिसेवनयोः' इति धातोः प्रीत्यर्थे णमुलि मान्तकृत्वात्, 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञायामपि केचिदस्य निपातत्व-मभिप्रयन्ति। उभयथाऽप्ययं रूपे वा न विशेषः।

2. अत्र 'अनुकरणं चानितिपरम्' (1-4-62) इति गतिसंज्ञायां समासे ल्यप्, इति बोध्यम्।

(362)

"झगिति" (स्व.)

शीघ्रार्थकमिदं 'झटिति' इत्यस्य पर्यायत्वेन शब्दार्थचिन्तामणा-वुपात्तम्। 'झगति' इति क्वचिद् दृश्यते; स तु प्रमादपाठ इत्यवगन्तव्यः।

(363)

"झटिति" (स्व.)

शीघ्रार्थकोऽयम्। 'आनीय झटिति घटयति विधिरभिमतमभिमुखी-भूतः॥' (रत्नावली 1-7)। 'झड्ति' 'झत्ति' 'झलित' इत्यस्य प्राकृतभाषासु विकाराः।

(364)

"ठम्" (स्व.)

अनुकरणशब्दोऽयमव्ययसंज्ञकः। एवं 'ठठं' इत्यादीनामपि ग्रहणम्। स्पष्टमिदं शब्दकल्पद्रुमे। तत्रैव महानाटकश्लोकोऽपि उदाहृतः '—सोपा-नमारुह्य चकार शब्दं ठठं ठठं ठं ठठठं ठठं ठम्॥' इति। उपलक्षणमेतत् 'पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे तततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम्।' इति शृङ्गारप्रकाशे (प्रथमप्रकाशे) उदाहृतश्लोकेऽपि 'पि' 'स' 'मु' 'त' 'दु' 'भ' इत्यादयो वर्णाः मदवशात् स्खलितजल्पिताः; तेषां चाव्ययत्वमेवेति बोध्यम्। अन्यथा निरर्थकानां तेषां श्लोकघटितत्वेन समासानुपपत्तेः। एषैव गतिः 'मुचकुन्डोऽहं भूपतिस्त्वं च राजन् मक्भाव-

स्यामन्तकः सम्प्रविष्टः॥' (भोजचरिते), 'किं कृष्ट्वा हृहलेन हन्मि भुभुजानाक्षिप्य मृद्नामि वा किं वा तं चुचुचूर्णयामि मुसलाघातेन चूर्णावनम्। किंवोर्वैर्धधरातले ससकलं सम्पातये दुद्रुतं किं वा तेन सिसीधु पूरय पपापाने पिबामि क्षणम्॥' (सुभद्राहरणे १७ श्लोकः) इत्यादिष्वपीत्यलमतिविस्तरेण।

(365)

## "डाच्" (त.)

क्रियायोगे डाजन्तानां गतिसंज्ञा 'ऊर्यादिच्विडाचश्च' (1-4-61) इति विहिता। गतिसंज्ञकानां निपातत्वात् 'स्वरादिनिपातमव्ययम्' (1-1-37) इत्यव्ययसंज्ञा। [1]पटपटाकरोति—दमदमाकरोति। अत्र कृभ्वस्तियोग एव क्रियायोगशब्देन विवक्षितः। [2]द्वितीयाकरोति, तृतीया-

---

1. अत्र 'पटत्' इत्यस्य 'अव्यक्तानुकरणाद् द्व्यजवरार्धा(र्धा)द् अनितौ डाच्' (5-4-57) इति डाच्। 'डाचि च' (वा. 8-1-12) इति द्विर्वचनम्। 'नित्यमाम्रेडिते डाचि' (वा. 6-1-99) इति पररूपम्। अन्तरङ्ग तु प्रत्ययस्य डित्त्वात् टिलोपः। एवमुत्तरत्रापि प्रक्रियोह्या। द्व्यचो न्यूनत्वे डाच् न भवति। इतिशब्दे परेऽपि नेति बोध्यम्।

2. अत्र, 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (5-4-58) इति डाच्। द्वितीयाकरोति = एकवारं कृष्टं क्षेत्रं पुनः कर्षतीत्यर्थः। शम्बाकरोति = पुनस्तिर्यक् कृषतीत्यर्थः। बीजाकरोति = बीजेन सह कृषति इत्यर्थः। 'कर्मव्यतीहारे सर्वनाम्नो समासवच्च बहुलम्'— (वा. 8-1-12) इत्यतो बहुलग्रहणं 'डाचि च, (वा. 8-1-12)

करोति, शम्बाकरोति, बीजाकरोति। [1]द्विगुणाकरोति, त्रिगुणाकरोति। [2]समयाकरोति। [3]सपत्त्राकरोति, 'निष्पत्त्राकृतसायकम्'॥ (यादवाभ्युदये 16-90)। [4]निष्कुलाकरोति पशून्। 'श्रीरङ्गे स [5]सुखाकरोतु सुचिरं दास्यं च धत्तां मयि'॥ (श्रीरङ्गराजस्तवे 1-76)। प्रियाकरोति

---

इत्यत्रापकृष्य काशिकादिषु 'डाचि बहुलं द्वे भवतः' इति व्याख्यातत्वात् अत्र सर्वत्र द्विर्वचनं नेति स्पष्टं प्रकृतस्थले भाष्यप्रदीपोद्योतादिषु।

1. 'संख्यायाश्च गुणान्तायाः' (5-4-59) इति डाच्। अत्रापि कर्षत्यर्थ एव डाच्। द्विगुणाकरोति = द्विगुणं कर्षतीत्यर्थः।

2. 'समयाच्च यापनायाम्' (5-4-60) इति डाच्। समयाकरोति = अद्यानश्वःपरः इत्युक्त्वा समयं गमयतीत्यर्थः।

3. 'सपत्त्रनिष्पत्त्रादतिव्यथने' (5-4-61) इति डाच्। सपत्त्राकरोति = अन्तःप्रविष्टशरं करोतीत्यर्थः। निष्पत्त्राकरोति = एकपार्श्वतो बाणं प्रवेश्य अपरपार्श्वतो तमेवं बाणं बहिर्निष्क्रान्तं कारयतीत्यर्थः। 'नासाबाणविभिन्नाङ्गः, क्षरन्तो रक्तनिर्झरान्। शरांसुर्लोचनं तस्य निष्पत्त्राकृतसायकम्॥' इत्यत्र नासाद्वारेण गजशरीरे प्रविष्टः शरः कायविस्तीर्णं भित्त्वा पुनर्बहिरगात इति शरप्रयोक्तुः कालायनं शरांसुरित्यर्थः।

4. अन्तरवयवानां बहिष्कृतिर्निष्कोषणम् तस्मिन्नर्थे; 'निष्कुलान्निष्कोषणे' (5-4-62) इति डाच्।

5. 'सुखप्रियादानुलोम्ये' (5-4-63) इति डाच्। आनुलोम्यम् आराध्यचित्तानुवर्तनम्। अत्र सर्वत्र कृञो योग एव डाच्—इति सम्प्रदायः। 'सुखाभवति' इति प्रयोगदर्शनात् कृभ्वस्तियोगो विवक्षित इति केचित्।

[1]दुःखाकरोति। [2]शूलाकरोति मांसम्। [3]सत्याकरोति वणिक् भाण्डम्। [4]मद्राकरोति, [5]भद्राकरोति नापितः कुमारम्। [6]पटपटायति-पटपटायते।

(366)

"णमुल्" (कृ.)

एतदन्तमव्ययसंज्ञकं ज्ञेयम्। [7]'ध्यायं ध्यायं' परं ब्रह्म स्मारं स्मारं गुरोर्गिरः'। (प्रौढमनोरमा)।

(367)

"तकत्" (स्व.)

अत्यर्थार्थकमिदं छान्दसम्। 'तत्सुते मनायति तकत्सुते मनायति—'(ऋक्. 1-133-4)।

---

1. 'दुःखात् प्रातिलोम्ये' (5-4-64) इति डाच्।
2. 'शूलात् पाके' (5-4-65) इति डाच्। शूलेन मांसं पचतीत्यर्थः।
3. 'सत्यादशपथे' (5-4-66) इति डाच्। सत्याकरोति = मयैतत् क्रेतव्यमिति तथ्यं करोति इत्यर्थः। क्रेतव्यतायाः सत्यत्वार्थं मूल्ये किंचिदंशं दत्त्वा भाण्डमावर्जयतीत्यर्थः। सुभद्राहरणादिषु सत्यं वदतीत्यर्थेऽपि सत्याकरोतीति प्रयुक्तमिति प्रक्रियासर्वस्वम्।
4. 'मद्रात् परिवापणे' (5-4-67) इति डाच्। परिवापणम् = मङ्गल्यकर्म। मद्राकरोति = मङ्गल्यमुण्डनं करोतीत्यर्थः। प्रार्थनायां यत्र मुण्डनं क्रियते तत्रैवायं प्रयोग इति वृद्धाः।
5. 'भद्राच्चेति वक्तव्यम्' (वा. 5-4-67) इति डाच्।
6. 'लोहितादिडाज्भ्यः क्यष्' (3-1-13) इति क्यष्। 'वा क्यषः' (1-3-90) इति परस्मैपदविकल्पः।
7. 'ध्यै चिन्तायाम्' इत्यस्य 'आभीक्ष्ण्ये णमुल् च' (3-4-22) इति णमुल्। मान्तकृत्त्वात् अव्ययसंज्ञा। असकृत् ध्यात्वेत्यर्थः।

(368)

"तक्" (चा.)

हर्षार्थकोऽयमिति केचित् । निरर्थकोऽयं पादपूरणार्थ इति परे।

(369)

"ततः" (त.)

तेन, तस्मिन् इत्यर्थे तच्छब्दात् आद्यादित्वात् सार्वविभक्तिकस्तसिप्रत्ययः। 'तस्मात्' इत्यप्यर्थे भवति। [1]"ततः पश्चात् स्रंसते ध्वंसते च' (भाष्यम् 1-1-57) इति प्रयोगोऽत्र प्रमाणम्।

अत्रेदमवधेयम्—स्वरादिषु पठितमन्यत् 'ततः' इत्यव्ययमस्ति, यस्य आद्य—अनन्तर-कथान्तरप्रश्नयोऽर्थाः। यथा—आद्ये—'ततः प्रववृते सर्गः'। अनन्तरे—'अन्नं भुङ्क्ते, ततः शेते'। कथान्तरे—'ततस्ततः'।

(370)

"तद्" (वि. प्र.)

सर्वनामसंज्ञकतच्छब्दसमानार्थकोऽयम्। सुबन्तप्रतिरूपकमव्ययम्। 'तथादृशाः' इत्यादिषु अनेनैवाव्ययेन 'तादृश' इत्यस्य समासः।

---

1. अत्र 'त्यदादीनामः' (7-2-102) इत्यकारः। परत्वात्।

तेन 'त्यदादीनि सर्वैर्नित्यम्' (1-2-72) इत्येकशेषाभावोऽपि सङ्गत इति केचित् । अत एव 'अविघातचितोर्योगः' 'तत्तदर्थविभागः—' इत्यादिसिद्धिः । विस्तरस्तु बृहच्छब्देन्दुशेखरे ।

तत्त्वमित्यप्यव्ययं व्यक्तमित्यर्थे पठन्ति । 'तत्त्वं मूर्खोऽयम' इति च उदाहरन्ति । वस्तुतस्तु तच्छब्दात् 'तस्य भावस्त्वतलौ' (6-1-11) इति त्वप्रत्ययेनैव सिद्धमिति नाव्ययत्वकल्पनेऽतीव प्रयोजनं पश्यामः ।

'तद्' इति दकारान्तमपि हेत्वर्थकं पठन्ति । 'यदयमधीते तज्जानाति' इत्युदाहरन्ति च । उभयथाऽपि रूपे न भेदः । यत्तद् इत्येतौ शब्दशक्तिस्वाभाव्यात् मिलितावेव हेत्वर्थबोधकौ ।

(371)

"तत्प्रभृति" (तिष्ठद्गु.)

तदा प्रभृति इत्यर्थे तिष्ठद्गुगणपठितत्वात् अव्ययीभावसमासेऽव्ययत्वम् । क्रियाविशेषणमेतत् इति केचित् ।

(372)

"तत्र" (त.)

तच्छब्दात् 'सप्तम्यास्त्रल्' (5-3-10) इति सप्तम्यर्थे त्रल् । 'तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥' (मनुः 2-112) । तत्रत्यः ।

## (373)

## "तथा" (त.)

'तेन प्रकारेण' इत्यर्थे तच्छब्दात् 'प्रकारवचने थाल्' (5-3-23) इति थाल्प्रत्यये त्यदाद्यत्वे पररूपे च **तथा** इति सम्पद्यते। अस्यैव चादिषु समुच्चयाङ्गीकारनिदर्शनसादृश्येषु पाठः। यथा—समुच्चये—'हारितोऽयमहं **तथा**'। अङ्गीकारे—'स **तथे**ति प्रतिज्ञाय—' (कुमारसंभवे 6-3)। निदर्शने—'**तथा** हि ते शीलमुदारदर्शने' (कुमार. 5-36)। सादृश्ये—'इदमपि **तथा**'।

निश्चयसत्यादिष्वपि दृश्यते। निश्चये—'**तथा** हि सर्वे तस्यासन् परार्थैकफला गुणाः॥' (रघु. 1-29)। सत्ये—'तत् **तथा** न तदन्यथा', [1]**तथ्यम्**। '[2]तथाकारमहं भोक्ष्ये, किं तेन!' [3]**यथातथम्**। आयथातथ्यम्। अयाथातथ्यम्।

**तथा च** इति उक्तार्थदृढीकरणे, **तथापि** इति आक्षिप्तस्य समाधाने, **तथैव** इति अङ्गीकाराद्यर्थेषु, **तथाहि** इति निदर्शनाद्यर्थेषु च निपातान्तरसमुदितोऽप्ययं प्रकरणादिवशादर्थान्तरे वर्तते इति ज्ञेयम्। यथाशब्दप्रतिनिर्दे-

---

1. 'तत्र साधुः' (4-4-98) इति यत्प्रत्ययः।
2. 'यथातथयोरसूयाप्रतिवचने' (3-4-28) इति असूयया प्रतिवचने कृञो णमुल्।
3. अत्र 'यथाऽसादृश्ये' (2-1-7) इत्यव्ययीभावसमासे, समासान्तो ह्रस्वः। 'आयथातथ्यम्' इत्यत्र ब्राह्मणादित्वात् (5-1-24) ष्यञि

शोऽपि तथा इति बहुलं शास्त्रेषु काव्येषु च प्रयुज्यते । 'यथातथावापि' इति निपातसमुदायः 'येन केनापि' इत्यर्थे वर्तते । 'त्वदङ्घ्रिमुद्दिश्य कदापि केनचित् यथातथावापि सकृत्कृतोऽञ्जलिः ।' (स्तोत्ररत्ने) इति प्रयुक्तं च । एवं निपातान्तरसम्बन्धेषु यथासम्भवमर्थोऽयं उन्नेय इत्यलं पल्लविनेन ।

(374)

"तदा" (त.)

'तस्मिन् काले' इत्यर्थे तच्छब्दात् 'सर्वैकान्यकिंयत्तदः काले दा' (5-3-15) इति दाप्रत्यये तस्य विभक्तिसंज्ञकत्वात् 'त्यदादीनामः' (7-2-102) इत्यकारे रूपमेवम् । 'न च स्वं कुरुते कर्म तदोत्क्रामति मूर्तितः ।' (मनुः 1-55) ।

अत्रेदमवधेयम्—'सर्वैकान्यकिंयत्तदः काले दा' (5-3-15) इति तच्छब्दात् सप्तम्यर्थे दाप्रत्ययो विहितः । 'सर्वदा, एकदा' इत्यादिवत् 'तदा' इत्यपि अनेनैव सिद्ध्यति । अतश्च पुनः 'तदो दा च' (5-3-19) इति विधानमनर्थकमिति 'तदो दावचनमनर्थकं विहितत्वात्' (वा. 5-3-19) इति वार्तिकव्याख्यानावसरे भाष्ये प्रतिपादितम् । कैयटे तु अत्र सूत्रे—'अदा' इति पदविभागेन स्वरे विशेषं केचिदाहुरिति समर्थितम् । तथापि भाष्यादिविरोधात् 'अदा' इति प्रत्ययविधानपक्षः उद्द्योतादिषु अनादृत इति ज्ञेयम् ।

---

'यथातथयथापुरयोः पर्यायेण' (7-3-31) इति आदिवृद्धिविकल्पः ।

(375)

" तदानीम् " (त.)

'तस्मिन् काले' इत्यर्थे तच्छब्दात् 'तदो दा च' (5-3-19) इत्यत्र चकारात् 'दानीम्' प्रत्ययः। त्यदाद्यत्वम्, पररूपम्। 'नासदासीन्नो सद् आसीत् तदानीम्' (ऋक्. 10-129-1)।

(376)

" तपः " (स्व.)

लोकान्तरवाचकमिदमव्ययमिति निपाताव्ययोपसर्गवृत्तिः। 'ओं तपः'। वस्तुतः सुबन्तत्वेनैव रूपमस्य सिद्धमिति अव्ययत्वे नातीव प्रयोजनं पश्यामः।

(377)

" तरसा " (स्व.)

शैघ्र्यार्थकमिदम्। 'तरसोदिता सजलेषु'। तिलकादिभिरिदमव्ययत्वेन परिगणितम्। 'उपनेतुमुन्नतिमतेव दिवं कुचयोर्युगेन तरसा कलिताम्।' (शिशुपालवधे 9-72) इति श्लोकव्याख्यादिषु नपुंसकलिङ्गत्वेनेदं शब्दस्वरूपं व्याख्यातम्। विस्तरस्त्वन्यत्र।

(378)

" तर्हि " (त.)

'तस्मिन् काले' इत्यर्थे अनद्यतने काले 'अनद्यतने र्हिल् अन्यतर-

स्याम' (5-3-21) इति र्हिल् प्रत्ययः। अस्य प्राग्दिशीयत्वेन विभक्तिसंज्ञकत्वात् त्यदाद्यत्वम् ,पररूपं च। **तर्हि**।

विशेषोऽप्यस्यार्थः। 'बलवानर्जुनः, कृष्णस्तर्हि बलवत्तरः'।

(379)

" **तवेङ्** " (कृ.)

एतदन्तमव्ययं स्यात्। 'दशमे मासि **सूतवे**—' (ऋक्. 10-184-3)। 'तुमर्थे—' (3-4-9) इत्यादिना सूतेस्तवेङ्प्रत्ययः। एजन्तकृत्त्वादव्ययत्वम्। तुमुनर्थकोऽयम्। छान्दसः।

(380)

" **तवेन्** " (कृ.)

एतदन्तमपि अव्ययसंज्ञकं ज्ञेयम्। 'स्वर्देवेषु **गन्तवे**' (ऋक्. 1-46-7)। तवेङ्तवेनोः स्वरे भेदः। छन्दस्येव तुमुनर्थकोऽयं प्रयुज्यते।

(381)

" **तवै** " (कृ.)

अयमपि एदन्तः कृत्प्रत्ययः। 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम्। 'सोममिन्द्राय **पातवै**' (ऋक्. 3-46-5)। **पातवै**=पातुमित्यर्थः। छान्दसोऽयम्। 'अन्वेतवै, परिधातवै, परिस्तरितवै' इत्यादिषु तु भावकर्मार्थकस्तवैप्रत्ययः 'कृत्यार्थे तवैकेन्केन्यत्वनः' (3-4-14) इति विहित इति ज्ञेयम्। **अन्वेतवै**=अन्वेतव्यम् इत्यर्थः। उभयथाऽपि छन्दस्येव।

## (382)

## "तसिः" (त.)

एतत्प्रत्ययान्तमव्ययसंज्ञकं वेदितव्यम्। प्रद्युम्नो [1]वासुदेवतः प्रति। [2]"स्वरतो वर्णतो वा"। [3]ग्रामत आगच्छति। [4]वृत्ततोऽतिगृह्यते, चारित्र्यतो न व्यथते, वृत्ततः क्षिप्तः। [5]वृत्ततो हीयते, पापो वा। देवा [6]अर्जुनतोऽभवन्। [7]कासतः कुरु। [8]कुतस्त्यः।

---

1. अत्र 'प्रतियोगे पञ्चम्याः—' (5-4-44) इति तसिः। अत्र सूत्रे 'वा' ग्रहणानुवृत्तेः 'प्रद्युम्नो वासुदेवात्' इत्यपि साधुः।
2. 'तसिप्रकरणे आद्यादिभ्य उपसंख्यानम्' (वा. 5-4-44) इति अत्र तसिः। अत्र 'स्वरेण, वर्णेन' इति तृतीयार्थे तसिः।
3. 'अपादाने चाहीयरुहोः' (5-4-45) इत्यत्र तसिः। 'अहीयरुहोः' इत्युक्तत्वात् 'सार्थात् हीयते, पर्वतादवरोहति' इत्यत्र न तसिः।
4. 'अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः' (5-4-46) इति तृतीयान्तात् तसिः। अतिक्रम्य ग्रहणम्—अतिग्रहः। चलनम्—अव्यथनम्। निन्दा क्षेपः। एतेषु क्रमेणोदाहरणमिति ज्ञेयम्। सुष्ठु वृत्तवान् अन्यान् अतिक्रम्य वृत्तेन गृह्यते—इत्यर्थः। एवमुत्तरत्रापि यथासम्भवमूह्यम्।
5. 'हीयमानपापयोगाच्च' (5-4-47) इति तसिः। अत्र हत्याख्यानमेव, न तु क्षेपः। क्षेपे तु पूर्वसूत्रेणैव सिद्धस्तसिः।
6. 'षष्ठ्या व्याश्रये' (5-4-48) इति तसिः। व्याश्रयः=नानापक्षसमाश्रयः।
7. 'रोगाच्चापनयने' (5-4-49) इति तसिः। 'कासतः कुरु'—कासप्रतीकारं कुरु इत्यर्थः।
8. 'अमेहक्वतसित्रेभ्यः—' (वा. 4-2-104) इति त्यप्।

(383)

"ताजक्" (स्व.)

शैघ्यमस्यार्थः। 'ताजक् जरामृत्युरुजा जयन्ति'।

(384)

"तादीत्ना" (त.)

तदानीमित्यर्थे तच्छब्दात् दानीप्रत्यये, पृषोदरादित्वात् (6-3-109) वर्णव्यत्यासः। 'आत् सूर्यं जनयन् द्याम् उषासं तादीत्ना शत्रुम्—' (ऋक्. 1-32-4)। छन्दस्येवायम्।

(385)

"ताली" (ऊ.)

विदूराकुलीभावार्थे ऊर्यादिषु (1-4-61) पठितत्वात् क्रियायोगे गतिसंज्ञा। तालीकृत्य। 'वर्णे' इत्यर्थेऽप्यमूर्यादिरिति शाकटायनः। 'विस्तारे' इति भोजः। अपरे तु "उत्तमार्थे, तालीकृत्य—उत्तमं कृत्वा इत्यर्थः।" इति वदन्ति।

(386)

"तावत्" (ऊ.)

तुल्ययोगिता साकल्य मान क्रमावध्यवधारणादयोऽस्यार्थाः।

"तावत् तत्परिमाणे त्रिः, अव्ययं त्ववधारणे।

सम्भ्रमे च परिच्छेदे तथा कात्स्न्याधिकारयोः॥" इति वाङ्मयार्णवः। यावत्तावच्छब्दौ शब्दशक्तिस्वाभाव्यात् परस्परसापेक्षावेव स्वस्वार्थमवगमयतः। क्वचित् केवलावपि।

तुल्ययोगितायाम्—यावत्कार्यं **तावत्** कुरु। साकल्ये—यावद्दत्तम् **तावद्** भुक्तम। माने—आस्तां **तावत्**। क्रमे—'त्वमेव **तावत्** परिचिन्तय स्वयम्।' (कुमार. 5-67)। अवधौ—तावदधोष्व यावद् बुध्यसे। अवधारणे—' निरासकस्यापि न **तावदु**त्सहे—' (स्तोत्ररत्ने २६)।

तत्काल-प्रशंसा-पक्षान्तर-सम्भ्रमादयोऽप्यस्यार्थाः कोशेषु निर्दिष्टाः। तत्काले—' भर्ताऽपि **तावत्** क्रथकैशिकानाम्—' (रघु.7-32)। **तावत्** = तदा इत्यर्थः। एवं प्रशंसादिष्वप्यर्थेषु यथासम्भवमुदाहरणान्यूह्यानि।

अल्पोऽपि क्वचिदस्यार्थः। यथा—**तावन्**मात्रम्। अस्यैव क्रियाविशेषणत्वे नपुंसकलिङ्गता। यथा—' गिरेस्तडित्वानिव [1]**तावदु**च्चैः।' (माघे 1-12)। तत्परिमाणविशिष्टार्थे त्रिलिङ्गता। '**तावान्** वेदेषु सर्वेषु ब्राह्मणस्य विजानतः।' (गीता 2-46)। ' यावती सम्भवेद् वृत्तिस्**तावती** दातुमर्हति।' (मनुः4-72)। '**ताव**दार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् ' (वि. पु. 1-9-73) इति। [2]तावतिथम्। [3]तावच्छः।

---

1. अत्र सर्वत्र ' यत्तदेतेभ्यः परिमाणे वतुप् ' (5-2-39) इति षष्ठ्यर्थे वतुप्प्रत्ययः। ' आ सर्वनाम्नः ' (6-3-91) इत्यात्वम्। अव्ययसंज्ञकस्यापि तावच्छब्दस्य व्युत्पत्तिपक्षे एवमेव व्युत्पाद्य, स्वरादिषु पाठादव्ययत्वमिति ज्ञेयम्।

2. ' वतोरिथुक् ' (5-2-53) इतीथुक्प्रत्ययः। तावतां पूरणं तावतिथम्।

3. ' संख्यैकवचनाच्च वीप्सायाम् ' (5-4-43) इति शस् वीप्सायाम्। तावत्तावत्प्रकारेण इत्यर्थः। ' यावच्छो वै रसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते ' (तैत्तिरीयसंहिता)।

(387)

"ति" (स.)

इतिशब्दस्यार्थे वेदेषु अव्ययमिदम्। पृषोदरादित्वात् इकार-लोपः। 'स होवाच—अस्तीह प्रायश्चित्तिरिति, अस्तीति का ति, पिता ते वेदेति' (शतपथे. 11-6-1-3)।

(388)

"तिरस्" (नि. ग.)

अन्तर्धान - तिर्यगर्थावज्ञादयोऽस्यार्थाः। अन्तर्धाने—'विश्वयोनि-स्तिरोदधे' (कुमार. 2-62)। तिर्यगर्थे—तिरः काष्ठं कुरुष्व। अवज्ञा-याम—'तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम्।' (रघु. 3-8)। [1]तिरस्कर्ता तिरःकर्ता। [2]तिरोभूय, तिरःकृत्य-तिरस्कृत्य, तिरस्कृत्वा-तिरः कृत्वा। [3]तिर्यक्।

---

1. 'तिरसोऽन्यतरस्याम्' (8-3-42) इति कुप्वोः परयोः विसर्जनीयस्य सकारविकल्पः। तेन रूपद्वयम्।

2. 'तिरोऽन्तर्धौ' (1-4-71) इति गतिसंज्ञायाम्, समासे भुवो ल्यप्। अन्तर्धानभिन्नार्थकत्वे तु 'तिरो भूत्वा स्थितः' इत्यादिषु न गतिसंज्ञेति नात्र ल्यप्। 'तिरस्कृत्य' इत्यादिषु तु 'विभाषा कृञि' (1-4-72) इति अन्तर्धानार्थ एव विभाषा गतिसंज्ञा। गतिसंज्ञापक्षे ल्यपि, विसर्जनीयस्य सत्वविकल्पपक्षे चेति चत्वारि रूपाणीति ज्ञेयम्।

3. 'तिरस्' इत्युपपदात् अञ्चतेः कर्तरि क्विपि 'तिरसस्तिर्यलोपे' (6-3-94) इति 'तिरि' इत्यादेशे च रूपमेवम्।

(389)

"तिष्ठद्गु" (ति.)

तिष्ठन्ति गावो यस्मिन् काले स कालः **तिष्ठद्गु**। [1]प्रथमरात्रेरर्ध-घटी। प्रावृट्काल इति **केचित्**। स्थातेः शत्रादेशो निपातनात् साधुः। '**तिष्ठद्गु**प्रभृतीनि च' (2-1-17) इति गणे निपातनादव्ययीभावसमासः, गोशब्दस्य उपसर्जनह्रस्वत्वं च। 'आ **तिष्ठद्गु** जपन् सन्ध्यां प्रक्रान्तामायती-गवम्।' (भट्टिः 4-14)।

तिष्ठन्ति गावो यत्र देशे स देशः इत्यर्थविवक्षणे तु **तिष्ठद्गुः** इति बहुव्रीहिसमास एव। नाव्ययत्वम्। '**तिष्ठद्गु** कालविशेषे' (वा. 2-1-17) इति **भाष्यात्**। तिष्ठद्गवः ग्रामाः।

**शब्दकल्पद्रुमादिषु** पुलिङ्गत्वेनास्य शब्दस्य व्युत्पादनं **भाष्य**-विरुद्धम्।

(390)

"तु" (चा.)

विशेषावधारण-पूजा-व्यावृत्ति-पादपूरणाद्यर्थहेतुषु चादिरयम्। '**तुः** पादपूरणे भेदे समुच्चयेऽवधारणे। पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे॥' इति **मेदिनी**। विशेषे—'मृष्टं पयो मृष्टतरं **तु** दुग्धम्'। [2]अवधारणे—'आत्मादयस्**तु** प्रमेयम्' (न्यायसूत्रम् 1-9)। पूजायाम्—'य**स्तु** माणवको

1. 'गावो हि रात्रिप्रथमनाडिकायामतीतायां विश्रान्ताः सत्य उत्थाप्य दुह्यन्ते।' इति जयमङ्गला (4-14)।

2. नियोगोऽप्यावधारणम् इति ज्ञेयम्।

भुङ्क्ते—'। व्यावृत्तौ—'अहं गच्छामि,—त्वं तु किं करिष्यसि?'। [1]पादपूरणे—'आख्यास्यामि तु ते तत्त्वम्—'। [2]अप्यर्थे—'कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम्। तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम्॥' (आनुषङ्गिकमपि कीर्त्यत इत्यर्थः)। हेतौ—'गृहीतं व्याकरणम्, भृशं तु दुर्ज्ञेयम्'। पक्षान्तरादयोऽप्यस्यार्थाः; यथा—'आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत्'। अत्र पक्षान्तरमर्थः।

(391)

## "तुमुन्" (कृ.)

एतदन्तमव्ययसंज्ञकं ज्ञेयम्। कर्तुम्। [3]कालो भोक्तुम्। इच्छति [4]भोक्तुम्। [5]शक्नोति भोक्तुम्, धृष्णोति इत्यादि। [6]अलं भोक्तुम्। [7]यष्टुं गच्छति। [8]कर्तुकामः—[9]भोक्तुमनाः।

---

1. 'निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम्।' (चन्द्रालोकः 2-6) इत्यादिकमिह भाव्यम्।
2. अपेर्बह्वर्थकत्वेऽपि मेदिन्यादिकोशबलादत्र समुच्चयार्थकत्वमेवेति ज्ञेयम्।
3. 'कालसमयवेलासु तुमुन्' (3-3-167) इति तुमुन्। एवं 'वेला भोक्तुम्', 'समयो भोक्तुम्' इत्यप्युदाहार्यम्। मान्तकृत्त्वात् तुमुनः 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञा।
4. इच्छार्थेषु धातुषु 'समानकर्तृकेषु—' (3-3-158) इति तुमुन्।
5. 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु—' (3-4-65) इति तुमुन्। एवं 'जानाति भोक्तुम्' इत्यादीन्यपि यथासम्भवमुदाहार्याणि।
6. 'पर्याप्तिवचनेष्वलमर्थेषु' (3-4-66) इति तुमुन्।
7. क्रियार्थक्रियायामुपपदे धातोर्भविष्यत्काले, 'तुमुन्ण्वुलौ—' (3-3-10) इति तुमुन्।
8. 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति... 'सं तुमुनोः कामे' (वा. 6-1-144) इति तुमुनोऽन्त्यलोपः।
9. 'मनसि च इति वक्तव्यम्' (भाष्यम् 6-1-144) इति तुमुनो मकारस्य लोपः।

(392)

"तुम्" (चा.)

धिक्कारोऽस्यार्थः । प्रौढमनोरमायां चादिषु पठ्यते । 'गुरुं हुंकृत्य तुङ्कृत्य विप्रं निर्जित्य वादतः' ।

(393)

"तुरम्" (चा.)

शीघ्रयार्थकोऽयम् । 'तुरं यतीषु तुरयन् नृजिप्यः' (ऋ. 4-38-7) । [1]तुरंगमः ।

(394)

"तूर्णम्" (स्व.)

एतदपि शीघ्रयार्थकम् । क्रियाविशेषणमेतत् इति केचित् ।

(395)

"तूष्णीम्" (स्व.)

मौनमस्यार्थः । 'राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः' (शार्ङ्गधरपद्धतौ श्लो. 119) । [2]तूष्णीकः,

---

1. तुरं = शीघ्रं गच्छतीति तुरंगमः = अश्वः । 'गमश्च' (3-2-47) इति खच्प्रत्ययः । केचित्तु तुरेण = वेगेन गच्छतीति व्युत्पाद्य, खजन्तत्वेन खित्वात् मुममिच्छन्ति । उभयथाऽपि न विरोधः ।

2. 'शीले को मलोपश्च' (वा. 5-3-71) इति कप्रत्ययः, मकारलोपश्च । 'तूष्णींशीलस्तु तूष्णीकः' इत्यमरः ।

[1]तूष्णीकाम्, [2]तूष्णींभूय। तूष्णींभावम्। [3]तूष्णीगङ्गे।

(396)

"तृतीया" (डा॰)

तृतीयशब्दात् कृञः कृषावभिधेये 'कृञो द्वितीयतृतीय—' (5-4-58) इति डाच्प्रत्ययः। डाचो गतित्वेन निपातत्वादव्ययत्वम्। **तृतीया**करोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः।

(397)

"तृपत्" (स॰)

तृप्तिपर्यन्तमित्यर्थे छान्दसमव्ययमेतत्। 'सजोषा रुद्रैस्तृपद् आ वृषस्व ॥' (ऋक्॰ 3-32-2)।

---

1. 'अकच्प्रकरणे—तूष्णीमः काम्प्रत्ययो वक्तव्यः' (वा. 5-3-71) इति काम्प्रत्ययः। तस्य च मित्त्वादचः परं प्रवृत्तिः। तूष्णीमित्येवार्थः।
2. 'तूष्णीमि भुवः' (3-4-63) इति तूष्णींशब्द उपपदे भुवः क्त्वाणमुलौ भवतः। क्त्वाप्रत्ययपक्षे उपपदसमासे ल्यप्।
3. तूष्णीं गङ्गा यत्र प्रवहति स देश एवमुच्यते। 'अन्यपदार्थे च संज्ञायाम्' (2-1-21) इति नदीवाचकेन गङ्गाशब्देन सह सुबन्तस्य अव्ययीभावसमासः। बाहुलकात् सप्तम्या न अम्। 'तूष्णीगङ्गे च कौन्तेय सामात्यः समुपप्लुत।' (भारते वनपर्वणि 135 अध्याये)।

(398)

"ते" (चा.)

'त्वया' इत्यर्थे निपातोऽयम्। विभक्तिप्रतिरूपकमिदमव्ययम्। 'ते इति स्यात् त्वयेत्यर्थे—' इति **त्रिकाण्डशेषः**। 'ते मे शब्दौ निपातेषु' इति **वामनः** (काव्यालङ्कारसूत्रे 5-2-10)। 'गुरुर्भवन् अपि विशेषदृष्टिस्ते' (अनर्घराघवे 1-16)। "'ते' इति निपातः 'त्वयि' इत्यर्थेऽपि" इति **लक्ष्मणसूरिः** (अनर्घराघवटीकायाम् 1-16)। तथा च प्रयुज्यते—'श्रुतं ते राजशार्दूल !—' इति। अत्र त्वयीत्यर्थः।

'ते' इति हेत्वर्थकमपि प्राचीनग्रन्थेषु पठ्यन्ते। यथा **महाभाष्ये**—(1-1-1) 'ते मन्यामहे—यया प्रत्याय्यन्ते सा संज्ञा....।' इति। भाष्य एवैवमसकृत् स्थलान्तरेष्वपि प्रयुज्यत इत्यवधेयम्।

(399)

"तेन" (चा.)

हेतुरस्यार्थः। तृतीयाविभक्तिप्रतिरूपकमिदमव्ययम्। 'सप्रश्रयं मदलेखां तेन वलितप्रमुखो भूत्वा....' (कादम्बरी)।

(400)

"तोसुन" (कृ)

एतदन्तमव्ययसंज्ञकं ज्ञेयम्। तुमुनर्थकश्छन्दस्येवायं प्रत्ययः। 'ईश्वरोऽभिचरितोः'। 'क्त्वातोसुन्कसुनः' (1-1-40) इत्यव्ययसंज्ञा।

(401)

"त्रल्" (त.)

सप्तम्यन्तेभ्यः किंसर्वनामबहुभ्यो विहितोऽयं प्रत्ययोऽव्ययसंज्ञक इति ज्ञेयम्। कुत्र[1], यत्र तत्र, बहुत्र। [2]तत्र भवन्तम्। [3]अत्रत्यः।

(402)

"त्रा" (त.)

कृभ्वस्तियोगे सम्पद्यतिना योगे च तदधीनत्वार्थे प्रातिपदिकसामान्याद् विहितोऽयं प्रत्ययोऽव्ययसंज्ञक इति ज्ञेयम्। विप्रत्रा सम्पद्यते, करोति वा। [4]देवत्रा नमति। देवान् नमतीत्यर्थः। मनुष्यत्रा गच्छति। पुरुषत्रा, पुरुत्रा, मर्त्यत्रा। [5]बहुत्रा जीवतो मनः।

---

1. अत्र 'कु तिहोः' (7-2-104) इति किमः 'कु' इत्यादेशः। 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इति अव्ययत्वम्।
2. 'इतराभ्योऽपि दृश्यन्ते' (5-3-14) इति त्रल्। अत्र सूत्रे 'दृश्यन्ते' इत्युक्तत्वात् भवच्छब्दादिषु उपपदेष्वेव त्रल्। तेन 'तत्र आयुष्मन्तम्, तत्र दीर्घायुषम्, तत्र देवानांप्रियम्' इत्यादयोऽपि प्रयोगाः साधवः। एवं समस्तास्वपि विभक्तिषु प्रयोग उन्नेयः।
3. सप्तम्यन्तात्, 'अमेहक्वतसित्रेभ्य एव' (वा. 4-2-104) इति शैषिकस्त्यप्।
4. अत्र 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (5-4-56) इति त्राप्रत्ययः। 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययसंज्ञा। धातुसामान्येऽपि त्राप्रत्ययोऽनेन विधीयत इति विशेषः।
5. 'देवमनुष्य—' (5-4-56) इत्यत्र 'बहुलम्' इत्युक्तेः अत्रापि त्राप्रत्ययः। "तसिलाद्याः पाशपः प्राग् डाच्पर्यन्ताः शसादयः। वतिर्नानाञ्थामुञ्च कृत्वोऽर्थस्तद्धितेऽव्ययम्" इति प्रक्रियासर्वस्वम्।

(403)

## “ त्रिगुणा ” (डा.)

अत्र ‘संख्यायाश्च गुणान्तायाः’ (5-4-59) इति संख्यावाचकात् गुणान्ताच्च त्रिगुणशब्दात् कृञो योगे कृषौ च अभिधेये डाच्। डाचश्च निपातत्वेनाव्ययत्वम्। **त्रिगुणाकरोति** क्षेत्रम्। त्रिगुणं कर्षणं क्षेत्रस्य करोतीति फलितार्थः।

(404)

## “ त्रिधा ” (त.)

‘संख्याया विधार्थे धा’ (5-3-42) इति विधार्थे धाप्रत्ययः। तस्य चाव्ययत्वम्। [1]**त्रेधा-त्रैधम्**।

(405)

## “ त्वत् ” (वि. प्र.)

विभक्तिप्रतिरूपकमव्ययमिदं युष्मच्छब्दस्य। ‘मधुपुरभिमुखाब्ज-गन्धलब्धेरधिकमधित्वदनेन मा निपाति ॥’ (माघः 7-41)।

---

1. अत्र ‘द्वित्र्योश्च धमुञ्’ (5-3-45) इति धमुञ् प्रत्ययः। अस्यापि अव्ययत्वं ज्ञेयम्। पक्षे ‘एधाच्च’ (5-3-46) इति धाप्रत्ययस्य एधाजादेशः।

(406)

" त्वा " (चा.)

वितर्कार्थकोऽयं चादिषु पठ्यते ।

(407)

" त्वाव " (चा.)

विशेषोऽस्यार्थः । अनुमानप्रतिज्ञाप्रैषसमाप्तिष्वपि **केचित्** पठन्ति । 'सर्वे इमे विद्वांसः; अयं **त्वाव** मूर्खः' । **केचित्**, त्वा+व इति निपातद्वयसमुदायत्वमस्य मन्यन्ते । उभयथाऽपि नार्थभेदः । **त्वावत्** इति **केचित्** पठन्ति । 'अयं **त्वावत्** प्रशस्यते' । 'विशेषावधारणे' इत्यपि **केचित्** ।

(408)

" त्वै " (चा.)

विशेषवितर्कावस्यार्थौ । विशेषे—'वर्णानां विप्रा**स्त्वै** प्रकृष्यन्ते' । वितर्के—'क**स्त्वा** एषोऽभिगच्छति ?' ।

(409)

" थूथू " (स्वरा.)

निष्ठीवनत्यागानुकरणशब्दोऽयं 'अनुकरणं चानितिपरम' (1-4-62) इति गतिसंज्ञकः । गतिसंज्ञकानां निपातसंज्ञकत्वात् 'स्वरादिनिपातम्—' (1-1-37) इत्यव्ययत्वम । 'थूथूकृत्य वमद्भिरध्वगजनैरप्राप्तकण्ठं पयः'—इति **सदुक्तिकर्णामृते** श्लो. 2366 ।

(410)

"धेधे" (स्व.)

मृदङ्गादितालवाद्यानुकरणशब्दः। 'तेषां को वाऽपराधः कथयत सततं ये पठन्तीह **थोऽन्तत् ताथय्याथय्यथय्याधिगधिगधिगधिकथय्यथय्येति** शब्दान्॥' इति **विश्वगुणादर्शचंपूः**।

(411)

"**दक्षिणतः**" (त.)

'दक्षिणस्यां दिशि काले' वा इत्यर्थः। 'दक्षिणोत्तराभ्यामतसुच्' (5-3-28) इत्यतसुच् प्रत्ययः। अस्य च प्रत्ययस्य प्राग्दिशीयत्वात् विभक्तिसंज्ञायाम्, सप्तमीपञ्चमीप्रथमाविभक्तिभ्य एव विहितत्वाच्च 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इति अव्ययसंज्ञा। एतेन तसिलप्रत्ययान्तत्वेन निष्पादनं दीर्घान्तस्य दक्षिणाशब्दस्य 'सर्वनाम्नो वृत्तिमात्रे—' इति पुंवद्भावसमर्थनादिकं च **भाष्य**विरुद्धमित्युपेक्ष्यम्। **दक्षिणतो** रमणीयम्। '**अवेल्लवणतोयस्य** **स्थितां**[1]**दक्षिणतः** कथम्।' (भट्टिः 8-109)।

(412)

"**दक्षिणपश्चात्**" (त.)

'दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः आतिश्च प्रत्ययः' (वा. 5-3-32) इति दक्षिणापूर्वस्यापरशब्दस्य पश्चभावे आतिप्रत्यये च सिद्धमि-

---

1. 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' (2-3-29) इति पञ्चमी।

दमव्ययम् । प्राग्दिशीयत्वेन विभक्तिसंज्ञकत्वात् तद्धितान्ताव्ययमिदम् । दक्षिणस्याः अपरायाश्च दिशोऽन्तराला निर्ऋतिदिगेवमुच्यते । एवम् **उत्तरपश्चात्** इत्यपि ज्ञेयम् ।

(413)

"**दक्षिणा**" (त.)

'दक्षिणादाच्' (5-3-36) इत्याच्प्रत्ययोऽस्तातिप्रत्ययार्थे । **दक्षिणा** वसति, **दक्षिणा** रमणीयम् । 'अयं **दक्षिणा** विश्वकर्मा' (यजुः 2-3-55)

(414)

"**दक्षिणात्**" (त.)

अस्तातिप्रत्ययार्थे दक्षिणशब्दात् 'उत्तराधर**दक्षिणात्**—' (5-3-34) इत्यातिप्रत्ययः । **दक्षिणात्**=दक्षिणस्यां दिशीत्यर्थः ।

(415)

"**दक्षिणाहि**" (त.)

दक्षिणशब्दात् दूरस्थे दक्षिणभागेऽर्थे 'आहि च दूरे' (5-3-37) इत्याहिप्रत्ययः ।

(416)

"**दक्षिणित्**" (त.)

अस्तातिप्रत्ययार्थे दक्षिणशब्दात् आतिप्रत्ययः; पृषोदरादित्वात् इकारः । छान्दसोऽयम् । 'प्र **दक्षिणित्** हरिवो मा वि वेनः' (ऋक् 5-36-4) ।

(417)

"दक्षिणेन" (त.)

दक्षिणशब्दादस्तातिप्रत्ययार्थे 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (5-3-35) इति एनप्प्रत्ययः। सप्तमीप्रथमाविभक्तिभ्यामेवाय प्रत्ययः। 'प्रागदर्शनात्, प्रत्यक् कालकवनात्, [1]दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्' (भाष्यम् 6-3-109)। 'दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते' (शाकुन्तलम् १) 'दण्डकान् दक्षिणेनाहं सरितोऽद्रीन् वनानि च।' (भट्टिः 8-108)।

(418)

"दण्डादण्डि" (अ.)

दण्डैश्च दण्डैश्च प्रहृत्य प्रवृत्तमिदं युद्धमित्यर्थे 'तत्र तेनेदमिति सरूपे' (2-2-27) इति कर्मव्यतीहारबहुव्रीहौ 'इच् कर्मव्यतीहारे' (5-4-127) इति समासान्त इच्प्रत्ययः। 'इच्' (ग. सू. 2-1-17) इति तिष्ठद्गुगणे पाठात् अव्ययीभावत्वम्। 'अव्ययीभावश्च' (1-1-41) इत्यव्ययसंज्ञा। पृषोदरादित्वात् पूर्वपददीर्घः। एवं मुनामुनि मुसलामुसलि बाहवा(बाहू) बाहवि [1]लाटालाटि पुष्पापुष्पि केशाकेशि कचाकचि इत्यादयो भाव्याः।

---

1. 'एनपा द्वितीया' (2-3-31) इति द्वितीया। 'दक्षिणेन सरस्वत्याः दृषद्वत्युत्तरेण च' (भारत-वन. 83-4) इत्यादिषु द्वितीयाभाव आर्षत्वात्।

1. लाटो दण्डः। इदमेव देशभाषासु 'लठाकठि' इत्युच्यते।

(419)

" दर्द्धि " (स्व.)

याच्ञायामिदमव्ययमिति वाचस्पत्यम्। 'दग्धि' इति केचित् पठन्ति। उदाहरणं मृग्यम्।

(420)

" दमे " (चा.)

गृहार्थकमिदमव्ययं वेदेषु प्रसिद्धम्। उदाहरणं मृग्यम्।

(421)

" दरम् " (नि.)

अल्पार्थकोऽयं निपातः। तदुक्तम्—'अल्पार्थे त्वव्ययं दरम्' (वैजयन्ती) इति। वाङ्मयार्णवादिषु 'दर' इत्येवास्य स्वरूपमुपात्तम्—'मनागर्थे दराव्ययम्' इति। 'अहितं त्रिशिखिरहन् मुकुन्दोऽदरत्वेऽपि दरव्यथाविमुक्तः' (यादवाभ्युदये 15-120)।

(422)

" दिवा " (स्व.)

दिनार्थकमिदम्। [1]दिवाकरः। दिवातनः। 'दिवा च शुक्लपक्षश्च—' (भारत. आनु 242-31)।

---

1. दिवा करोतीत्यर्थे दिवाकरः सूर्यः। 'दिवाविभा—' (3-2-21) इति करोतेष्टप्रत्ययः। 'दिवा' इति अधिकरणशक्तिप्रधानमव्ययम्। कर्मोपपदाधिकारेऽस्य 'सुपि' इत्यनेन सम्बन्धोऽस्तीति शेषम्।

(423)

" दिष्टया " (चा.)

आनन्दोऽस्यार्थः। ' दिष्टया वर्धामहे '। '—सभाजनदर्शनप्रातिलोम्येषु ' इति केचित्। ' दिष्टयाऽव्ययं मङ्गले च हर्षे च परिकीर्तितम्।' इति वाङ्मयार्णवः। भाग्यार्थकस्य दिष्टिशब्दस्य तृतीयान्तमिदमिति केचित्। ' अन्योऽन्यगतसौहार्दा दिष्टया दिष्टयेति चाब्रुवन् ' (भारत. आनु. 129)। ' दिष्टयाऽम्ब ते कुक्षिगतः परः पुमान् ' (भागवते 10-2-41)।

(424)

" दुर् " (उ. ग.)

' दुरीषदर्थे निन्दायां कृच्छ्राऽनीप्सितवैकृते।' (क्षीरस्वामी)। ईषदर्थे-दुर्बलः। निन्दायाम्—दुश्चर्म। कृच्छ्रे—दुष्पानः, दुर्गतिः। अनीप्सिते—दुर्भगः, दुष्कृतम्। वैकृते—दुर्मुखः। असम्पत्ति-निषेधावप्यर्थौ। असम्पत्तिर्यथा—भिक्षाणां अभावः दुर्भिक्षम्। निषेधे—दुर्मानी। मानरहित इत्यर्थः सङ्कटदुःखादयोऽपि प्रकरणानुरोधेन अस्यार्थाः। क्रियायोगेऽस्योपसर्गसंज्ञा। अन्यत्र गतिसंज्ञा। [1]दुर्गः। दुःखसाध्ये—दुष्करम्। दुःखेनापि कर्तुं न शक्यते इत्यर्थः।

---

1. ' सुदुरोरधिकरणे ' (वा. 3-2-48) इति डः। ' दुस् दुर् ' इत्येतौ द्वावप्युपसर्गौ समानार्थकौ; धात्वादिषु प्रवृत्ति-निवृत्त्यर्थमेव रेफान्तत्वेन सकारान्तत्वेन च पाठः।

(425)

"दुष्ठु" (स्व.)

दौष्ठ्यमस्यार्थः। 'दुष्ठुवादी खलः'। 'अतिकष्टमस्यार्थः' इति **प्रौढमनोरमा**। स्थाधातोः औणादिके कुप्रत्यये सुषामादित्वात् (8-3-98) षत्वम्।

(426)

"दुःखा" (डा.)

प्रातिलोम्ये वर्तमानात् दुःखशब्दात् कृञो योगे 'दुःखात् प्रातिलोम्ये' (5-4-64) इति डाच्प्रत्ययः। डाचो निपातसंज्ञकत्वादव्ययत्वम्। **दुःखा**करोति=स्वाम्यादेश्चित्तं पीडयतीत्यर्थः।

(427)

"दुःषमम्" (ति.)

दुष्टं समं यत्र तत् **दुःषमम्**। 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (8-3-88) इति षत्वम्। तिष्ठद्गुगणे पाठादव्ययीभावसमासेऽव्ययत्वम्। निन्दनीयमित्यर्थः।

(428)

"दन्" (स्व.)

हिंसार्थकोऽयम्। दन्भूः सर्पः। दढार्थकोऽयमिति **शब्दचिन्तामणिः**।

(429)

"दूरे" (नि.)

"दूरार्थकोऽयं निपातः। सप्तम्यन्तप्रतिरूपकमिदमव्ययम्।" इति केचित्। [1]दूरेत्यः।

(430)

"देवेट्" (स्व.)

हविर्दानमस्यार्थः। 'असुसुपद् देवेट्'। छान्दसोऽयम्।

(431)

"दैवात्" (वि. प्र.)

अवशादित्यर्थः। 'हठात्' इत्यर्थोऽप्येति **शब्दकल्पद्रुमः**। 'अकस्मात्' इत्यर्थ इत्यन्ये। यथा—'**दैवात्** प्राप्ते वृषगिरितटं देहिनि त्वन्निदानात्' (नि. देशिकस्य दयाशतके)। विभक्तिप्रतिरूपकमव्ययमेतत्।

(432)

"दोषा" (स्व.)

रजनी, निशामुखम् इत्यर्थः। अधिकरणशक्तिप्रधानमिदमव्ययम्। '**दोषापि** नूनमहिमांशुरसौ किलेति व्याकोशकोकनदतां दधते नलिन्यः' (माघः 4-46)। 'दोषाभूतमहः, दिवाभूता रात्रिः' इत्यादिषु सप्तम्यर्थभिन्नेऽपि

---

1. 'अव्ययात् त्यप्' (4-2-104) इत्यत्र 'दूरादेत्यः' (वा. 4-2-104) इति वचनात् दूरशब्दात् शैषिके त्यप्प्रत्यये निष्पन्नमिदं पदम्। एवं चास्य 'दूरे' इत्यस्याव्ययत्वकल्पनं भाष्यादिविरुद्धमिति ज्ञेयम्।

प्रयोगो भाष्यप्रामाण्यात्। [1]दोषाननो वायुः। [2]दोषाकरोति। 'घर्मकालदिवस इव क्षयितदोषः' (कादम्बरी) इत्यादिषु तु स्त्रीलिङ्गत्वमिति ज्ञेयम्।

(433)

"द्यु" (चा.)

हिंसाप्रातिलोम्यपादपूरणेष्वयमिति **प्रौढमनोरमा**। उदाहरणानि दुर्लभानि।

(434)

"द्यु" (चा.)

वासरार्थकोऽयम्। 'द्यु चन्द्रो द्योतते कथम्?' (ग.र.म.)। 'द्युर्—' इति असान्तमिदम्—इति **वररुचिः**। 'गगनेऽव्यय नपुंसकम्' इति **केचित्**। 'द्युस्' इति सान्तमित्यपि **केचित्**।

(435)

"द्रवत्" (स्व.)

द्रुतगतिरस्यार्थः। छान्दसोऽयम्। एवम्, 'धृषत्' इत्यप्यव्ययं शत्रन्तसमानाकारं धार्ष्ट्यार्थकं (छान्दसमेव) ज्ञेयम्।

---

1. 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इति ट्युः ट्युल् वा प्रत्ययः, तुडागमश्च।

2. अदोषा दोषा करोतीत्यर्थे च्विप्रत्ययः। 'अव्ययस्येत्वनीत्वौ नेति वाच्यम्' (वा. 7-4-32) इति वचनादीत्वनीत्वौ नेति विशेषः।

(436)

" द्राक् " (स्व.)

शीघ्रार्थकोऽयम्। 'द्राग् अभ्यविन्यस्तदृशः स तस्याः—' (नैषधे 3-2)।

(437)

" द्रुतम् " (स्व.)

शीघ्रार्थकमिदं क्रियाविशेषणमपि भवति। 'द्रुतं वितनुते मुदम्—'।

(438)

" द्वन्द्वम् " (स्व.)

द्वौ द्वौ इत्यर्थेऽव्ययमेतदिति **क्षीरस्वामी**। 'द्वन्द्वं मन्त्रयन्ते, इत्युदाहृतं च **तिलकेन**। **परे** तु 'द्वन्द्वमिति पूर्वपदस्य च अम्भावः उत्तरपदस्य च आत्वम्, नपुंसकत्वं च' (वा. 8-1-15) इति **वार्त्तिक**-प्रामाण्यात् नपुंसकलिङ्गत्वमेव न्याय्यम्; न तु अव्ययत्वमिति ज्ञेयम्' इति वदन्ति। वस्तुतस्तु प्रकृत**वार्त्तिक**प्रत्याख्यानावसरे **भाष्ये** 'तत्र नपुंसकत्व-मनिपात्यम्' (भा. 8-1-15) इत्युक्तत्वात् अव्ययत्व एव **भाष्यनै**र्भर्यमिति ज्ञेयम्।

(439)

" द्विः " (त.)

द्विवारमित्यर्थः। 'द्वित्रिचतुर्भ्यः—' (5-4-18) इति क्रियाभ्यावृत्तिगणने सुच्। 'कृत्वोऽर्थाः' (ग. सू. 1-1-37) इत्यव्ययत्वम्।

'द्विः शरं नाभिसन्धत्ते द्विः स्थापयति नाश्रितान्। द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते॥' (हनुमन्नाटके 1-48)।

(440)

"द्विता" (नि.)

'निश्चयेन, पक्षद्वयेऽपि' इत्यर्थे छान्दसोऽयं निपातः। 'अध द्विता वरुणो मयि नः स्यात्' (ऋक्. 7-28-4)। 'द्विता नक्षत्रं पप्रथच्च भूम॥' (ऋक् 7-86-1)। लोके द्वैधीभावरूपार्थे वृत्तिः।

(441)

"द्वितीया" (डा.)

द्वितीयशब्दात् कृञो योगे कृषौ च अभिधेये 'कृञो द्वितीयतृतीय—' (5-4-59) इत्यादिना डाच्प्रत्ययः। डाचो गतित्वेनाव्ययत्वम्। द्वितीयाकरोति। एकवारं कृष्टां भूमिं पुनः प्रातिलोम्येन कर्षतीत्यर्थः।

(442)

"द्विदण्डि" (अव्य.)

द्वौ दण्डौ अस्मिन् प्रहरणे इति विग्रहे बहुव्रीहिसमासे 'द्विदण्ड्यादिभ्यश्च' (5-4-128) इति समासान्ते इच्प्रत्यये, 'इच् कर्मव्यतीहारे' (ग. सू. 2-1-17) इति तस्याव्ययीभावेऽव्ययत्वमस्य। द्विदण्डि प्रहरति। द्वौ दण्डौ गृहीत्वा प्रहरतीत्यर्थः। एवमेव आढ्यपदि, उभयाकर्णि, उभयाञ्जलि, उभयादन्ति, उभयापाणि, उभयाबाहु, उभयाहस्ति, उभाकर्णि, उभाञ्जलि, उभादन्ति, उभापाणि, उभाबाहु, उभाहस्ति, एकपदि, द्विमुसलि, निकुच्यकर्णि, प्रोष्ठपदि, सपदि, संहतपुच्छि, इत्येतेषामपि निष्पत्तिः, अव्ययत्वं च बोध्यम्। निदर्शनार्थमिहैकमुपात्तम्।

यथावसरं युक्तस्थलेष्वपि उत्तरत्र विवरणं भविष्यति । **उभयाबाहु**—उभाबाहु इत्यत्र गणे निपातनात् इच्प्रत्ययलोपः; प्रत्ययलक्षणेन इजन्तत्वेनाव्ययीभावत्वम् ।

(443)

"द्वेधा" (त.)

'संख्याया विधार्थे—' (5-3-42) इति धाप्रत्ययः । तस्य 'एधाच्च' (5-3-46) इति एधाच्प्रत्ययः । तद्धितान्ताव्ययमिदम् । द्वैधमित्यप्यव्ययं विधार्थे एव । अत्र 'द्वित्र्योश्च धमुञ्' (5-3-45) इति धमुञ्प्रत्यय इति विशेषः । **द्विधा** इति तु धाप्रत्यये सिद्धमेव ।

(444)

"द्वै" (चा.)

वितर्कार्थकोऽयम् । 'न्वै' इत्यस्य वितर्कार्थकस्य पाठान्तरमिदम् । उदाहरणं मृग्यम् ।

(445)

"धिक्" (स्व.)

निन्दाभर्त्सनयोरयम् । निन्दायाम्—'धिगिमां देहभृतामसारताम्' (रघु. 8-50) । भर्त्सने—'धिक् [1]तार्किकान् पदविदोऽपि वृथा विदग्धान्' (तिलकः) । [2]धकित् ।

---

1. 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥' (श्लोकवार्त्तिकम् 2-3-2) इति द्वितीया ।
2. अत्र 'अव्ययसर्वनाम्नाम्—' (5-3-71) इति टेः प्रागकच्प्रत्ययः । 'कस्य च दः' (5-3-72) इति ककारस्य दकारः । प्रागिवीयोऽयमकच्प्रत्ययः कुत्सिताद्यर्थेषु बोध्यः ।

(446)

" धूली " (ऊ.)

विदूराकुलीभावोऽर्थः । ऊर्यादित्वात् कृञो योगे गतिसंज्ञा। धूलीकृत्य दूरतः स्थित्वा, विपरीतं कृत्वेत्यर्थः ।

(447)

" धूसी " (ऊ.)

विस्तारोऽस्यार्थः । अयमपि ऊर्यादिः । '--- कान्तौ ' इति **शाकटायनः** । 'काङ्क्षायाम्' इति **केचित्** । 'धूसी—' इति **शब्द-कौस्तुभे** दृष्टः पाठः । धूसीकृत्य = विस्तार्येत्यर्थः ।

(448)

" ध्वंसकला " (ऊ.)

हिंसार्थकोऽयमूर्यादिषु द्रष्टव्यः । ध्वंसं कलयतीति डाजन्तत्वं **वाचस्पत्ये** व्युत्पादितम् । उभयथाऽपि गतिसंज्ञा सिद्धा । तेन **समासे** ल्यपि **ध्वंसकला**कृत्य इति सिद्ध्यति । परिभवोऽस्यार्थ इति **केचित्** ।

(449)

" न " (चा.)

निषेधोपमानयोरयं वर्तते । निषेधे—'आसवः प्रतिपदं प्रमदानां **नैक**-रूपरसतामिव भेजे' (किरात. 9-55) । उपमाने—'मृगो **न** भीमः **कुचरो**

गिरिष्ठाः' (ऋक् 1-154-2)। मृगो न=मृग इवेत्यर्थः। उपमानार्थको-ऽयं छन्दस्येव। तत्रापि उपमानपदात् पर एव, अभिधानस्वाभाव्यात्।

प्रसिद्धात् नञो व्यतिरिक्तोऽयं निपातः। अनेन साकं समासे न नलोपः। एतदेव व्याख्यातृभिस्तत्र तत्र 'नगनेकादिवत् नसमासः' इति प्रतिपाद्यते। 'पन्नगः' इत्यत्रापि पद्भ्यां न गच्छतीत्यर्थे नसमास एव।

नञोऽर्थाः बहव उपरि प्रदर्शयिष्यन्ते। तेषु सर्वेष्वप्यर्थेषु अमुमपि बहुलं प्रयुञ्जते; नतु ननञोरर्थस्वरूपभेदापरिज्ञानादित्यास्तां तावत्। विस्तरस्तु शिष्टप्रयोगसमीक्षायामस्माभिरुपन्यस्तः।

'अकार्षीः कटं देवदत्त? [1]न करोमि भोः!। नाकार्षम्।' पृष्टप्रतिवचनमस्य 'न' इत्यस्यार्थः।

(45.0)

"नकिः" (चा.)

'नकिस्' इति शाकटायनः। निषेधोपमानावस्यार्थौ। निषेधे—'नकिरिन्द्र त्वदुत्तरः—' (ऋक्. 4-30-1)। उपमाने—'मेषो

---

1. अत्र 'नन्वोर्विभाषा' (3-2-121) इति विकल्पेन भूतसामान्ये लडिति ज्ञेयम्।

नकिर्वर्षसि हेम राजन् !' ।(ग. र. म.) हे राजन् ! मेघ इव हेम वर्षसीत्यर्थः वर्जनमप्यस्यार्थ इति **प्रौढमनोरमा**। सर्वनामसंज्ञकमिदमिति **ऋक्सूक्तवैजयन्त्यादिषु** प्रतिपादितम् (1-48-6)। तत्र प्रमाणं मृग्यम्।

(451)

"**नकिम्**" (चा.)

वर्जनार्थकोऽयं चादिषु **मनोरमायां** पठितः। न+किम् इति निपातद्वयसमुदायोऽयम्। एवम् पृषोदरादित्वात् दीर्घे **नकीम्** इत्यपि वर्जनार्थकं द्रष्टव्यम्।

(452)

"**नक्**" (स्व.)

निषेधार्थकमिदमिति **केचित्**। 'अपस्वसुरुषसो नग् जिहीते' (ऋक्. 7-71-1) इत्यत्र तु रात्र्यर्थकः प्रयुक्तः। स्वरादिषु च अस्य क्वाचित्क एव पाठः।

(453)

"**नक्तम्**" (स्व.)

रात्र्यर्थकोऽयम्। 'तुषारमूर्तेरिव नक्तमंशवः' (माघः 1-21) नक्तंचरः। नपुंसकलिङ्गतामन्येऽप्याहुः।

(454)

## " नञ् " (चा.)

' नञ् अभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे ।

ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः ॥ '

इति मेदिनी । अभावे—[1]अपापम् । निषेधे—' अविप्र इव भाषसे ' (विप्रवत् न भाषसे—इत्यर्थः ।) [2]स्वरूपार्थे—' मथ्नामि कौरवशतं समरे न कोपात् ' (वेणीसंहारे) । [3]अतिक्रमे—' अपचसि त्वं जाल्म- ' । ईषदर्थे—[4]अनुदरा कन्या । सादृश्ये—अब्राह्मणमानय । (ब्राह्मणसदृशं क्षत्रियादिकमानयेत्यर्थः ।) । विरुद्धे—अधर्मः । अन्ये—अनग्निर्जलम् ।

अप्राशस्त्येऽपि दृश्यते । यथा अकेशी, (अप्रशस्तकेशी इत्यर्थः) । अन्योन्यार्थकत्वमपि तिलकेनोक्तम् । ' घटः पटो न ' इत्युदाहरणम् ।

---

1. अत्र नञ्तत्पुरुषे ' नलोपो नञः ' (6-3-73) इति नञो नकारस्य लोपः । इदमेव न-नञोरव्यययोर्भेदकारणेन शाब्दिकैरभिमतम् । नसमासे तु न नलोप इत्यवोचाम । नञः स्वरादिष्वपि पाठं केचिद्-भिमन्यन्ते, तद्युक्तमिति हरदत्तादेर्मुतोऽपि (पुटे 690) स्पष्टम् ।

2. स्वरूपार्थेऽयं प्रकृतस्य वाक्यान्वय इति भेदः । समासाभावे तु नैवमिति विशेषः ।

3. अतिक्रमोऽत्र क्षेपः । ' नञ् ' (2-2-6) इति समासः । ' नञो नलोपस्तिङि क्षेपे ' (वा. 6-3-73) इति नलोपः ।

4. अत्र ' तस्मान्नुडचि ' (6-3-74) इति नुडागमः ।

[1]प्रसज्यप्रतिषेध-पर्युदासादयोऽपि प्रकरणानुरोधेनास्यैवार्थाः । अत एव **शब्दचिन्तामणि**प्रभृतिषु 'अभाव एव नञो मुख्योऽर्थः' इति समर्थितम् । विस्तरस्तु **नञर्थवादे**, **शिरोमणिग्रन्थे**, **वाचस्पत्यादिषु** च द्रष्टव्यः । [2]**नभ्राट्** **नपात्** । [3]एकान्नविंशतिः , [4]नगः- अगः ।

---

1. 'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
   प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ॥' इति प्रसज्यप्रतिषेधस्य लक्षणं शाब्दिकैरुक्तम् ।
   'प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता ।
   पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥' इति पर्युदासलक्षणम् ।

2. न भ्राजत इति नभ्राट् । भ्राजतेः क्विबन्तस्य नञ्समासः । 'नभ्राट्' (6-3-75) इति नञः प्रकृतिभावः । एवम् नपात्, नवेदाः, नासत्याः, नमुचिः, नकुलः, नखम्, नपुंसकम्, नक्षत्रम्, नक्रः, नाकम्, इत्येतेष्वपि नञः प्रकृतिभावो बोध्यः ।

3. एकेन न विंशतिरिति वृत्तौ 'एकादिश्चैकस्य चादुक्' (6-3-76) इति नञः प्रकृतिभावः । एकस्यादुगागमोऽपि विधीयते । एवं 'एकान्नत्रिंशत्' इत्यादिष्वपि बोध्यम् ।

4. 'नगोऽप्राणिष्वन्यतरस्याम्' (6-3-77) इति नञः प्रकृतिभावविकल्पः ।

(455)

## "ननु" (चा.)

परमताक्षेपानुज्ञापृष्टप्रतिवचनप्रश्ननयविरोधोक्तिवाक्यारम्भनिश्चयादयोऽस्यार्थाः ।

परमताक्षेपे — 'ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः ।' (किरात-2-5) ।

अनुज्ञायाम्—'ननु सन्दिशेति सुदृशोदितया त्रपया न किञ्चन किलाभिदधे' । (माघः 9-61) ।

पृष्टप्रतिवचने—'अकार्षीः कटं देवदत्त ! ; [1]ननु करोमि भोः ! ' ।

प्रश्ने—ननु गच्छसि ! । (काक्वा किमर्थो लभ्यतेऽत्रेति ज्ञेयम्) ।

नये—'आपदो नन्वहो वन्द्याः सारासारविवेचिकाः' ।

विरोधोक्तौ—'ननु वा इदमपि तुल्यम्' ।

वाक्यारम्भे—'ननु अपोहस्तावदुच्यते' ।

निश्चये—'लोको देवं समालोक्य उदासीनो भवेन्ननु' (भारते 13-6-19) ।

---

1. अत्र 'ननौ पृष्टप्रतिवचने' (3-2-120) इति भूतसामान्ये लडिति ज्ञेयम् ।

अवधारणानुनयामन्त्रणामर्षादयोऽपि अस्यार्थाः। यथा—

अवधारणे—'उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे'। (रघुः 1-60)।

अनुनये—'ननु समर्थोऽसि ; त्वमेव विपणिं गच्छ'।

आमन्त्रणे—'ननु मां प्रापय पत्युरन्तिकम्' (कुमार. 4-32)।

अमर्षे—'ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम्।' (माघः 15-39)।

विनयविनिग्रहपरकृतिसंभ्रमादयोऽपि अर्थाः कोशेषु निर्दिष्टाः यथानुगुणं काव्येषु द्रष्टव्याः।

'मन्ये शङ्के ध्रुवं नूनं किंवा प्रायोऽनुत्रेम्रि च।
ननु नाम हि जानामि उत्प्रेक्षाव्यञ्जकानि च॥'

इति काव्यचन्द्रिकावचनादस्योत्प्रेक्षाव्यञ्जकत्वमपि सिद्धमेव।

(456)

"ननुच" (वा.)

ननु च इति निपातद्वयसमुदायोऽयं विरोधार्थकः। 'ननुच भो छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं च अधीयते—' (भाष्यम् एओङ्)।

(457)

## "नमस्" (चा. सा.)

नमनमस्यार्थः । 'नमोऽस्तु रामाय सलक्ष्मणाय—' (रामा.)। अत्र 'नमः स्वस्ति —' (2-3-16) इति चतुर्थी। 'नारायणं नमस्कृत्य' इत्यादिषु तु कृधातोरेव नमनमर्थः। नमश्शब्दस्तु तदर्थद्योतकः; तेन द्वितीयेति बोध्यम्। 'विष्णवे दीपो नमः। दीपं निवेदयामीत्यर्थः।' इति तिलकः। विस्तरस्तु शब्दशक्तिप्रकाशिकायां द्रष्टव्यः। अस्य साक्षात्प्रभृतित्वात् कृञो योगे गतिसंज्ञायां समासे, ल्यपि नमस्कृत्य इति सिद्ध्यति। 'नमस्पुरसोर्गत्योः' (8-3-40) इति विसर्गस्य सकारः। 'प्रणामं येऽपि कुर्वन्ति तेषामपि नमो नमः।' (भारत-शान्ति 46-136) इत्यादिषु आर्षत्वात् षष्ठीति ज्ञेयम्।

अत्रेदमवधेयम्—'यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये यो नमसा स्वध्वरः' (ऋक्. 8-1-95) 'विधेम चास्मै नमसा सह त्वया—' (भागवते 3-4-18) इत्यादिप्रयोगदर्शनात् नमश्शब्दः क्लीबलिङ्गोऽपि वर्तते। अत एव 'नमांसि भूयांसि' 'नमसा योऽकरोद् देवे स स्वध्वर इतीरितः' (अहिर्बुध्न्यसंहिता 37-37) इत्यादिप्रयोगाः संगताः। अर्थश्च तुल्यः। इति। अत एव 'मन्त्रब्रह्मणि मध्यमेन नमसा' इत्यष्टश्लोक्यां पराशरभट्टारकैरपि प्रयुक्तम्।

त्यागरतयोः (उणादिकोशः), अन्ने वज्रे च (निघण्टुः 2-7, 29) 'एना वो अग्निं नमसोर्जो नपातम् आहुवे' (ऋक्. 7-16-1) इत्यत्र स्तोत्रे इति शब्दकल्पद्रुमः।

(458)

"नयाति" (ति. प्र.)

'न शक्यते' इत्यर्थे तिङन्तप्रतिरूपकमव्ययमेतत्। 'नेतुं नाभिरितो **नयाति** विदिशं किं भक्तु (?) मुद्रच्छति- —' (तिलकः)।

(459)

"नवरम्" (चा.)

'**नवरं** केवलार्थकम्' इति **त्रिकाण्डशेषः**। न+वरम् इति समुदितमेतदिति बोध्यम्।

(460)

"नवर्तते" (ति. प्र.)

इदमपि तिङन्तप्रतिरूपकमव्ययं **गणरत्नमहोदधि**प्रभृतिषु पठितम्। 'समराभिमुखे पत्यावक्षुनिपातो **नवर्तते** तस्याः' (तिलकः)। अमङ्गलप्रतिषेधोऽस्यार्थः। अनुचितमित्यस्यार्थमाह **तिलकः**।

(461)

"नवा" (चा.)

निपातद्वयसमुदायोऽयम्। 'कुर्यादन्यन्नवा कुर्यात् मैत्रो ब्राह्मण उच्यते' (मनुस्मृतिः 2-87)।

(462)

" **नवै** " (चा.)

निषेधावधारण-विशेषनिषेधावस्यार्थौ । निषेधावधारणे — ' **नवै** स्त्रैणानि सख्यानि सन्ति '—(ऋक्. 10-25-15) । (नैव स्त्रीणां सौहार्दानि सन्तीत्यर्थः) ।) विशेषनिषेधे —' **नवा** उ एतन्म्रियसे न रिष्यति'— (ऋक्. 1.162-21) ।

(463)

" **नह** " (चा.)

प्रत्यारम्भोऽस्यार्थः । ' **नह** भोक्ष्यसे ' ।

(464)

" **नहवै** " (चा.)

निश्चितनिषेधावधारणादयोऽस्यार्थाः । ' **नहवै** सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ' (छान्दोग्ये 8-12-1) । निपातत्रयसमुदायोऽयम् ।

(465)

" **नहि** " (चा.)

निषेधार्थकोऽयम् । ' **नहि नहि** करिकलभोऽयं शुण्डादण्डोऽयमस्य, न तु पुच्छः ।' (कुवलयानन्दः) सत्यतया न, सर्वथा न इत्यप्यस्य प्रकरणानुरोधी अर्थः ।

(466)

"**नहिकम्**" (चा.)

निषेधोऽर्थः। 'अस्ति ते किञ्चित? **नहिकम्**'। न किञ्चिदिति फलितोऽर्थः।

(467)

"**ना**" (चा.)

'अभावे नह्यनो नाऽपि—' इति अमरः।

(468)

"**नाना**" (स्व. त.)

अनेकविनार्थयोरयं वर्तते। अनेके- 'नानाविधं कृतकदेहभृतः समाजम्' (ग. र. म.)। विनार्थे- 'नाना [1]नारीं निष्फला लोकयात्रा' (ग. र. म.)। उभयार्थकत्वमपि वाङ्मयार्णवे उक्तम्। यथा—'नानाऽव्ययं विनार्थेऽपि तथाऽनेकोभयार्थयोः' इति।

---

1. अत्र 'विनञ्भ्यां नानाञौ—' (5-2-27) इति स्वार्थे नञो नाञ्प्रत्यये 'नाना' इति सिद्ध्यति; अत्र 'पृथग्विनानानाभिः—' (2-3-33) इति यद्यपि तृतीया पञ्चमी वा स्यात्; तथाऽपि 'विना वातं विना वर्षं विद्युत्प्रपतनं विना। विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ॥' (काशिका 2-3-32) इत्यादिस्थलेषु द्वितीयासिद्ध्यर्थं 'पृथग्विनानानाभिः—' इति योगविभागाश्रयणात् अत्रापि द्वितीया संगतेति बोध्यम्। अत्र सूत्रेऽपि नानाशब्दः विनार्थकः; पृथगर्थाभ्यां शब्दाभ्यां सह पाठादित्यवधेयम्।

   अत्रेदमवधेयम्—तद्धितान्तत्वेनैवास्याव्ययत्वे सिद्धे स्वरादिषु अस्य पाठः—असत्त्वस्यापि अर्थान्तरेषु अव्ययत्वार्थम्, अन्तोदात्तस्वरार्थं चेति। व्यक्तमिदम् बृहच्छब्देन्दुशेखरे।

(469)

"**नाम**" (चा.)

प्राकाश्यसम्भावनाक्रोधाङ्गीकारकुत्सनालीकविस्मयामन्त्रणस्मृतिकथञ्चिदर्थेषु अस्य वृत्तिः ।

प्राकाश्यम —अतिप्रसिद्धत्वम् । यथा-'हिमालयो **नाम** नगाधिराजः'(कुमार.1-1)।

सम्भावनायाम्—'कथं **नाम** समेष्यसि—' ।

क्रोधे—'ममापि **नाम** दशाननस्य परैः परिभवः !'

अङ्गीकारे—एवमस्तु **नाम** । (असूयापूर्वकाङ्गीकार एव प्रायोऽत्र) ।

कुत्सने—'को **नामायं** सवितुरुदये स्वापमेवं विधत्ते' ।

अलीके—'दृष्टेऽवरे रोदिति **नाम** तन्वी' (रोदिति **नाम**, न तु रोदितीत्यर्थः ।)

विस्मये—अन्धो **नाम** पर्वतमारोहति ।

आमन्त्रणे—'अरे को **नाम** गच्छति ? इहागच्छ' ।

स्मृतौ—'स **नामायं** बन्धुः' ।

कथञ्चिदर्थे—'यदि लेपनमेवेष्टं लिम्पति**र्नाम** कोऽपरः' ।

इदमत्रावधेयम्—**नाम**शब्दः क्लीबान्तोऽन्यः, यस्याभिधानादिरर्थः, यस्य च 'नाम्न्यादिशिग्रहोः' (3-4-58) इत्यादिषु ग्रहणम् इति ।

(470)

"**नास्ति**" (ति. प्र.)

सत्तानिषेधोऽस्य समुदितस्यार्थः । [1]**नास्ति**कः । 'अतिथिर्बालकश्चैव राजा जामाताऽथ गेहिनी । अस्ति **नास्ति** न जानाति देहि देहि पुनः पुनः ॥' (चाणक्ये) ।

1. नञ्पूर्वकोऽसधातुलकारान्तोऽयमिति केचित् । समुदितो निपात इत्यन्ये । उक्तमिदं काशिकायाम् (4-4-60) । उभयथाऽपि 'अस्ति नास्ति दिष्टं मतिः' (4-4-60) इति ठक् ।

(471)

## “नि” (उ. ग.)

“नि न्यग्भावे गुप्तदाने स्वभावे स्वापनिग्रहे ।

श्रुतिव्यावृत्त्यवस्थाने कथनाधानयन्त्रणे ॥

तेजने कारणे राशौ कौशलाज्ञाऽन्तनाशने

श्राद्धे परीक्षोपवेशे रते साम्येऽक्ष्ण्यनन्तरे ॥

परिवर्ते भृशे लेशे बन्धे स्वे दृष्टिकेतने ।” इति क्षीरस्वामी ।

न्यग्भावे— न्यञ्चति, न्युब्जं पात्रम् । गुप्तदाने-निक्षेपः, निधिः। न्यासः । स्वभावे— निसर्गः, नियतिः । स्वापे— निद्रा, निमीलनम् । निग्रहे— निकारः, निगृहीतः । श्रुतौ— निशाम्यति, निक्वाणः । व्यावृत्तौ— निवृत्तिः, निवृष्टो मेघः । अवस्थाने— निवासः, निकेतनम्, निलयः । कथने— निगदति, निष्ठुरम् । आधाने— निषेकः, निवापः । यन्त्रणे— नियच्छति, निकर्षति । तेजने— निशानयति, निकषः, कारणे— निदानम्, नियतिः । राशौ— निचयः, निकायः । कौशले— निपुणः, निष्णातः । आज्ञायाम्— निदेशः, नियोगः । अन्ते— निष्ठितः क्रतुः, ‘निष्ठा नारायणः प्रभुः’ । नाशने— निधनम्, निर्बर्हणम् । श्राद्धे— निवापः, निमन्त्रणम् । परीक्षायाम्— निरूपकः, निकषयति । उपवेशे— निषीदति । रते— निधुवनम् । साम्ये— निभः, [1]नीकाशः । अक्ष्णि— निमेषः, निमीलनम् । अनन्तरे— निकटः, संनिकृष्टः । परिवर्ते—

1. ‘इकः काशे’ (6-3-123) इति इगन्तस्योपसर्गस्यास्य दीर्घः ।

निमानम्, 'तिलैर्माषान् नियच्छति'। भृशे— निरतः, नितराम्। लेशे— निधुवः, निकुचितम्। बन्धे— [1]निबिडम्, निबिरीसम्। स्वे— निजः। दृष्टौ—निध्यायति, 'निशाम्य रामस्य निशम्य वृत्तं--' (चम्पूरामायणे अरण्य 2-3 श्लो.)। केतने—निकेतयति।

[2]नित्यः, [3]चिकिनम्—चिपिटम्, [4]चिक्कः, [5]चिल्लम्—पिल्लम्—

---

1. बन्धः = नीरन्ध्रोऽत्र विवक्षितः। नीरन्ध्रेऽभिधेये, 'नेर्बिडज्बिरीसचौ' (5-2-32) इति बिडज्बिरीसचौ प्रत्ययौ भवतः। एतच्च प्रक्रियासर्वस्वकारमतानुरोधेनोक्तम्। अत्र सूत्रे 'संज्ञायाम्' (5-2-31) इत्यनुवृत्तेः नासिकाया अवनतत्वे एतौ प्रत्ययौ इति उक्तमत्र काशिकायाम्। 'निबिडीकृतस्तनभुरः--' (मालविका. 2-3) 'कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः' (रघु. 9-58) 'उरुनिबिरी-सनितम्बभरालसेदि' (माघ: 7-20) इति कविभिः अवयवान्तरेषु च प्रयुज्येते। तथा 'निबिडाः केशाः' इति च।
2. ध्रौव्यार्थे नेस्त्यप् प्रत्ययः 'त्यब् नेर्ध्रुवे' (वा. 4-2-104) इति विहितः। अत्र उपसर्गप्रतिरूपकः स्वरादिषु पठितः 'नि' इत्ययं त्यपः प्रकृतित्वेन गृह्यते इति ज्ञेयम्। अन्यथा क्रियायोग एवोप-सर्गसंज्ञाया विधानात्, अत्र च क्रियायोगाभावात् असाङ्गत्यं स्फुटमेव।
3. 'नि' इत्यस्मात् नासिकायाः नतेऽभिधेये 'इनच् पिटच् चिकचि च' (5-2-33) इति इनच्पिटचौ प्रत्ययौ, क्रमेण प्रकृतेः चिक-चि इत्येतावादेशौ च भवतः।
4. 'ककारः प्रत्ययः चिक् च प्रकृत्यादेशः' (वा. 5-2-33) इत्यनेन पूर्वोक्तार्थे एव प्रकृतिप्रत्यययोर्विशेषः। तेन 'चिक्कः' इति सिद्धम्।
5. 'क्लिन्नस्य चिल्पिल् लश्चास्य चक्षुषी' (वा. 5-2-33) इति क्लिन्नेऽस्य चक्षुषी इत्यर्थे लप्रत्ययः, प्रकृतेः चिल्पिलौ च आदेशौ विधीयेते। तेनैवं सिद्धम्। 'चुल् च वक्तव्यः' (भाष्यम् 5-2-33) इति वचनात् 'चुल्लः' इति च सिद्ध्यति। सर्वे एते अतीवाप्रसिद्धाः। तथापि 'नि' इत्यस्मादेषां सिद्धेरत्रोपन्यासः।

सुष्ठम्। [1]नीशारः । [2]निदत्तम्, निकामम्, निशीतम्। नितराम्, [3]निवतः । [4]निकटम् ।

---

1. नीशारः = निवृतम् ; आवरणमिति यावत्। 'शॄ वायुवर्णनिवृतेषु' (वा. 3-3-21) इति घञ्। 'उपसर्गस्य घञि—' (6-3-122) इति नेर्दीर्घः। 'गौरिकाकृतनीशारः प्रायेण शिशिरे कृशः'। अत्र नेः संवरणमप्यर्थ इति ज्ञेयम्।

2. अत्र 'नि' इति नोपसर्गः, तदुक्ते 'अच उपसर्गात् तः' (7-4-47) इति प्रकृतेः तत्वप्रसङ्गेन 'नीत्तम्' इत्येव सिद्ध्येत्। तस्य स्वरादिषु उपसर्गप्रतिरूपकाणां पाठात्, उपसर्गप्रतिरूपकोऽयमुपसर्गाद् दान्तो निपातनमिदम् — इति तिङन्तादीनामाशयः। वस्तुतस्तु 'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥' (भाष्यम् 7-4-46) इति वचनात् भाष्येऽप्येतेषां न इष्टत्वमिति न कोऽपि दोषः। 'नितराम्' इत्यादिषु प्रत्ययोपपत्तये उपसर्गप्रतिरूपकाश्रयणेऽपि—निदत्तस्थलेऽपि तथैवाश्रयणे न किमपि निदानं पश्याम इति उपसर्ग एवायमिति बोध्यम्। न च 'आदिकर्मणि' इति निदत्तभाष्यकारिकायां पठितत्वात् 'आदिकर्मणि क्तः कर्तरि च' (3-4-71) इत्येतद्विषयिकैवेयमिष्टिरिति वाच्यम्। तस्य एकदेशानुमितिद्वारा सर्वत्रापि निदान्तेष्वेवमेवेति सूचनार्थत्वात्। यदि आदिकर्मण्येव रूपसिद्धिरित्याग्रहः, तदाऽस्तु पूर्वोपात्तेष्वेव अवदत्त-विदत्त-प्रदत्तेष्वेव तथा। प्रकृते न तथेति सिद्धं नः समीहितम्। कैयटस्वरसोऽप्यत्रैवेत्यलं प्रसक्तानुप्रसक्तेन।

3. 'उपसर्गाच्छन्दसि धात्वर्थे' (5-1-118) इति वतिप्रत्ययः। वेद एवायम्। 'यदुद्वतो निवतो यासि बप्सत्' (ऋक्. 10-142-4)। निवतः इति तृतीयाबहुवचनम्।

4. 'नेः समीपे' (वचनम् 5-2-29) इति भोजोक्त्या कटच्प्रत्ययः। निकटम् = अन्तिकम्।

अन्तर्भाव-संशय-क्षेप-मोक्षादयोऽपि कोशेष्वस्यार्थत्वेन संगृहीताः। ते च यथासम्भवमुदाहार्याः। अत्रोदाहृतेष्वर्थेषु केचन साक्षाद् वाचकाः, केचन द्योतकाः, केचन धात्वर्थानुधाविनः, अन्ये धात्वर्थबाधकाः, इतरे धात्वर्थे एव विशेषं भवते इति यथोपपत्ति स्वयमेवोहनीयम्।

(472)

"निकषा" (स.)

समीपार्थकः। 'विलङ्घ्य लङ्कां[1] निकषा हनिष्यति' (माघे 1-68)। मध्यार्थकत्वेनापि मेदिन्यामुपात्तः।

(473)

"निकामम्" (स.)

अतिशयार्थकोऽयम्। 'निकामं क्षामाङ्गी—' (मालतीमाधवे 2-3)। 'निकामे निकामे नः पर्जन्यो वर्षतु—' (तै. सं. 7-5-18-1) इत्यत्र कालविशेषः। 'निकृष्टम्' इत्यत्र कुत्सनमर्थः।

(474)

"निकुच्यकर्णि" (ति.)

निकुच्य कर्णौ धावति निकुच्यकर्णि धावति। मयूरव्यंसकादित्वात् (2-1-72) समासः। 'द्विदण्ड्यादिभ्यश्च' (5-4-128) इति समासान्त इच्प्रत्ययः। 'इच् कर्मव्यतीहारे' (ग. सू. 2-1-17) इति वचनादव्ययीभावत्वेऽव्ययत्वमस्येति ज्ञेयम्।

---

1. अत्र, 'अभितः परितः समयानिकषा—' (वा. 2-3-2) इति द्वितीया।

(475)

## " नित्यदा " (स्व.)

सातत्यमस्यार्थः । वेदेष्वेवास्य प्रयोगः । 'सर्वैकान्य—' (5-3-14) इति दाप्रत्ययविधायके सूत्रेऽस्यानुपादानेऽपि नित्यशब्दस्य बाहुलकाद् दाप्रत्ययः इति ज्ञेयम् । 'राधेयो **नित्यदा** दाता' इति प्रयोगदर्शनात् लोकेऽपीत्याहुः ।

(476)

## " निः " (उ. ग. उ-प्र.)

> " निः पृथक्करणे खेदे बहिष्कृत्याग्रहे भृशे ।
> भोगेऽधिश्रयणे शान्तावन्तर्धानपदार्थयोः ॥
> आविष्करणसम्पत्त्योर्वियोगे दर्शने सुखे ।" इति **क्षीरस्वामी** ।
> अभावादिषु च दृश्यते ।

पृथक्करणे—**निष्कासयति, निर्हारः**। खेदे—**निर्वेदः, निस्सहते**। बहिष्कृतौ—**निरस्यति, निराचष्टे, निराकरोति**। आग्रहे—**निर्बन्धः**। भृशे—**निर्दग्धः, निरीक्षते, निर्जितः**। भोगे—**निर्वेशः, निरामयः**। अधिश्रयणे—**निर्वापः**। शान्तौ—**निर्वाणोऽग्निः, निर्याणम्**। अन्तर्धाने—**निष्क्रान्तः**। पदार्थे—**निर्ज्ञानम्**। आविष्करणे—**निर्मितिः**। सम्पत्तौ—**निष्पत्तिः**। वियोगे—**निश्शल्यम्, निर्गतः**। दर्शने—**निर्दिष्टम्**। सुखे—**निर्वृतिः, निर्वेशः**। सुखमेव क्वचित् भृतित्वेन व्यपदिश्यते ।

अभावे—**निर्मक्षिकम्**। गतौ—निर्गतो ग्रामात् **निष्टयः** = चण्डालादिः । अव्ययसंज्ञकत्वात् त्यप् ।

इदमत्रावधेयम्—प्रादिगणे (1-4-58) निस्, निर् इति सकारान्तं रेफान्तं च उपसर्गद्वयं पठितम्। तत्र उभयोः प्रायः समानार्थकत्वमेव। 'निर्विण्णः' 'निरः कुषः' (7-2-46) इत्यादौ णत्वाद्यर्थं रेफविशिष्टनिमित्तत्वेन 'निर्' इत्यस्याभ्युपगमः। एवं 'निष्टपति सुवर्णम्' इत्यादिस्थलेषु षत्वार्थं 'निसस्तपतावनासेवने' (8-3-102) इत्यादिषु 'निस्' इति सान्तोपसर्गस्याश्रयणम्—इति। विस्तरस्तु बृहच्छब्देन्दुशेखरादौ। प्रयोगे तु उभयोरप्यविशेष एव।

(477)

"निःषमम्" (ति.)

निर्गतं समम्, निर्गतत्वं समस्य, इति वा निःषमम्। समान्निष्क्रान्तो निःषमम् इति केचित्। निन्दाऽस्यार्थः। तिष्ठद्गुगणे पाठादव्ययीभावसमासेऽव्ययत्वम्। 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (8-3-88) इति षत्वम्। सुषामादित्वेन षत्वपरिकल्पनं तु अप्रामाणिकम्।

(478)

"निष्कुला" (डा.)

निष्कोषणार्थे [=निस्सारीकरणार्थे] वर्तमानात् निष्कुलशब्दात् कृञो योगे 'निष्कुलान्निष्कोषणे' (5-4-62) इति डाच्प्रत्ययः। तस्य 'ऊर्यादिच्विडाचश्च' (1-4-61) इति गतिसंज्ञा। तस्यापि प्राग्रीश्वरीयत्वेन निपातत्वात्, 'स्वरादिनिपातमव्ययम्' (1-1-37) इत्यव्ययसंज्ञा। 'निष्कुलाकरोति पशून्'। निष्कुष्णातीत्यर्थः।

(479)

"निष्पत्रा" (डा.)

[1]निष्पत्त्रशब्दात् अतिव्यथने [अतिपीडने] अर्थे कृञो योगे डाच् 'सपत्त्रनिष्पत्त्रादतिव्यथने' (5-4-61) इति विहितः। डाचो गतिसंज्ञकत्वेन निपातत्वात् अव्ययत्वमिति ज्ञेयम्। 'निष्पत्त्राकरोति मृगं व्याधः' मृगशरीरात् शरम् अपरपार्श्वे निष्क्रामयतीत्यर्थः। 'शशांशुर्लाघवं तस्य निष्पत्त्राकृतनासि [साय] कम् ॥' (यादवाभ्युदये 16-90)।

(480)

"नीचा" (स्व.)

नीचैरित्यर्थेऽव्ययमिदम्। 'नीचा सन्तमुदनयः' (ऋक् 2-13-12) छान्दसोऽयम्।

(481)

"नीचात्" (वि. प्र.)

विभक्तिप्रतिरूपकमिदमव्ययं चादिष्वाकृतिगणत्वेन द्रष्टव्यम्। छान्दसोऽयम्। 'नीचात् उचा चक्रथुः पातये वा—' (ऋक् 1-116-22)।

(482)

"नीचैः" (स्व.)

अल्पार्थकोऽयम्। निकृष्टानुच्चस्वैरादयोऽपि अस्यार्थाः। अल्पे यथा 'नीचैर्ददाति'। स्वल्पं ददातीत्यर्थः। निकृष्टे यथा—

1. 'दाम्नीशसयुयुजस्तु—हसिसिचमिहपतदश' (3-2-182) इत्यादिना पतधातोः करणे ष्ट्रन्प्रत्यये पत्त्रशब्दो निष्पन्नः। धातुरुकारः प्रत्ययस्य [illegible] द्वौ तकारौ पत्त्रशब्दे स्तः। 'पत्रम्' इत्येकतकारनिर्देशस्त्वप्रामाणिक एव।

'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' (मेघदूते 2-52)। अनुच्चे— 'नीचैरनुदात्तः' (1-2-30)। स्वैरे—[1]नीचैःकारम्। नीचैः कृत्वा। अधोभागोऽपि प्रकरणादिनाऽस्यार्थः। [2]नीचकैः।

(483)

"नु" (चा.)

प्रश्नप्रतिवचनोपमानवितर्कोत्प्रेक्षाविषादपादपूरणादिषु वर्ततेऽयम्।

प्रश्ने—को नु वाचमीरयत्यन्तरिक्षे!। 'किं नु मे जृम्भते कलिः'। 'को न्वस्मिन् साम्प्रतं लोके' (रामायणम्)।

प्रतिवचने—'आकार्षीः कटं देवदत्त! अयं [3]नु करोमि भोः'। 'अयं नु अकार्षम्'।

उपमाने—'वृक्षस्य नु ते पुरुहूत वयाः' (ऋक्. 6-24-3)।

वितर्के—'क्षालितं नु शमितं नु वधूनां द्रावितं नु हृदयं मधुवारैः'॥ (माघ. 10-14)।

उत्प्रेक्षायाम्—'रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु।' (किरात. 9-15)।

---

1. 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (3-4-59) इति कृञो णमुल्। अयथाभिप्रेताख्यानं नाम अप्रियस्यार्थः, प्रियस्य च नीचैराख्यानम्। एतदेव स्वैराख्यानमिह बोध्यम्।
2. नीचैरित्येवार्थः। 'अव्ययसर्वनाम्नाम्—' (5-3-71) इति टेः प्राक् अकच्प्रत्ययः।
3. अत्र 'नन्वोर्विभाषा' (3-2-121) इति पृष्टप्रतिवचनार्थे लट् भूतकाले विकल्पेन। पक्षे लङ्।

विषादे—'क नु मां त्वदधीनजीविताम्—' (कुमार. 4-6) ।

पादपूरणे—'आख्यास्यामि नु ते तत्त्वम्' ।

सम्प्रति, अद्य, इत्यर्थे छन्दसि दृश्यते । यथा—'सं नु वोचावहै पुनर्यतो मे मधु आ भृतम् ।' (ऋक् 1-25-17) ।

क्वचिद् विस्मयेऽपि । यथा- 'क नु खलु विदितस्ते कोऽप्यसौ मातुवादः ।' (पादुकासहस्रे श्लो. ५०) । एवमनुनयेऽपि 'त्वं नु मे प्रियतमा हि बधूनाम्' इत्यादौ ।

अतीत—अपमान—हेतु—आदेशा अप्यस्यार्थत्वेन कोशेषु निर्दिष्टाः निदर्शितदिशा यथासम्भवं स्वयमेवोह्या इत्यलम् ।

(484)

"नुकम्" (चा.)

नु, कम् इति निपातद्वयसमुदायोऽयं वितर्के वर्तते । 'अहिर्नुकम्, रज्जुर्नुकम्' । एवम्, 'नु+वै' इति निपातसमुदायोऽपि वितर्कार्थक एव द्रष्टव्यः । 'को नुव गच्छति' । 'विष्णोर्नुकं वीर्याणि—' (ऋक्. 1-154-1) इत्यत्र अतिशीघ्रमित्यर्थः ।

(485)

"नूनम्" (चा.)

तर्कनिश्चयोत्प्रेक्षादयोऽस्यार्थाः । [1]तर्के—'नूनं शरत्प्रफुल्ला हि

---

1. 'वितर्के' इति क्षीरस्वाम्यादयः पठन्ति । वितर्कः = सम्भावना-प्रत्ययः । 'नूनं हन्तास्मि रावणम्' इत्यत्र यथा ।

काशाः'। निश्चये—नूनमयं जानाति। उत्प्रेक्षायाम्—'नूनमस्य दैवोऽनुग्रहः' (भाष्ये 6-3-109)।

स्मरणवाक्यपूरणयोरपि दृश्यते। स्मरणे—'नूनं सा तव प्रिया'। वाक्यपूरणे—'स एव नूनं जडवद्ब्रवीति'।

'अद्य' इत्यर्थकोऽपि ऋक्षु प्रयुज्यते। यथा—'नमः पुरा ते वरुणोत नूनम्' (ऋक्. 2-8-28)।

(486)

## "नेत्" (चा.)

शङ्काप्रतिषेधविचारसमुच्चयेष्वस्य वृत्तिः। शङ्कायाम्—'नेज्जिह्मायन्तो नरकं पतेम'। (ऋक्. 10-106-1) पापाचारा वयं कदाचित् निरयं गच्छेम। इति शङ्काऽत्र। 'अन्यो नेत् सूरिरोहते भु' (ऋक्. 8-5-9) इत्यत्र प्रतिषेधोऽर्थः। 'नेत् त्वदपचेतयातै' (यजुः 2-17) इत्यत्रापि तथा। इतरेष्वर्थेषु प्रयोगो मृग्यः! छान्दसोऽयम्। यत्तु 'नेत् विकल्पे निषेधे च—' इति वाङ्मयार्णवादिषु विकल्पार्थकत्वमस्योक्तम्—तत्तु शङ्कार्थकस्यास्यैव सन्दर्भानुसारेण विकल्पार्थकत्वाभिमानेनेति नार्थान्तरत्वम्।

(487)

## "नेत्याह" (स्व.)

'....नेत्याह निषेधे....' इति त्रिकाण्डशेषः। वस्तुतः न इति आह इति निपातसमुदायोऽयं निषेधार्थक इति ज्ञेयम्।

(488)

"नो" (चा.)

निषेधोऽस्यार्थः। 'ददपि गिरमन्तर्बुध्यते नो मनुष्यः' (माघे 11-4)। 'व्याख्याता वेत्ति नो कविः' इत्यादिष्वपि निषेध एवान्ततो बोध्यते। 'नोचेत्' 'नोहि' इत्यादयोऽपि निषेधार्थकाः निपातसमुदाया बोध्याः।

(489)

"नोत्" (चा.)

'नैव' इत्यर्थश्छान्दसोऽयम्। 'प्रजा अनाशकेन नोत्परा बभूवुः' (शतपथे 2-4-3-2)। 'अतिमात्रमवर्धन्त नोदु इव दिवस्पृशन्' (अथर्व. 5-19-1)।

(490)

"नोधा" (त.)

'नवधा' इत्यर्थे पृषोदरादित्वात् रूपमेवम्। 'नोधा विधाय रूपं स्वं सर्वसंकल्पवित् प्रभुः' (भागवते 3-23-45)।

(491)

"न्यक्" (चा.)

तिरस्कारार्थकश्चादिष्वयं द्रष्टव्यः। निम्नतया अञ्चतीत्यर्थे निपूर्वकादञ्चतेः क्विनि उपधानकारलोपे तस्य च चादिपाठादव्ययत्वम्। न च

अल्पपत्वे फलाभाव इति वाच्यम् । न्यक्कृतिन्यक्कारादिशब्दानां साधुत्वे सिद्धेऽपि 'न्यक्कृत्य द्योतमाना—' इत्यादिषु समासे ल्यपि रूपसाधुत्वार्थमव्ययत्वस्य सफलत्वात् । अन्यथाऽत्र ल्यपोऽनुपपत्तेरित्यास्तां तावत् ।

(492)

"न्वै" (चा.)

वितर्कपादपूरणे अस्यार्थत्वेन पठिते । वितर्के—'को न्वै राजा ? को न्वै मन्त्री ?' । पादपूरणे—'को न्वा एषोऽपगच्छति ?' ।

(493)

"पट्" (चा.)

सादृश्यासम्पत्तिसाकल्यग्रन्थाविक्रियवचनेषु अस्य केषाञ्चिन्मतेन चादिपाठः । उदाहरणानि मृग्यानि । प्रशंसाऽऽमन्त्रणाव्यस्यार्थौ—इति केचित् ।

(494)

"पटत्" (ग.)

अव्यक्तानुकरणार्थेऽय वर्तते । ततो डाचि, टिलोपे, 'डाचि बहुलं—' (वा· 8-1-12) इति द्वित्वे, 'पटपटाकरोति' इति सिद्ध्यति ।

(495)

"परम्" (चा.)

नियोग-क्षेप-केवल-किन्त्वर्थेषु दृश्यते । केवले—'सर्वे गताः, स परं न गच्छति' । किन्त्वर्थे—'गुणवानसि, परम् अहङ्कारी' । नियोगक्षेप-

योरप्येवमूह्यम्। अधिकानन्तर्ययोरपि प्रयुज्यते। अधिके—'रेखामात्र-मपि क्षुण्णाद् आत्मनो वर्त्मनः **परम्**।' (रघु. 1-17)। आनन्तर्ये—'नूनं मत्तः **परं** वंश्याः पिण्डविच्छेददर्शिनः।' (रघुः 1-66)।

(496)

"**परमम्**" (चा.)

अनुज्ञास्वीकारावस्थार्थौ। '**परमं** ते आवसम' इत्यत्र अनुज्ञा '**परमं** तत्रावासो मम' इत्यत्र स्वीकारोऽर्थः।

(497)

"**परस्तात्**" (त.)

परशब्दात् सप्तमीपञ्चमीप्रथमान्तात् अतसुच्प्रत्ययाभावपक्षेऽस्ताति-प्रत्ययः। पक्षे 'विभाषा परावराभ्याम्' (5-3-29) इत्यतसुच्प्रत्ययः। असर्वविभक्तितद्धितान्तत्वात् अव्ययत्वम्। सप्तम्याम्-**परस्तात्** वसति। पञ्चम्याम्—**परस्तादा**गतः। प्रथमायाम्—**परस्तात्** रमणीयम्। पक्षे **परतः** इत्यपि भाव्यम्। 'परि पूषा **परस्तात्**—' (ऋक्. 6-54-10) इत्यत्र तु 'उपरि' इत्यर्थः।

(498)

"**परः**" (नि.)

'इतरभागे' इत्यर्थे छान्दसमेतदव्ययम्। यथा—'न हि देवो न मर्त्यो महस्तव क्रतुं **परः**।' (ऋक्. 1-19-2)।

(499)

“ परश्वः ” (स्व.)

श्वः परं दिनमित्यर्थे निपातनात् साधुः । ‘आगामिपरदिनात् परस्मिन् दिवसे’ इति पर्यवसितोऽर्थः । अत्र केचित् ‘परः श्वः’ इति सविसर्ग पठित्वा पारस्करादित्वात् (6-1-157) सुटमिच्छन्ति । उभयथाऽप्यर्थे न भेदः ।

(500)

“ परा ” (उ. ग.)

“ परा भृशेऽनाभिमुख्ये त्वराऽभिभवविक्रमे ।

प्रशान्तावप्रसहने धर्षणे विद्रवे ऋषौ ॥

पौनःपुन्ये—” इति क्षीरस्वामी ।

भृशे—पराहन्ति, पराजितः । अनाभिमुख्ये—पराङ्मुखः, परावृत्तः । त्वरायाम्—परापतति, परागतः । अभिभवे—पराभवः, पराक्रिया । विक्रमे—पराक्रमः । प्रशान्तौ—परेतः । अप्रसहने—अध्ययनात् पराजयते । सोढुं न शक्नोतीत्यर्थः । धर्षणे—प्रसभं परामृष्टा स्त्री । विद्रवे—[1]पलायनम् । ऋषौ—[2]पराशरः । पौनःपुन्ये—वर्त्म परामृशति ।

---

1. अत्र ‘उपसर्गस्यायतौ’ (8-2-19) इति लत्वम् ।

2. अत्र ‘यद्यपि ‘परान् आ शृणोतीति पराशरः’ इत्येवं पौराणिकैर्वेदान्तिभिश्च व्युत्पत्तिः प्रदर्श्यते । युक्तं चैतत्, पराङ्मुखपराजयपराभवादिषु तथैव व्युत्पत्तेर्दृष्टत्वात् । तथापि उपायस्योपायान्तरादूषकत्वात् निमित्तावधिसद्भावात् तथापि साधु इति द्रष्टव्यम् ।

परा गच्छतीत्यर्थे परागः—धूलिः। अत्र उपसर्गप्रतिरूपकत्वात् निपातत्वेन समासोपपत्तिरिति तिलकः।

(501)

" पराचैः " (स्व.)

'दूरदेशे' इत्यर्थे छान्दसोऽयम्। 'आरे त्वावेषां निर्ऋतिं पराचैः' (ऋक् 6-74-2)।

(502)

" परारि " (स्व.)

'पूर्वपूर्वतरयोः परभावः, उदारी च संवत्सरे' (वा. 5-3-22) इति वचनात् 'पूर्वतरस्मिन् संवत्सरे' इत्यस्मिन्नर्थे पूर्वतरशब्दस्य परभावः, आरि-प्रत्ययश्च विधीयते। सप्तम्यन्तात् केवलात् विधीयमानत्वेनास्य 'तद्धितश्च—' (1-1-38) इत्यव्ययत्वम्। 'परुत् पराभूतसरोजकोशौ परारि सन्दर्शित-सन्निवेशौ। तवैषमस्तालफलोपमानौ स्तनौ कियन्तौ परतो भवेताम्॥' इति चाटूक्तिः।

(503)

" परि " (उ. ग.)

" पर्युद्धाहे सपन्तत्वे विर्त्तौ वर्जने शुचि।
निन्दाव्यवस्थान्यक्कारनर्मालिङ्गननिर्गमे॥
क्रमभूषानिवसने क्रियानिश्चयवेष्टने।
सेवासन्न्यासापवर्तशक्तिसाकल्यलाघवे॥

परिज्ञाने विनिमये विस्तारव्याप्त्यतिक्रमे " (**क्षीरस्वामी**)।

उद्वाहे—[1]**परिणयः**। समन्तत्वे—**परिपूर्णः परित्राणम्**, **परिधिः**। विवर्ते—**परिणामः**। वर्जने—**परिहारः**। शुचि—**परिदेवनम्**। निन्दायाम्—**परिवादः**, **परिचष्टे**। व्यवस्थायाम्—**परिभाषा**। न्यक्कारे—**परिभवः**, [2]**परिभावः**। नर्मणि—**परिहासः**। आलिङ्गने—**परीरम्भः**, **परिष्वङ्गः**। निर्गमे—**परिवाहः—परीवाहः**। क्रमे—**परिपाटी**, **पर्यायः**। भूषायाम्—[3]**परिष्करोति** कन्याम्। निवासे—**परिधानम्**। [4]क्षिपायाम्—**परिवेत्ता**। निश्चये—**परिच्छेदम्**। वेष्टने—**परिधत्ते**, **परिधानम्**। 'कृष्णं वासो [5]**परिधापयित्वा**' (ऋक्.) सेवायाम्—**परिचरति**, **परिचर्या**। संन्यासे—**परिव्राट्**। अपवर्ते—**विपर्यासः**। शक्तौ—**पर्याप्तम्**, **परिकल्पने**। माङ्गल्ये—**परिचयः**। लाघवे—**परिप्लवः**, [6]**परिप्लुय**। परिज्ञाने—**परीक्षा**। विनिमये—**परिवर्तनः**। विस्तारे—**परिणाहः**। व्याप्तौ—**परिवेषः**। अतिक्रमे—अहः **परिवृत्तम्**।

साधनार्थेऽपि दृश्यते; यथा—**परिकरः** इति।

---

1. 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति णत्वम्।
2. 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घः।
3. 'संपरिभ्यां करोतौ भूषणे' (6-1-137) इति सुट्। 'परिनिविभ्यः' (8-3-70) इति षत्वम्।
4. क्षिपा = निन्दा। परिवेदनम् अत्र निन्दा। ज्येष्ठेऽनूढे सति य ऊढः स धर्मशास्त्रेषु 'परिवेत्ता' इत्युच्यते। तस्य प्रायश्चित्तभाक्त्वेन निन्द्यत्वमिति ज्ञेयम्।
5. 'क्त्वाऽपि च्छन्दसि' (7-1-38) इति ल्यपोऽपवादः क्त्वाऽत्र।
6. 'युप्लुवोर्दीर्घश्छन्दसि' (6-4-58) इति दीर्घोऽत्र।

लक्षणादौ कर्मप्रवचनीयसंज्ञकः। यथा-लक्षणे—वृक्षं[1]**परि** विद्योतते विद्युत्। इत्थम्भूताख्याने—भक्तो विष्णुं **परि**। भागे—लक्ष्मीर्हरिं **परि**। वीप्सायाम्—वृक्षं वृक्षं **परि** [2]सिञ्चति। 'सद्वृत्तान् अनु दुर्वृत्तः **परि** स्त्रीं जातमन्मथः॥' (भ. का. 8-88)। वर्जने—**परि** हरेः संसारः। आनर्थक्ये—अत्रिच्युतं **परि**। कुतः **पर्या**गच्छति।

[3]परितः, [4]पर्यङ्कः—पल्यङ्कः, परिघः—पलिघः। [5]अक्षपरि—शलाकापरि, एकपरि—द्विपरि। परित्रिगर्तं, [6]परि परि त्रिगर्तेभ्यो वा वृष्टो देवः। [7]परिपन्थी—परिपरी।

---

1. अत्र 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' (1-4-90) इति परेः कर्मप्रवचनीयता। 'कर्मप्रवचनीययुक्ते द्वितीया' (2-3-8) इति वृक्षशब्दस्य द्वितीया।
2. 'परि सिञ्चति' इत्यत्र कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधितत्वात् न षत्वमिति ज्ञेयम्।
3. समन्तादित्यर्थः। 'परितः कृष्णं गोपाः' इत्यत्र 'अभितःपरितः' (वा. 2-3-2) इति वचनेन द्वितीया।
4. अत्र परीति रेफस्य 'परेश्च घाङ्कयोः' (8-2-22) इति लत्वविकल्पः। सूत्रे 'घः' इति स्वरूपग्रहणम्, न तु 'तरप्तमपौ घः' (1-1-22) इति संकेतितस्य; तेन 'परितरः परितमः' इत्यत्र न लत्वम्।
5. 'अक्षशलाकासंख्याः परिणा' (2-1-10) इति अव्ययीभावसमासः। [illegible]परि च बोध्यम्।
6. 'पञ्चम्यपाङ्परिभिः' (2-3-10) इति समासो वर्जनार्थकस्य परिशब्दस्य। महाविभाषया समासाभावपक्षे तु वाक्यमपि। तदानीम् 'परेर्वर्जने' (8-1-5) इति द्वित्वम्।
7. 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (5-2-89) इति निपात्यते। बाहुलकात् लोकेऽपि प्रयुज्येते। उभावपि प्रतिद्वन्द्विवाचिनौ।

(504)

"परुत्" (त.)

'पूर्वस्मिन् वत्सरे' इत्यर्थे 'सद्यः परुत्—' (5-3-22) इत्यनेन निपातनात् साधुः। पूर्वशब्दस्य परभावः, उत्प्रत्ययश्च निपात्यते। 'परुत् पराभूतसरोजकोशौ—' (चाटूक्तिः)। परुत्नः। अत्र 'चिरपरुत्—' (वा॰ 4-3-23) इति शैषिकः त्नप्रत्ययः।

(505)

"परेद्यवि" (त.)

'परस्मिन् अहनि' इत्यर्थे 'सद्यः परुत् परार्यैषमः परेद्यवि—' (5-3-22) इति निपातनात् साधुः; तदुक्तम्—'परस्मादेद्यव्यहनि' (वा॰ 5-3-22) इति।

परेद्युः इत्यप्येतत्समानार्थकं मुग्धबोधव्याकरणाद्यनुशिष्टं लोके कविभिर्बहुलं प्रयुज्यते। पाणिनिमतेन नास्य निष्पत्तिरिति ज्ञेयम्। केचित्तु 'परेद्यवि' इति प्रयोक्तव्ये प्रमादेन परेद्युरिति प्रयुञ्जत इति वदन्ति।

(506)

"परोक्षम्" (शरत्.)

"अक्ष्णोः परं परोक्षम्। परसमानार्थकः परश्शब्दोऽव्ययम्' अव्ययेऽव्ययीभावः। कथं 'प्रत्यक्षोऽर्थः, परोक्षः कालः' इत्यादेरव्ययीभावस्य सत्त्ववचनता? अर्शआदित्वादतो भविष्यतीत्याह भोजः" इति शरदादिषु वर्धमानः।

इदमत्रावधेयम्—परशब्दसमानार्थकः परश्शब्दो वर्तत इत्यत्र न प्रमाणमस्ति। केचित्तु 'परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम्। उत्वं वाऽऽदेः परादक्ष्णः; सिद्धं वाऽस्मान्निपातनात्॥' (भाष्यम् 3-5-113) इति वचनादत्र परशब्दस्यैव परोभावः, परशब्दात् परस्य अक्ष्णोऽकारस्य उत्वं वा भवतीत्येव न्याय्यम्। किञ्च, नेदमव्ययमित्यपि बहवः। अन्यथा 'परोक्षे लिट्' (3-2-115) इति सौत्रस्य प्रयोगस्य 'साधनेषु परोक्षेषु' (भाष्यम् 3-2-115) इत्यादीनां भाष्यादिप्रयोगाणां च गतिश्चिन्त्या स्यात्। अत एव शब्दकल्पद्रुमादिषु क्लीबान्तत्वेनैव निष्पादितमिदम् इति वदन्ति। वस्तुतस्तु 'अव्ययीभावः' (लिङ्गानुशासनसूत्रम् नपुंसकप्रकरणे) इति वचनेनाव्ययीभावस्य क्लीबत्वेऽपि न दोष इत्यास्तां तावत्।

अस्यार्थस्तु भाष्य एव स्पष्टमुद्दिष्टः। यथा—"कथंजातीयकं पुनः परोक्षं नाम? केचित् तावदाहुः—'वर्षशतवृत्तं परोक्षम्' इति। अपर आहुः—'वर्षसहस्रवृत्तं परोक्षम्' इति। अपर आहुः—'कटान्तरितं परोक्षम्' इति। अपर आहुः—'द्व्यहवृत्तं त्र्यहवृत्तं च' इति"॥ इति।

(507)

"परोवरम्" (स्व.)

इदमव्ययं स्वरादेराकृतिगणत्वेन केचिदाहुः। उच्चनीचताऽस्यार्थः। क्रमोऽर्थ इति तिलकः। 'परोवरपरम्परपुत्रपौत्रमनुभवति' (5-2-10) इत्यत्र परांश्चावरांश्चानुभवतीत्यर्थे खप्रत्ययविधिरस्ति—परोवरीणः इति सिद्ध्यर्थम्। तत्र खप्रत्ययसन्नियोगेनैव परशब्दस्योत्वमित्यङ्गीकारात् वस्तुतः पृथगव्ययत्वमस्य चिन्त्यम्। 'परोवरीयः' इत्यत्र तु छान्दसत्वादुत्वमिति ज्ञेयम्।

(508)

"पर्याप्तम्" (चा.)

सामर्थ्यवारणयोरिदं **वर्धमानादिभिः** पठ्यते। सामर्थ्ये— '**त्वयैव** किं न **पर्याप्तम्**?'। वारणे—'**पर्याप्तं** साहसेन—'।

परिपूर्वकात् आप्नोतेः निष्ठायामेव यद्यपि सिद्ध्यति; तथापि **अव्यय**-स्वराद्यर्थं चादिषु पाठ इति ज्ञेयम्।

(509)

"पली" (ऊ.)

विकारार्थकोऽयमूर्यादिः। 'हिंसायाम्' इति **वामनः**। 'विचारे' इत्यपि **केचित्**। 'फली' इति **वर्धमानः**। **पलीकृत्य**। **विकृत्येति** यावत्।

(510)

"पशु" (चा.)

सम्यगर्थेऽयं छन्दसि वर्तते। 'लोधं नयन्ति **पशु** मन्यमानाः' (ऋक् 3-53-23)। दर्शनीयं ज्ञानं सम्यक् प्रतिपद्यमाना लोभं परित्यजन्ति, इत्यर्थः। असत्त्ववाचित्वादेवास्याव्ययत्वम्। सत्त्ववाचित्वे तु नाव्ययत्वम्, यथा **पशुः**—गवादिः।

(511)

"पशू" (ऊ.)

हिंसार्थकोऽयम्। **पशूकृत्य**—हत्वेत्यर्थः। ऊर्यादित्वात् कृञो योगे गतिसंज्ञायां समासे ल्यप्।

(512)

"पश्च" (त.)

छन्दसि अपरशब्दस्यास्तातेरर्थे [दिग्देशकालेषु] 'पश्च पश्चा च छन्दसि' (5-8-33) इत्यनेन पश्चभावोऽकारप्रत्ययश्च निपातनाद्भवति। 'परो व्यात्तो जायते पश्च सिंहः'। पश्चिमदेशः, पृष्ठभागः, पश्चात्कालश्चास्यार्थाः।

'पश्चार्धः' इत्यादिषु 'अपरस्यार्धे पश्चभावो वाच्यः' (वा. 2-1-58) इति वचनेन यः पश्चभावो विहितः समासे, तस्य तु नाव्ययत्वम्—इति बोध्यम्।

(513)

"पश्चा" (त.)

पूर्ववच्छन्दस्येव दिग्देशकालेषु वर्तमानस्य सप्तमी-पञ्चमी-प्रथमान्तस्यापरशब्दस्य 'पश्च पश्चा च छन्दसि' (5-3-33) इति पश्चभावे आकारप्रत्यये च निष्पन्नमिदं तद्धितान्ताव्ययम्। वेदेष्वेवायमपि। यथा—'पश्चा स दघ्या यो अघस्य धाता—' (ऋक् 1-123-5)।

(514)

"पश्चातात्" (त.)

पश्चादित्यर्थे पृषोदरादित्वात् छन्दसि साधुरेवम्। 'त्वं न इन्द ऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात्॥' (ऋक् 8-48-15)।

(515)

"पश्चात्" (त.)

प्रतीचीचरमयोरर्थयोरयं वर्तते। प्रतीच्याम्—पश्चादस्ताद्रिः। चरमे—पश्चाद् याति। 'पश्चात्' (5-3-32) इत्यनेन अपरशब्दस्य प्रथमा-

पञ्चमीसप्तमीषु वर्तमानस्य पश्चभावः, आतिप्रत्ययश्च निपात्यते। असर्वविभक्ति-तद्धितान्तत्वेन अव्ययत्वम्। पश्चाद्रमणीयम्, पश्चादागतः, पश्चाद् वसति। [1]दक्षिणपश्चात्–उत्तरपश्चात्। [2]पश्चातात्। [3]पश्चिमः। [4]पाश्चात्यः।

(516)

"पश्य" (ति.प्र.)

प्रशंसा विस्मयश्चास्यार्थौ। प्रशंसायाम्—'पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः'। विस्मये—'पश्य बालोऽपि विद्वान्'। 'दृशिर् प्रेक्षणे' (भ्वादिः पर॰ अनिट्) इति धातोर्लोण्मध्यमपुरुषैकवचनप्रतिरूपकमिदम्।

(517)

"पश्यत" (ति. प्र.)

आश्चर्यार्थकोऽयम्। 'पश्यत शिशुरपि विद्वान्'। वर्धमानस्तु पूजार्थकत्वमप्यभ्युपगत्य 'पश्यत माणवको भुङ्क्ते' इत्युदाजहार। इदमपि दृशिर्धातोर्लोण्मध्यमपुरुषबहुवचनप्रतिरूपकम्।

---

1. 'दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः' (वा. 5-3-32) इति निष्पन्ने एते। इमे अव्यये।
2. बाहुलकात् स्वार्थे तातिल्प्रत्यये, तस्य चाव्ययत्वे रूपमेवं छन्दसि भवति। 'आ पश्चातात् नासत्या पुरस्तात्—' (ऋक्. 7-72-5)।
3. 'अग्रपश्चाड्डिमच्' (वा. 4-3-23) इति शैषिको डिमच्प्रत्ययः। डित्त्वाट्टिलोपः। एतच्च रूपं कालवाचिनो पश्चाच्छब्दस्यैव; प्रकरणात्। अथापि देशविवक्षायामपि 'पश्चिमो देशः' इत्यादीनि बहुशः प्रयुज्यन्ते; तत्र प्रमाणं मृग्यम्। यद्वा, प्रकृतवार्तिके 'कालात्' इत्यस्य अविवक्षया अविशेषेण देशकालवाचिनोरुभयोरपि डिमच्—इत्यभ्युपगमे न दोषः।
4. 'दक्षिणापश्चात्—' (4-2-98) इति शैषिके त्यक्प्रत्यये, कित्त्वेनादिवृद्धौ च रूपमेवम्।

(518)

"पाट्" (चा.)

प्रशंसाऽऽमन्त्रणयोरयम् । प्रशंसायाम् — पाट् श्रव्यं पठति । आमन्त्रणे—'पाट् पाठकाः ! ' । "हिंसासातत्ययोरपि इति शाकटायनः" इति वर्धमानः । चिरत्न-अतीतकाल-सामीप्य-अनागतेष्वप्यर्थेषु केचिदमुं पठन्ति । उदाहरणानि मृग्याणि ।

(519)

"पाणौ" (ग.)

विवाहेऽभिधेये कृञि परतः सप्तमीप्रतिरूपकमिदं शब्दस्वरूपं गति-संज्ञकं भवति । गतिसंज्ञकत्वात् समासे ल्यपि पाणौकृत्य इति सम्पद्यते । 'नित्यं हस्तेपाणावुपयमने' (१-४-७७)इत्यत्र = पाणौकृत्य = दारकर्मकृत्वा इत्यर्थः इति काशिका । 'पाणौकरणम्' इति विवाहार्थे जटाधरः पठित्वा,तत्र अलुक्स-मासतां मेने, इति वाचस्पत्ये । 'पाणौकृत्याहवाग्रे प्रतिभटविजयोपार्जितां वीर-लक्ष्मीमानीतायास्ततोऽस्याः स्वसविधमसुरद्वेषिणा पूरुषेण।'(सुदर्शनशतके 56)।

(520)

"पादगृह्य" (वै.)

' पाद गृहीत्वा ' इत्यर्थे गृह्णातेश्छान्दसत्वात् सुबन्तेन समासे ल्यप् । ' ....यत् प्राक्षिणाः पितरं पादगृह्य" (ऋक् 4-18-12) ।

(521)

" पापया (वै.)

' दुर्मार्गेण ' इत्यर्थेऽयमपि छान्दसो ज्ञेयः । ' अश्रीरा तनूर्भवति रुशती पापयाऽमुया ।' (ऋक् 10-85.30)।

(522)

"**पापसमम्**" (ति.)

पापाः समाः यस्मिन् युगे काले वा तत् **पापसमम्**। तिष्ठद्गुगणे पाठादव्ययीभावत्वेऽव्ययत्वम्।

(523)

"**पाम्पाली**" (ऊ.)

हिंसार्थकोऽयमूर्यादिः कृञो योगे गतित्वभाक्। **पाम्पालीकृत्य** = हिंसित्वेत्यर्थः।

(524)

"**पाम्पी**" (ऊ.)

विस्तारविध्वंसमाधुर्यकरुणाविलेपार्थेषु ऊर्यादिषु पठ्यते। **पाम्पी-कृत्य**।

(525)

"**पारे**" (वि. प्र.)

विभक्तिप्रतिरूपमव्ययमिदमिति केचित्। तीरवाचकस्य पारशब्दस्य सप्तम्यन्तमेतदिति बहवः। पारेगङ्गम्। गङ्गायाः पारं इत्यर्थः। 'पारे मध्ये षष्ठ्या वा' (2-1-18) इति षष्ठ्यन्तेन सहाव्ययीभावसमासः। अव्ययी-भावत्वेन समुदायस्याप्यव्ययत्वम्।

(526)

"**पार्दाली**" (ऊ.)

हिंसाप्राकाश्ययोरयम्। '**बार्दाली**' इति ऊर्यादिगणे पठितस्य पाठान्तरमिदम्। '**यार्दाली**' इति **शब्दकौस्तुभे** दृष्टः पाठः। **पार्दाली-कृत्य** = हिंसित्वा, प्रकाश्य इति च अर्थः।

(527)

"पार्श्वतः" (आ.)

पार्श्वेन इति तृतीयार्थे आद्यादित्वात् सार्वविभक्तिकस्तसिप्रत्ययः ; 'पार्श्वतोऽर्कं निषेवेत—'।

(528)

"पीत्वी" (कृ.)

पिबतेः क्त्वायाम्, 'घुमास्थागापा-' (6-4-46) इति प्रकृतेरीकारे, 'स्नात्व्यादयश्च' (7-1-49) इत्यत्र निपातनात् प्रत्ययाकारस्यापि ईकारः। 'क्त्वातोसुन्कसुनः' (1-1-40) इत्यव्ययत्वम्। छन्दस्येवैवं साधुः। लोके तु पीत्वा इत्येव। ''पीत्वी सोमस्य वावृधे' (ऋक्. 3-40-70)।

(529)

"पीत्वीनम्" (कृ.)

पिबतेः क्त्वायामीकारे, 'नम्' इत्यागमे च रूपमेवम्। 'पीत्वीनमिति च इष्यते, चकारस्यानुक्तसमुच्चयार्थत्वात् सिद्धम्।' इति 'इष्ट्वीनमिति च' (7-1-48) इत्यत्र काशिका। कृदन्ताव्ययमिदं छान्दसम्।

(530)

"पुण्यसमम्" (ति.)

पुण्यत्वं समायाः, पुण्या समा इति वा पुण्यसमम्। समा—वत्सः। तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावसमासः। पुण्येन समं इति तृतीयासमासापवाद इति केचित्।

(531)

"पुत्" (चा.)

कुत्सार्थकोऽयम्। पुत्—कुत्सितं कसतीति पुत्कसः। पुद्गलः। 'पुक्' इति शाकटायनः। नरकवाचकस्तु पुत्शब्दः नपुंसकलिङ्गः।

(532)

## " पुनर् " (स्व.)

भूयोऽर्थ-विशेषावस्यार्थौ। भूयोऽर्थे—**पुनरुक्तं** वचः। विशेषे—'किं **पुनर्**ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा (गीता 9-33)'। द्वितीयवार-अप्रथम-भेद-अधिकार-पक्षान्तरादयोऽप्यस्यार्थाः **मेदिन्यादिषु** प्रतिपादिताः। तत्र भेदः विशेष एव। इतरेष्वर्थेषु यथासम्भवमुदाहार्यम्।

**पुनःपुनः** इति वीप्सार्थकम्। [1]**पौनःपुन्यम्**। [2]**पौनःपुनिकः**। **पुनरपि, पुनश्च, किंपुनः** इत्यादयो निपातसमुदाया अर्थान्तरेऽपि। 'पुनरुत्स्यूतं वासो देयम्' (तै. ब्रा.) इत्यत्र स्वरार्थः 'पुनश्चनसौ छन्दसि' (पा. 1-4-59) इति गतित्वमप्यस्य।

---

1. 'पुनः पुनः' इत्यस्य भावः पौनःपुन्यम्। ब्राह्मणादित्वात् (5-1-124) ष्यञ्। 'अव्ययानां भमात्रे—' (वा. 6-4-144) इति टिलोपः। आदिवृद्धिः। भवेदमथवैवम्। 'पुनः' इति देशे विवक्षितेऽपि प्रयुज्यते—'पुनरत्र विराजते' इति। कालोऽपि क्वचिद् विवक्ष्यते—'रामाय प्रियमाख्यातुं पुनरायान्महाकपिः' (रामा. 1-1-76) इति। ब्राह्मणादिषु (5-1-124) देशार्थे कालार्थे च प्रयुज्यमानस्य पुनःपुनःशब्दस्य वीप्सार्थकस्य पाठः। तेन 'पौनःपुन्यम्' इत्यत्र पुनः पुनः देशे, काले वा इति यथासम्भवमर्थः। 'पौनःपुन्यम्' इति अव्ययत्वेन निर्दिष्टं शब्दकल्पद्रुमे। तदसत्। ष्यञः प्रकृतेः पुनरित्यस्यैव अव्ययत्वेन, ष्यञन्तस्य क्लीबत्वात्।
2. पौनःपुनिक इति कालवाचिनः पुनःपुन इत्यस्मात् 'कालाट्ठञ्' (4-3-11) इति शैषिके ठञि टिलोपे आदिवृद्धौ च रूपम्।

(533)

"**पुरतः**" (ख.)

अग्रत इत्यस्यार्थः। 'शुष्को वृक्षस्तिष्ठत्यग्रे नीरसतरुरिह विलसति **पुरतः**'। 'पुर अग्रगमने' (तुदादिः सक. सेट्. पर.) इत्यस्मात् बाहुलकात अतसुक् प्रत्ययः। क्वचित् 'पूर्वमेव' इत्यर्थोऽप्यस्य। यथा 'इयं च तेऽन्या **पुरतो** विडम्बना....' (कुमार. 5-70) इति। अत्र '**पुरतः**' इति प्राक्काले वृत्तिः।

(534)

"**पुरस्तात्**" (त.)

पूर्वकालः, पूर्वदेशश्च अस्यार्थः। पूर्वशब्दात्, 'दिक्शब्देभ्यः—' (5-3-27) इति अस्तातिः। 'अस्ताति च' (5-3-40) इति **पूर्वशब्दस्य** 'पुर्' इत्यादेशः। इदं च सप्तमीपञ्चमीप्रथमाविभक्तिषु भवति। **असर्व-**विभक्तितद्धितान्तत्वेनाव्ययत्वम्। "— '**पुरस्तात्** अग्रप्रथमव्यतीतेषु' इति **गोपालितः**॥" इति **सुधाकारः**। '**पुरस्ताद्** रामोऽभूत् —'। 'नश्यत् **पुरस्तादनुपेक्षणीयम्**' (रघु. 2-44)। **पुरस्तादागतः**। **पुरस्ताद्रमणीयम्**।

(535)

"**पुरः**" (त.)

पूर्वस्मिन् देशे काले वा इत्यर्थे पूर्वशब्दात् दिग्देशकालेषु **असिप्रत्ययः**, प्रकृतेः 'पुर्' इत्यादेशश्च 'पूर्वाधरावराणां'—(5-3-39) इति विधीयते। देशे—'**पुरस्सरा** धामवतां यशोधनाः' (किरात. 1-43)। काले 'तव प्रसादस्य **पुरस्तु** संपदः॥' (शाकुन्तले 7-30)। प्रथमाविभक्त्यर्थे—'**पुरो**

रमणीयम्' । अत्र अग्रभागोऽर्थः । पञ्चम्यर्थे—'पुर आगतः' । सप्तम्यर्थे—'अमुं पुरः पश्यसि देवदारुं—' (रघु. 2-36) । 'पुर आगतः' । पूर्वदिग्भागादागत इत्यर्थः । एवमेव सप्तमीपञ्चमीप्रथमाविभक्तिषु दिग्देशकालवाचिपदसामान्यात् प्रत्ययविधानस्थलेषु यथासम्भवमूह्यम् । दिग्देशशब्दौ न पुनरुक्ताविति बोध्यम् ।

(536)

"पुरा" (स्व.)

प्रबन्धभविष्यदासत्तिचिरातीतेषु वर्ततेऽयम् । प्रबन्धः—अविच्छेदेन कार्यकरणम् । यथा—'उपाध्यायः पुरा पाठयति स्म' । उपाध्यायेनाविरतमपाठि इत्यर्थः । भविष्यदासत्तिः—भविष्यतः कार्यस्य सन्निहितत्वम् । 'गच्छ, पुरा देवो वर्षति' । 'अत्र, यावत्पुरानिपातयोः—' (3-3-4) इति भविष्यत्यर्थे लट् । पुरा दूषयति स्थलीम् (रघु-१२-३०) चिरातीते—पुराऽपि नवम् पुराणम् । अत्र 'पूर्वकालैकसर्वजरत्पुराण—' (2-1-49), 'पुराणप्रोक्तेषु—' (4-3-105) इत्यादिषु निर्देशात्, निपातनाद्वा तुडभावः । अन्यथा 'पुरातनः' इत्यत्रेव 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इति ट्युट्युलोः प्रत्यययोः एकस्य प्रवृत्तौ, सन्नियोगेन तुडागमः स्यात् । 'अबाधकान्यपि निपातनानि' (परिभाषा-120) इति सिद्धान्तस्य क्वचिदङ्गीकारात् पुरातनम् इत्यपि चिरातीतार्थे साधु । इयान् विशेषः—अभिधास्वाभाव्यात् 'पुराणम्' इति इतिवृत्तविशेषे सर्गादिपञ्चलक्षणलक्षिते विद्यास्थाने रूढः, 'पुरातनम्' इति तद्भिन्ने चिरातीतसामान्य इति । चिरे, अतीते च इति विभज्य केचिदाहुः ।

निकटप्राथम्याव्ययस्यार्थौ । निकटे—पुरोपनीतम् अन्तिके, पुरतो वा उपनीतमित्यर्थः । अग्रार्थकत्वमपि प्रयोगानुसारेणास्ति ।

(537)

"**पुरुत्रा**" (त.)

द्वितीयासप्तम्यर्थवृत्तेः पुरुशब्दात् 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (5-4-56) इति त्राप्रत्ययः । 'पुरून् गच्छति' इत्यर्थे '**पुरुत्रा** गच्छति' इति भवति । एवं **पुरुत्रा** वसति, पुरुषु वसतीत्यर्थः । '**पुरुत्रा** वृत्रो अशयद् व्यस्तः' (ऋक् 1-32-7) । अत्र सप्तम्यर्थे वृत्तिः ।

'पुरु' इत्यस्य संख्यार्थकत्वात् 'प्रकारवचने—' (5-3-23) इति थाल्प्रत्यये **पुरुधा** इत्यप्यव्ययं वर्तते । केचित् 'धाल्' इति मत्वा **पुरुधा** इति लिखन्ति ।

(538)

"**पुरुषत्रा**" (त.)

पुरुषेषु, पुरुषान् वा इति सप्तमीतृतीयावृत्तेः पुरुषशब्दात् 'देवमनुष्यपुरुष—' (5-4-56) इति त्राप्रत्ययः । असर्वविभक्तितद्धितान्तत्वात् अव्ययत्वम् । 'मा नो नि कः **पुरुषत्रा** नमस्ते' (ऋक् 3-33-8) । सप्तम्यर्थेऽत्र त्राप्रत्ययः ।

(539)

"**पूतयवम्**" (ति.)

पूताः यवाः यत्र काले स कालः **पूतयवम्**। पूतत्वं नाम वायुकृतः क्षोभः। यत्र काले वायुपवनेन यवाः नष्टाः स काल एवमुच्यते। तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावसमासेऽव्ययत्वम्। पूताः—निस्तुषीकृताः यवा यत्राधिकरणे स देशः खलादिः 'पूतयवम्' इति व्यवह्रियते, इति **वाचस्पत्यादिषु** दृश्यते। तिष्ठद्गुगणे (2-1-17) पठितानां शब्दस्वरूपाणां कालद्योतकत्वमेव वैयाकरणैरङ्गीकृतम्; देशवाचकत्वे तु बहुव्रीहिसमासे **पूतयवः** इत्येव स्यात्। विस्तरस्तु **गणरत्नमहोदधौ**।

'**पूनयवम्**' इति **भोज** इति **वर्धमानः**। तदानीं '**पूञो विनाशे**' (वा. 8-2-44) इति निष्ठानत्वमिति ज्ञेयम्। किन्तु **सरस्वतीकण्ठाभरणे** 'पूनयवम्' इत्येव दृश्यते। उभयथाऽपि नष्टयवविशिष्टकालवाचकत्वमस्य पदस्येति ज्ञेयम्।

(540)

"**पूयमानयवम्**" (ति.)

पूयमानाः यवाः यस्मिन् काले सः **पूयमानयवम्**। **तिष्ठद्गुगणे** पाठादव्ययीभावसमासेऽव्ययत्वम्। निस्तुषीकृतयवविशिष्टकालोऽस्यार्थः।

(541)

"**पूर्यते**" (ति. प्र.)

वारणार्थकोऽयम्। '**पूर्यते** प्राणायामेन प्रणामेन वा'। अलं प्राणायामेनेत्यर्थः। तिङन्तप्रतिरूपकमिदम्।

(542)

"पूर्वथा" (त.)

यथापूर्वमित्यर्थे छान्दसोऽयम्। यथा—'अग्निं मन्थामपूर्वथा' (ऋक्. 3-29-1)। 'प्रत्नपूर्वविश्वेमात् थाल् छन्दसि' (5-3-111) इति इवार्थे थाल्प्रत्ययः। 'आम्थालौ' (काशिका 1-1-37) इति परिगणनादव्ययत्वमेतदन्तस्य।

(543)

"पूर्वेद्युः"(त.)

पूर्वस्मिन् अहनि इत्यर्थे, 'सद्यः परुत् परार्यैषमः परेद्यव्यद्य पूर्वेद्यु—' (5-3-22) इत्यादिना निपातनात् साधुः। तद्धितान्ताव्ययमिदम्। 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्' (वा. 5-3-32) एद्युसुच्प्रत्ययः।

त्रिकाण्डशेषे—'पूर्वत्रेत्यर्थे पूर्वेद्युरित्यपि' इत्युक्तत्वात् पूर्वकालसामान्येऽपि पूर्वेद्युरिति प्रयोगः साधुरिति ज्ञायते। केचित्तु 'पूर्वत्र—पूर्वदेशे' इति त्रिकाण्डशेषस्य विवरणं कुर्वन्ति; तदसत्। 'सद्यः—' (5-3-22) इति प्रकृतसूत्रे 'काले' इत्यनुवृत्तेः कालवाचकेभ्य एव प्रत्ययविधानादिति।

मेदिनीकोशे तु प्रातःकालो धर्मवासरश्चास्यार्थत्वेनोक्तौ। धर्मवासरः=पुण्यदिनम्।

(544)

"**पृथक्**" (स्व.)

भेदवर्जनविनार्थेषु स्वरादिरयम्। भेदे—'बहिर्विकारं प्रकृतेः **पृथक्** विदुः' (माघे 1-33)। वर्जने—तेभ्यः **पृथक्**। विनार्थे—**पृथक्** देवदत्तेन। देवदत्तेन विनेत्यर्थः। अत्र सर्वत्र '**पृथग्विनानानाभिः** तृतीयाऽन्यतरस्याम्' (2-3-32) इति यथासम्भवं पञ्चमीतृतीयाविभक्ती भवत इति बोध्यम्। व्युत्पत्तिपक्षे 'प्रथेः कित् सम्प्रसारणं च' (पञ्चपाद्युणादिः 1-136) इति अजिप्रत्यये सम्प्रसारणे च रूपं सिद्ध्यतीति बोध्यम्। 'प्रनूनं धावतो **पृथक्** नेह यो नो अवावरीत्।' (ऋक् 8-100-7) इत्यत्र। तु '**पृथक्**=स्वातन्त्र्येण' इति व्याख्यातत्वात् छन्दस्येवमपि अर्थ इति ज्ञायते। [1]**पृथकत्** इत्यप्यस्य भवति।

(545)

"**प्याट्**" (चा.)

प्रशंसाऽऽमन्त्रणयोरयम्। '—हिंसासात्ययोरपि' इति **शाकटायनः**। '—चिरन्तनातीतकालसामीप्यानागतेषु' इति **केचित्**।

प्रशंसायाम्—'**प्याट्** पार्वती गायतु मङ्गलानि'।

आमन्त्रणे—'**प्याट्**! पाठकाः!'।

इतरेष्वर्थेषु उदाहरणानि मृग्याणि।

---

1. अस्याऽव्ययस्य टेः प्राक् अकच्प्रत्यये, 'कस्य च दः' (5-3-72) इति अव्ययान्त्यककारस्य दकारे, सर्वं च रूपमेवम्। अज्ञात-कुत्सित—संज्ञाद्यर्थोऽस्याकजर्थो इति ज्ञेयम्।

(546)

" प्र आदिकर्मण्युपरमे दिग्योगैश्वर्यजन्मसु ।
नर्मप्रेम्णोः प्रकर्षेऽग्रे ज्ञाने प्रसवभूषणे ॥
दोषे नियोगेऽवसरे सेवासाहसशुद्धिषु ।
उपयोगे प्रकथनेऽनवज्ञानबहुत्वयोः ॥
माने हिंसाशासनाम्नोर्विश्वनार्थविपर्यये ।"
[संन्यासमृत्योः क्लेऽथ, तथा स्यात् मन्दमुख्ययोः] (उ.ग.)

आदिकर्मणि—प्रक्रमते । [1]प्रकृतः कटः ॥

उपरमे—प्रान्तेन धीयते इति [2]प्रधिः । उपरता भाति स्म—प्रभाता-रात्रिः । प्रगतः पितामहः—प्रपितामहः ।

दिग्योगे—प्राची दिक् ।

ऐश्वर्ये—प्रभुर्देशस्य ।

जन्मनि—हिमवतो गङ्गा [3]प्रभवति ।

नर्मणि—प्रहसति ।

---

1. 'आदिकर्मणि क्तः कर्तरि च' (3-4-71) इति अत्र कर्तरि कर्मणि (भावे) च क्तोऽनुशिष्टः । 'प्रकृतः कटं देवदत्तः' इत्यपि उदाहार्यम् ।
2. धाञः 'उपसर्गे घोः किः' (3-3-92) इति किप्रत्यये, 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः ।
3. 'भुवः प्रभवः' (1-4-31) इति अपादानसंज्ञायाम् 'अपादाने पञ्चमी' (2-3-28) इति पञ्चमी ।

प्रेम्णि—प्रीत्या नयः = [1]प्रणयः। प्रणामः।

प्रकर्षे—प्रकाशते। प्रशंसा। अत्र धात्वर्थमुपसर्गो विशिनष्टि।

अग्रे—अग्रं हस्तस्य प्रहस्तः। प्रपदम्—पदाग्रमित्यर्थः। [2]प्रष्ठः।

ज्ञाने—प्रणिधिः। गुप्तचरः [प्रकर्षेण जानातीत्यर्थे एवमुक्तिः] 'ध्याने' इति क्वचिदत्र पाठः। तदानीम्—प्रस्मरति [=प्रकर्षेण ध्यायतीत्यर्थः] इत्युदाहार्यम्।

प्रसवे—पुरोवातो गाः प्रवाययति। प्रजनः। [प्रसवः=गर्भग्रहणम्]

भूषणे—प्रसाधनम्। प्राग्भारः।

दोषे—प्रलपति।

नियोगे—प्रयोगः। प्रवसति। [3]प्रहिणोति।

अवसरे—प्रस्तावः। प्रकरणम्।

सेवायाम्—नृपं[4] प्रकुरुते। सेवत इत्यर्थः।

साहसे—परदारान् [5]प्रकुरुते। तेषु सहसा प्रवर्तत इत्यर्थः।

---

1. 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति णत्वम्। एवमुत्तरत्रापि।
2. 'प्रष्ठोऽग्रगामिनि' (8-3-92) इति निपातनात् षत्वम्। अग्र-मिन्यर्थकत्वे तु 'प्रस्थः' इत्येव।
3. 'हिनुमीना' (8-4-15) इति णत्वम्।
4. सेवार्थे, 'गन्धनावक्षेपणसेवन—' (1-3-32) इति कृञ आत्मनेपदम्।
5. अत्रापि, 'गन्धनावक्षेपणसाहसिक्य—' (1-3-32) इति कृञ आत्मनेपदम्। साहसिक्यम् = साहसिकं कर्म।

शुद्धौ—मनः प्रसीदति। 'प्रसन्नमुदकं तत्र सन्मनुष्यमनो यथा'।

उपयोगे—शतं [1]प्रकुरुते। शतरूप्यकाणि व्ययीकरोतीत्यर्थः।

प्रकथने—जनवादान् [2]प्रकुरुते। प्रवापः।

अनवधाने—प्रमाद्यति। प्रस्मरति।

बहुत्वे—प्रभूतम्। प्रचुरम्। प्राज्यम्। प्रबलम्।

माने—[3]प्रादेशः। प्रस्थः।

हिंसायाम्—प्रहरति। प्रमापयति। [4]"प्रमीणः पशुः"।

शास्त्रनाम्नि—प्रक्रिया। प्रकृतिः। प्रकरणम्।

वञ्चने—प्रतारणम्; प्रलम्भयति।

अर्थविपर्यये—प्रतिष्ठति। गच्छतीत्यर्थः।

संन्यासे—प्रव्रजति। प्रवासः।

मृतौ—प्रैति। प्रलयः।

काले—प्राह्णः। प्राकालिका इत्यर्थः।

मन्दे—प्रवद्र वक्ति। मन्दं वदति इत्यर्थः।

---

1. अत्र उपयोगार्थे कृञस्तङ्। 'उपयोगः = धर्मादिप्रयोजनो विनियोगः' इति काशिका (1-3-32)।
2. अत्र प्रकथने विहितः कृञस्तङ्। प्रकथनम् = प्रकर्षेण कथनम्।
3. 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घः। प्रदेश एव प्रादेशः।
4. प्रपूर्वकात् 'मीङ् हिंसायाम्' (दिवादिः सक. अनिट्. आत्मने.) इति धातोः निष्ठायाम्, छान्दसत्वेन बाहुलकात् निष्ठानत्वे णत्वे च रूपमेवम्। लोके तु 'प्रमीतः' इत्येव। 'हिंसाऽत्र मृतिः' इति धातुकाव्यव्याख्या (2-58)।

मुख्ये—प्रधानम्। यतिप्रवरः। यतिषु मुख्य इत्यर्थः।

**गणरत्नमहोदधिटीकायां** दीर्घभृशार्थतृप्तिवियोगेच्छाशान्तिपूजावलोकनार्थाः अप्यस्योक्ता इति **वाचस्पत्य** उपात्तम्। तेषामर्थानां यथासम्भवमुदाहरणानि यथा—

दीर्घे—प्रवालमूषिकः। दीर्घपुच्छो मूषिक इत्यर्थः।

भृशार्थे—[1]प्रवदन्ति दायादाः।

तृप्तौ—प्रभुक्तमन्नम्। यावत्तृप्ति भुक्तमन्नमित्यर्थः।

वियोगे—प्रोषितो देवदत्तः।

इच्छायाम्—[2]'प्रार्थयन्त शयनोत्थितं प्रियाः—' (रघु. 19-29)।

शान्तौ—प्रशान्तोऽग्निः। प्रवातो देशः।

पूजायाम्—'महर्षेः कीर्तनात् तस्य भीष्मः प्राञ्जलिरब्रवीत्'।

---

1. 'प्रवदन्ति दायादाः' इत्यत्र भृशं वदन्तीत्यर्थः। पुरुषोत्तम-गणरत्नमहोदधिटीकाकाराद्यनुसारेण एवमुदाहृतम्। अत्र यद्यपि 'व्यक्तवाचां समुच्चारणे' (1-3-48) इति तत्रैव न्यायः; भाष्यकारेणापि 'वरतनु सम्प्रवदन्ति कुक्कुटाः' इति प्रत्युदाहरण एव परस्मैपदं प्रयुक्तम्। तथापि 'विभाषा विप्रलापे' (1-3-50) इति पाक्षिकं परस्मैपदित्वमाश्रित्यैव प्रयोग इति ज्ञेयम्। अत्रापि दायादानां विप्रलाप एव खलु विवक्षितः।
2. प्रपूर्वकात् 'अर्थ उपयाच्ञायाम्' इति चुरादिषु आगर्वीयात् धातोर्लङि रूपम्। 'आगर्वादात्मनेपदिनः' (ग. सू. चुरादौ) इत्यात्मनेपदमत्र। एवमेव रघुवंशे पाठः। अदादौ चक्षिङ्धातुप्रकरणे, चुरादिषु अर्थधातौ च माधवधातुवृत्तौ 'प्रार्थयन्ति' इति परस्मैपदपाठमाश्रित्य "कृदन्तात् 'तत् करोति' इति णिचि नेयम्" इति समाहितम्। सुकरगतिसम्भवे क्लिष्टगतिरनाश्रयणीयेति ज्ञेयम्। मल्लिनाथप्रभृतयोऽत्र यतो न विचारमकुर्वन्— ततो ज्ञायते 'प्रार्थयन्त' इत्येव शुद्धः पाठ इति।

अवलोकने—प्रलोकयति । धात्वर्थानुगमोऽत्र ।

क्वचित् 'प्रवक्ति' इत्यादौ प्राथम्यमप्यस्यार्थ इति प्रकरणानुसारेण बोध्यम् ।

(547)

" प्रकृपने " (सा.)

वैरूप्यार्थे साक्षात्प्रभृतिषु (1-4-74) पठ्यते। कृञो योगे विभाषा गतिसंज्ञा । प्रकृपनेकृत्य = वैरूप्यं सम्पाद्य इत्यर्थः। सन्तापार्थकममुं केचिदाहुः । साक्षात्प्रभृतिषु च्व्यर्थोऽपि वाच्यः । एवं च पूर्वं सुरूपं सन्तमधुना विरूपं कृत्वेति तात्पर्यार्थः ।

(548)

" प्रकामम् " (स्व.)

अतिशयार्थे स्वरादिरयम् । 'प्रकाममप्रीयत यज्वनां प्रियः' (माघे 1-17 । 'अयमतिजरठाः प्रकामगुर्वीः—' (माघे 4-29) इत्यादिषु त्रिलिङ्गत्वमपि । तदानीं प्रगतं काममिति प्रादिसमासो बोध्यः ।

(549)

" प्रगे " (च.)

'प्रातः' इत्यर्थेऽव्ययमिदम् । 'इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथ तोरणाद् बहिः' (माघ 12-1) । 'प्रगे' इत्यस्य आतप्रातःकालार्थ-

कल्यं (ब्राह्ममुहूर्त इति यावत्) क्वचिदुक्तम्। **प्रगे प्रबुध्यसे**। [1]**प्रगेतनो** वायुः।

(550)

"**प्रतपने**" (सा.)

तापार्थकोऽयम्। '**वितपने**' इति **वामनादिभिः** पठ्यते। साक्षात्प्रभृतित्वात् कृञो योगे विभाषा गतिसंज्ञा। 'मिथ्याकृतां **प्रतपने**ऽद्द् अथ क्षितीशः' (गणरत्ने)।

(551)

"**प्रतरम्**" (च.)

दीर्घकालार्थकोऽयं छान्दसः। '....द्राघीय आयुः **प्रतरं** दधानाः।' (ऋक् 10-18-2)।

एव **प्रतमाम्**, **प्रतराम्** इत्यपि छान्दसमव्ययं द्रष्टव्यम्।

---

1. 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इति शैषिकः ट्युः, ट्युल् वा प्रत्ययः, तत्सन्नियोगेन तुडागमश्च। 'प्रगे' इति प्रत्ययसन्नियोगे एकारान्तत्वं निपात्यते इति काशिका। अयं भावः—प्रगशब्दस्यानव्ययस्य प्रकृतप्रत्ययसन्नियोगेनाव्ययत्वमेकारान्तत्वं चेति। एतच्च सूत्रे 'अव्ययेभ्यः' इति पृथगुपादानात् अनव्ययत्वमस्याभ्युपगम्य निर्व्यूढमिति ज्ञेयम्। 'सायाह्नः, चिरकालात्, प्राह्णरूपः' इत्यादिषु अनव्ययत्वेन शब्दस्य प्रयोगे दर्शनात्, अस्य परमव्ययत्वमिति तेषामाशयः। अत्र वक्तव्यं सर्वमप्यस्माभिः 'चिरम्' इत्यत्र विस्तरेण प्रतिपादितमिति तत्रैव विस्तरः। प्रत्ययसन्नियोगाभावस्थलेऽपि (यथा वा प्रस्तुते माघे 12-1 श्लोके) 'प्रगे' इति एदन्तत्वदर्शनात्, अभिधानकोशादिषु सर्वत्र 'प्रगे' इत्येवाव्ययस्य मध्ये पाठात् अव्ययत्वमेवास्य, नानव्ययत्वमिति कश्चित्।

(552)

" प्रतान् (स्व.)

समानार्थकोऽयं स्वरादिषु पठ्यते। 'तनु विस्तारे' इत्यस्माद् प्रपूर्वकात् क्विपि 'अनुनासिकस्य—' (6-4-15) इति दीर्घे स्वरादिपाठादव्ययत्वम्। सामर्थ्यमस्यार्थ इति केचित्। प्रयोगो मृग्यः।

(553)

"प्रति स्थाने विनिमये निषेधे प्रतिपालने।
निवृत्त्यङ्गीकृतिज्ञानप्रतीपोत्साहनिष्क्रये॥
यत्नप्रतिज्ञासंक्षेपवैपरीत्ये भृशे दृशि।
सादृश्यभ्रंशदिग्योगव्याप्तिसम्भावनारुजि॥" (उ. ग. क.)

स्थाने—प्रतिष्ठति। प्रतिवसति।

विनिमये—प्रतिदानम्। प्रतियच्छति।

निषेधे—[1]प्रतिषेधः, प्रत्यादेशः। प्रत्याख्यानम्।

प्रतिपालने—प्रतीक्षते।

निवृत्तौ—प्रत्यागतः। प्रत्यावृत्तः।

अङ्गीकृतौ—प्रतिग्रहः। प्रतीच्छति।

ज्ञाने—प्रत्ययः। [2]प्रतिभा। प्रतिपद्। प्रतीयते।

---

1. 'उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेध—' (8-3-65) इत्यादिना षत्वम्। एवञ्च प्रतिष्टौति प्रतिषुणोति इत्यादिष्वपि षत्वं ज्ञेयम्।
2. 'आतश्चोपसर्गे' (3-3-106) इति स्त्र्यधिकारविहितोऽङ् अत्र।

प्रतीपे—प्रतिकूलम्।

उत्साहे—'होत्रे [1]प्रतिगृणाति'। होतारं शंसन्तं प्रोत्साहयतीत्यर्थः।

निष्क्रये—प्रतियातना। प्रतिमुञ्चति। 'प्रत्यञ्चमर्कं [2]प्रत्यर्पयित्वा'।

यत्ने—प्रतिविधानम्। प्रतिसमाधिः। प्रतिकरोति।

प्रतिज्ञायाम्—प्रतिजानीते। प्रतियुनक्ति। [3]प्रतिशृणोति गां देवदत्ताय।

संक्षेपे—प्रत्याहारः।

वैपरीत्ये—प्रत्युदाहरणम्। प्रतिकूलः। प्रतिलोमम्। [4]प्रतीपम्।

भृशे—प्रतियाचते। असकृद् याचत इत्यर्थः।

दृशि—[5]प्रत्यक्षम्। [7]प्रतीकाशः।

---

1. 'अनुप्रतिगृणश्च' (1-4-41) इति 'होत्रे' इत्यत्र संप्रदानसंज्ञायाम् चतुर्थी।
2. अत्र 'क्त्वापि च्छन्दसि' (7-1-38) इति क्त्वाप्रत्ययः। छन्दस्येवायम्।
3. 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (1-4-40) इति 'देवदत्ताय' इत्यत्र संप्रदानसंज्ञायां चतुर्थी।
4. 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (6-3-97) इति अपशब्दाकारस्य ईकारः। 'ऋक्पूरप्—' (5-4-74) इति समासान्तोऽप्रत्ययः। प्रतिगता आपोऽत्रेति वृ.। अर्थविशेषबोधस्तु शब्दशक्तिस्वाभाव्यात्।
5. अक्ष्णो लक्षणं प्रत्यक्षम्। 'लक्षणेनाभिप्रती' (2-1-14) इति अव्ययीभावः। अक्षि अक्षि प्रति प्रत्यक्षम्। 'प्रतिपरसमनुभ्योऽक्ष्णः' (ग. सू.) इति शरत्प्रभृतिषु (5-4-107) पाठात् समासान्तटच्प्रत्ययः। अव्ययीभावान्तानां पाक्षिकं क्लीबत्वम्, 'अव्ययीभावः' इति लिङ्गानुशासनसूत्रेणानुमतम्। ततश्च कथं 'प्रत्यक्षोऽर्थः' इत्यादिप्रयोगा इति चेत्—अत्र वदन्ति—'प्रत्यक्षम्' इत्यस्मात् मत्वर्थीये अर्शआद्यच्प्रत्यये (5-2-127) लिङ्गसंख्याकारकान्वय उपपन्न इति।
6. 'उपसर्गस्य घञि—' (6-3-122) इति दीर्घः।

सादृश्ये—प्रतिकृतिः । प्रतिनिधिः । प्रतिमा ।

अंशे—प्रतिकीर्णमुखः ।

दिग्योगे—प्रतीची दिक् । प्रत्यक्—देशः कालो वा ।

व्याप्तौ—प्रतिकीर्णं पांसुभिः ।

सम्भावनायाम्—प्रत्याययति ।

रुजि—प्रतिश्यायः ।

लक्षण-इत्थम्भूताख्यानभाग-वीप्सा-प्रतिनिधि-प्रतिदानेषु अयं कर्मप्रवचनीयसंज्ञां लभते ।

लक्षणे— 'आ रामदर्शनात् पाप विद्योतस्व स्त्रियः [1]प्रति' (भ॰ का॰ 8-89)।

इत्थम्भूताख्याने—भक्तो विष्णुं प्रति ।

भागे—लक्ष्मीर्हरिं प्रति । हरेर्भागो लक्ष्मीरित्यर्थः ।

वीप्सायाम्—वृक्षं वृक्षं प्रति [2]सिञ्चति। प्रतिदिनम् ।

प्रतिनिधौ—'उद्गूर्णभागः संग्रामे यो नारायणतः [2]प्रति ॥' (भ॰ का॰ 8-89) ।

---

1. 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' (1-4-90) इति प्रतेः कर्मप्रवचनीयसंज्ञा। अत्र लक्षणार्थे कर्मप्रवचनीयत्वम्। 'कर्मप्रवचनीययुक्ते—' (2-3-8) इत्यनेन 'स्त्रियः' इत्यत्र द्वितीया । एवमुत्तरत्रापि यथासम्भवमूह्यम् ।
2. अत्र कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञायाः बाधितत्वात् न षत्वम् ।
3. प्रतिनिधिः मुख्यसदृशः । अत्र 'प्रतिः प्रतिनिधिप्रतिदानयोः' (1-4-92) इति कर्मप्रवचनीयसंज्ञा । 'प्रतिनिधिप्रतिदाने च यस्मात्' (2-3-11) इति पञ्चमी । 'प्रतियोगे पञ्चम्यास्तसिः' (5-4-44) इति 'नारायणतः' इत्यत्र पञ्चम्यास्तसिप्रत्ययः । एवं प्रतिदानार्थेऽपि पञ्चम्यादिकमूह्यम् ।

प्रतिदाने—तिलेभ्यः **प्रति** यच्छति माषान् ।

कचित् मात्रार्थकत्वमपि। यथा—सूपप्रति, शाकप्रति । **गणरत्न-टीकायां** तु हिंसार्थकत्वमप्यस्योक्तम्—'हिंसायाम्—**प्रतिहन्ति**' [1]इति । एवं यथासम्भवमर्थान्तराण्यपि स्वयमेवोह्यानि । '**प्रतिकर्म**' इत्यत्र अलङ्कारोऽर्थः। '**प्रतिकामम्**' इत्यत्र अनुकामम् इच्छानुसारमित्यर्थः ।

"**प्रति**कियतम्, **प्रति**त्यदम्, **प्रति**दिवम्, '**प्रति**दिशम् क्रियते कल-भैरवः' (माघे. 4-60), **प्रति**दशम्, **प्रति**यवत्, [1]**प्रति**पथम्, **प्रति**मनसम्, **प्रति**यदम्, **प्रति**विदम्, **प्रति**विशम्, **प्रति**सदम्, **प्रत्य**क्षम्, **प्रत्य**नडुहम्" इत्येते शरत्प्रभृतिषु पठिता अव्ययीभावाः। तेनात्र सर्वत्र 'कियन्तं **प्रति प्रति**कियतम्' इत्येवंरूपेण वृत्तौ 'अव्ययीभावे शरत्प्रभृतिभ्यः' (5-4-107) इति समासान्तष्टच् प्रत्ययः। [2]**प्रतिष्कशः**। [3]**प्रतिस्तब्धः**। [4]**प्रत्युरसम्**।

---

1. पन्थानं पन्थानं प्रति प्रतिपथम्। शरत्प्रभृतित्वात् (5-4-10) समासान्तष्टच्प्रत्ययः। "......'ऋक्पूरब्धूःपथाम्—' (5-4-74) इत्यनेनैव समासान्तविधेः[=अकारप्रत्ययस्य] सिद्धत्वात् अस्य [='प्रतिपथम्' इत्यस्य] शरत्प्रभृतिषु (5-4-107) पाठो न संमतः प्रतिभाति। परं वृद्धवैयाकरण-मतानुरोधेन पठितः" इति वर्धमानः। समासान्तविधेरनित्यत्वज्ञापनाय शरत्प्रभृतिषु पाठः स्यादिति वयं प्रतीमः।

2. अत्र 'प्रतिष्कशश्च कशेः' (6-1-152) इति सुट् निपात्यते। प्रतिपूर्वकात् कश-धातोः पचाद्यचि सुटि, षत्वमप्यत्र निपातनादेव। प्रतिष्कशः=वार्तापुरुषः, सहायः पुरोयायी वा। 'ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः'।

3. 'प्रतिस्तब्धनि स्तब्धौ च' (8-3-114) इति षत्वनिषेधः। अन्यथा, 'स्तम्भेः' (8-3-67) इति षत्वं स्यात्।

4. उरसि इति प्रत्युरसम्। विभक्त्यर्थेऽव्ययीभावः। 'प्रतेरुरसः सप्तमीस्थात्' (5-4-82) इति समासान्तोऽच्प्रत्ययः।

[1]प्रतिशीनः—प्रतिशीनवान्। [2]प्रतिगृह्यम्। [3]प्रतिशुश्रूषति। [4]प्रतिशरदम्। [5]प्रत्यग्नि। [6]शाकप्रति—सूपप्रति। [7]प्रतिसीदति।

'प्रतिभटः' इत्यत्र तु उपसर्गप्रतिरूपकोऽयम्। अन्यथा क्रियायोगाभावात् उपसर्गत्वं न स्यादित्यलम्।

(554)

"प्रत्नथा" (त.)

नूतनप्रकारेण, नूतनमिव, इत्यस्यार्थः। 'प्रत्नपूर्वविश्वेमात् थाल् छन्दसि' (5-3-111) इति इवार्थे थाल्प्रत्ययः। 'आम्थालो' (काशिका

1. 'प्रतेश्च' (6-1-25) इति 'श्यैङ् गतौ' इति धातोः प्रतिपूर्वकस्य निष्ठायां 'सम्प्रसारणाच्च' (6-1-108) इति पूर्वरूपे 'श्योऽस्पर्शे' (8-2-47) इति निष्ठानत्वे च रूपमेवम्।

2. 'प्रत्यपिभ्यां ग्रहेः' (3-1-118) इति प्रतिपूर्वस्य ग्रहधातोः क्यप् प्रत्ययः। स च 'छन्दसीति वक्तव्यम्' (वा. 3-1-118) इति वचनात् छन्दस्येव। 'मत्तस्य न प्रतिगृह्यम्'।

3. 'प्रत्याङ्भ्यां श्रुवः' (1-3-59) इति शृणोतेः सन्नन्तात् तङो निषेधः।

4. अत्र 'लक्षणेनाभिप्रती आभिमुख्ये' (2-4-14) इति आभिमुख्यवाचिनः शरच्छब्देनाव्ययीभावः। शरद आभिमुख्ये प्रतिशरदम्। 'अव्ययीभावे शरत्प्रभृतिभ्यः' (5-4-107) इति समासान्तष्टच्।

5. अत्रापि पूर्ववत् लक्षणवाचकेनाव्ययीभावः। प्रत्यग्नि—अग्न्याभिमुख्येन इत्यर्थः। महाविभाषया कदाचित् 'अग्निं प्रति' इति वाक्यमपि।

6. 'सुप् प्रतिना मात्रार्थे' (2-1-9) इति मात्रा [—बिन्दुः, स्तोकम्, अल्पमिति यावत्) र्थेन प्रतिनाऽव्ययीभावः।

7. 'सदिरप्रतेः' (8-3-66) इत्युक्तेः षत्वमत्र न। एवमत्र निदर्शनार्थं 'प्रति' इत्युपसर्गाश्रितानि कार्याणि दिङ्मात्रेण प्रदर्शितानि। निदर्शितदिशाऽन्येऽप्येवमस्य विशेषाः यथाशास्त्रमूह्या इत्यलं विस्तरेण।

1-1-37) इति वचनात् असर्वविभक्तित्वेनाव्ययत्वम्। 'तं प्रत्नथा पूर्वथा विश्वथेमथा' (ऋक्. 5-44-1)।

(555)

"प्रत्यक्" (त)

दिग्देशकालेषु सप्तमीपञ्चमीप्रथमान्तेभ्यो विहितस्यास्तातिप्रत्ययस्य 'अञ्चेर्लुक्' (5-3-30) इति लुकि 'लुक् तद्धितलुकि' (1-2-49) इति स्त्रीप्रत्ययलुकि प्रत्यक् इति सिद्ध्यति। सप्तम्याम्—प्रत्यक् वसति। पञ्चम्याम्—प्रत्यग् आगतः। प्रथमायाम्—प्रत्यक् रमणीयम्। अत्र अस्तातिप्रत्ययस्य लुका लुप्तत्वेऽपि प्राग्दिशीयत्वेन विभक्तिसंज्ञायाम्, 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययत्वमस्येति ज्ञेयम्।

(556)

"प्रत्युत" (चा.)

'प्रति+उत' इति निपातद्वयसमुदायोऽयं उक्तवैपरीत्यार्थे वर्तते। 'न दोषः पुनरुक्तेऽपि प्रत्युतेयमलङ्क्रिया' (काव्यादर्शे 3-137)।

(557)

"प्रदक्षिणम्" (ति.)

प्रगतो दक्षिणमिति प्रदक्षिणम्। 'प्रभुत्य दक्षिणतो भ्रमतीति प्रदक्षिणम्' इति गणरत्नमहोदध्युक्तिस्तु फलितार्थकथनरूपा। 'प्रदक्षिणम्=वामम्' इति भोजः। 'प्रकृष्टत्व दक्षिणायाः प्रदक्षिणम्' इति केचित्। तिष्ठद्गुप्रभृतित्वात् समासः, तेनाव्ययीभावत्वम्। नपुंसकत्वं तु 'अव्ययीभावः'

इति गणसूत्रात् भवत्येव । तिष्ठद्गुगणे कालवाचिनामेव पाठात्, अत्र च काल-वाचकत्वाभावात् कथमस्य संगतिरिति न शङ्क्यम् । यतस्तत्र गणे 'अघोनाभम्' इत्यादीनां देशवाचकानामपि पाठः । अतः एव 'तिष्ठद्गु' इत्यादयोऽपि **केश्चित्** देशपरतयैव व्याख्याताः ।

'**प्रदक्षिणित्** अभि सोमास इन्द्रम्' (ऋक्· 3-32-15) इत्यत्र तु प्रदक्षिणसमानार्थकमव्ययान्तरं '**प्रदक्षिणित्**' इति, इति ज्ञेयम् ।

(558)

" **प्रपित्वे** " (चा.)

उत्तरायणार्थकश्छान्दसोऽयम् । **वाचस्पत्य** उपात्तः ।

(559)

" **प्रबाहुः** " (ख.)

ऊर्ध्वार्थकोऽयम् । '**प्रबाहुक्**' इति **केचित्** तुल्यकालार्थकं पठित्वा '**प्रबाहुक्** बहवो गताः' इत्युदाहरन्ति। अनव्ययस्तु **प्रबाहु**शब्दः कूर्पार्थकः— 'सुख बाहु**प्रबाहु** च मनः सर्वेन्द्रियाणि च।' (विष्णुपुराणे 5-5-19) इति यथा ।

(560)

" **प्रभृति** " (च.)

'तदारभ्य' इत्यर्थः । प्रायेण देशवाचकात्, कालवाचकाद्वा शब्दात् परत एवायं प्रयुज्यते—शब्दशक्तिस्वाभाव्यात्। 'अद्य **प्रभृति** हे लोकाः यूयं यूयं वयं वयम् ।' इति काले । देशे तु 'विन्ध्यात् **प्रभृति** दण्डकः ।'

इति। अत्र सर्वत्र 'यतश्चाध्वकालनिर्माणम्' (वा. 2-3-28) इति पञ्चमी इति ज्ञेयम्। 'इन्द्रप्रभृतयो देवाः' इत्यादिषु तु उत्तरपदस्थो बहुव्रीहिसमासेऽपि वृत्तिं लभते इति बोध्यम्।

(561)

"**प्रमाणतः**" (त.)

प्रमाणेन, प्रमाणाद्धेतोर्वा **प्रमाणतः**। हेतुपञ्चम्यन्तात् आद्यादित्वात् (वा. 5-4-44) तसिः।

(562)

"**प्रमीम्**" (स.)

सर्वत इत्यर्थे छान्दसोऽयम्। '**प्रमी**मादित्योऽसृजत्'।

(563)

"**प्रमृगम्**" (ति.)

प्रगता मृगा यत्र काले, यतो वा अरण्यादेः तत् **प्रमृगम्**। प्रकृष्ट-मृगा यत्रेति **वाचस्पत्ये** विवृतम्। तिष्ठद्गुप्रभृतित्वात् (2-1-17) अव्ययीभाव-समासः। 'प्रगताः मृगाः यस्मात् सः' इति विग्रहे तु नाव्ययीभावः; किं तु '**प्रमृगो** देशः' इति बहुव्रीहिरेव।

(564)

"**प्रयै**" (कृ.)

प्रपूर्वकात् यातेः "**प्रयै** रोहिष्यै अव्यथिष्यै" (3-4-10) इति निपातनात् कैप्रत्ययः। 'आतो लोपः—' (6-4-64) इत्याकारलोपः।

तुमुनर्थकोऽयम्। 'प्रयै देवेभ्यः'। प्रयातुमित्यर्थः। 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम्।

(565)

"प्ररथम्" (ति.)

प्रगतत्वं रथस्य इति, प्रगताः प्रभूता वा रथा अस्मिन् देशे इति वा प्ररथम्। तिष्ठद्गुप्रभृतित्वादव्ययीभावेऽव्ययत्वम्।

(566)

"प्रवाहुकम्" (स्व.)

'समकाले' इत्यस्यार्थः। 'प्रवाहुकम्' इति केचित्। 'प्रवाहुकं गृह्णीयात्'। छान्दसोऽयमिति केचित्।

(567)

"प्रशान्" (स्व.)

समानार्थकोऽयम्। सामर्थ्यार्थकोऽयमिति वाचस्पत्यम्। 'प्रशान् देवदत्तो यज्ञदत्तेन'। सम इत्यर्थः। प्रपूर्वकात् शमधातोः क्विपि, 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घे, 'मो नो धातोः' (8-2-64) इति मकारस्य नकारः। स्वरादिपठितेभ्यो विभक्त्यनुत्पत्तेः नकारस्याप्राप्त्या 'कृन्मेजन्तः' (1-1-39) इति सूत्रे भाष्यस्वारस्याच्च मान्तपाठ एव प्रामाणिक इति बृहच्छब्देन्दुशेखरे (पृ. 689) प्रतिपादितम्।

(568)

"**प्रसज्य**" (कृ. प्र.)

प्रपूर्वकात् सजतेर्ल्यपि **प्रसज्य** इति सम्पन्नम् । '**प्रसज्यप्रतिषेधः**' इत्यत्र ल्यबन्तप्रतिरूपकस्य प्रतिषेधशब्देन सह वृत्तिः । अन्यथा ल्यबन्तस्य साक्षात् प्रतिषेधशब्देन सह वृत्तेरप्रसक्तेः । 'स्वरप्रतिरूपकाः' इति चादिषु पठ्यते । तत्र **तिलकेन** 'प्रत्ययप्रतिरूपका अपि निपाता दृश्यन्ते' इत्युक्त-मिहावधेयम् ।

(569)

"**प्रसलवि**" (स्व. च.)

प्रपूर्वकात् सलधातोर्बाहुलकाद् अविप्रत्यये, समुदायस्य चादिषु स्वरादिषु वा पाठेऽव्ययत्वम् । 'देवतीर्थेन' इति अस्यार्थः । 'अप [व] सलवि' इत्यस्य प्रतिपदमेतदिति ज्ञेयम् । **कल्पसूत्रेषु** बहुलं प्रयुक्तः । '....**प्रसलवि** त्रिः पर्येति यत् पुनः **प्रसलवि**....' (शतपथब्राह्मणे 2-6-11-15) इत्यत्र तु 'प्रदक्षिणेन' इति व्याख्यानम् ।

(570)

"**प्रसहने**" (सा.)

उत्साह-साहित्य-सामर्थ्यरूपार्थेषु साक्षात्प्रभृतिषु पठित एदन्त-निपातोऽयम । कृञो योगे च्व्यर्थे विकल्पेन समस्यते । **प्रसहने**कृत्य-**प्रसहने** कृत्वा । बलात्कारार्थकत्वमप्यस्य **कैश्चिद**नुशिष्टम् । '**प्रहसने**' इति क्वचिदपपाठः ।

18

(571)

"प्रसह्य" (स्व.)

शीघ्रहठार्थकोऽयम्। प्रपूर्वात् सहतेर्ल्यप्यपि रूपं तुल्यम्। तथापि स्वरार्थं 'प्रसह्यचौरः, प्रसह्यहरणम्' इत्यादिषु वृत्तिघटकतोपपत्त्यर्थं च स्वरादिषु पाठः। शीघ्रार्थे—'प्रसह्य सिंहः किल तां चकर्ष' (रघुः 2-27)। हठार्थे—'ददृशे तदसून् प्रसह्य पातुं शमनेनेव निवेशिता भुजङ्गी॥' (यादवाभ्युदये 15-101)।

(572)

"प्राक्" (त.)

प्रकर्षेणाञ्चतीत्यर्थे प्राक्शब्दात् दिग्देशकालेषु सप्तमीपञ्चमीप्रथमाभ्यो विहितस्य अस्तातिप्रत्ययस्य 'अञ्चेर्लुक्' (5-3-30) इति लुक्। 'लुक् तद्धितलुकि' (1-2-49) इति स्त्रीप्रत्ययस्यापि लुक्। सप्तम्याम्—प्राग् वसति। पञ्चम्याम्—प्राग् आगतः। प्रथमायाम्—प्राग् रमणीयम्। यथासम्भवं कालदेशोभयार्थकत्वमूह्यम्। अत्र अस्तातिप्रत्ययस्य लुका लुप्तत्वेऽपि प्राग्दिशीयत्वेन विभक्तिसंज्ञायाम्, असर्वविभक्तितद्धितान्तत्वप्रयुक्ताऽव्ययसंज्ञेति बोद्धव्यम्।

(573)

"प्राचा" (स्व.)

'अग्रे' इत्यर्थे छान्दसोऽयम्। 'प्राचा गव्यन्तः पृथुपर्शवो ययुः।' (ऋक् 7-83-1)।

(574)

"प्राजरुहा" (सा-)

रुहिक्रियायामस्य वृत्तिः। 'शोभार्थे' इत्यन्ये। प्राजरुहाकृत्य पर्जन्यो निवृत्तः। पूर्वमप्ररूढानां बीजानां रोपणं कृत्वा वृष्टिर्निवृत्तेत्यर्थः। गति-संज्ञाया वैकल्पिकत्वात् 'प्राजरुहा कृत्वा' इत्यपि साधुः।

(575)

"प्राजर्या" (सा.)

जरणक्रियाऽस्यार्थः। 'शोभार्थे' इति केचित्। अयमपि साक्षादादिः। प्राजर्याकृत्य, प्राजर्या कृत्वा वा धनस्य गतः। 'प्राजया' इति वाचस्पत्ये पाठः। प्राजर्याकरणं नाम पूर्वम् अव्ययितस्य अधुना व्ययः। 'प्राजुरा' इति शाकटायनसंमतः पाठः। 'प्राजुर्या' इत्यपि क्वचित् दृश्यते। एवमेव बहुत्र पाठनिर्धारणसामग्री नास्ति। वयं तु यथोपलम्भं पाठभेदान् प्रदर्श्य विरमामः। तदुक्तं पुरुषकारे—

'पाठेऽर्थे चागमभ्रंशात् महतामपि मोहतः।
न विद्मः किं नु जह्मिः किं वाऽस्मादध्महे वयम्॥' इति

(576)

"प्रातर्" (स.)

प्रत्यूषकालोऽस्यार्थः। 'अस्तनेऽपि' इति केचित्। 'प्रातः दिने च' इति त्रिकाण्डशेषः। 'प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै—'। सूर्योदयावधिकस्त्रिमुहूर्तकालस्त्वेवमुच्यते।

(577)

"प्रादुस्" (स्व. सा. ऊ.)

रेफान्तः, विसर्गान्तश्च क्वचित् पठ्यते। नामप्राकाश्ययोरस्य वृत्तिः। नाम्नि—दश प्रादुर्भावाः। मत्स्याकूर्मादयो दश नामानीत्यर्थः। प्राकाश्ये—'प्रादुष्षन्ति न सन्त्रासा यस्य रक्षःसमागमे।' (भट्टिः. 9-81)। अत्र 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (8-3-87) इति षत्वम्। 'प्रादुस्' इत्यत्र सकारस्य ष्टुत्वेन षकारः। एवम् 'प्रादुष्यात्' इत्यत्रापि। अस्य ऊर्यादित्वात् (1-4-61) यद्यपि क्रियासामान्ययोगे गतित्वमनुशिष्टम्; तथापि कृभ्वस्तिभिस्त्रिभिरेव योगः प्रयोगे दृश्यते—प्रादुष्कृतम्, प्रादुर्भूतम्, प्रादुरासीत् इति। प्रादुष्पत्तिः इति पद्लृधातावपि क्वचिदेतदासज्जितम्। साक्षात्प्रभृतिष्वप्यस्य पाठात् च्व्यर्थे गम्ये कृञा सहैव योगः—प्रादुष्कृत्य, प्रादुः कृत्वा इति। तिलकेन तु गतिप्रतिरूपकत्वमाश्रित्य 'प्रादुर्भूतमधोक्षजम्' इति प्रयोगो निर्व्यूढः। क्रियायोगे गतिसंज्ञयैव 'कुगतिप्रादयः' (2-2-18) इति समासे सिद्धे, एवमुक्तेः स्वरप्रसिद्धिरेव फलमिति ज्ञेयम्। अन्यथा गतिस्वरापत्तेः।

प्रादुष्यम्। अत्र च बाहुलकात् स्वार्थे [=प्रादुर्भावार्थे] यत्प्रत्ययः। न च वाच्यम्—'अव्ययात् त्यप्' (4-2-104) इति त्यपैव सिद्धे किमर्थं बाहुलकाश्रयणमिति; यतस्तत्र 'अमेहक्वतसित्रेभ्यः' (वा. 4-2-104) इति परिगणितत्वात् रूपासिद्धेः। अत एव उज्ज्वलदत्तेन 'प्रादुष्यम् प्रादुर्भावे' इति बाहुलकयतैव साधितम् (पञ्चपाद्युणादिवृत्तौ 2-118)।

(578)

"**प्राध्वम्**" (ग.)

आनुकूल्यार्थकोऽयम्। यथा—'सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं **प्राध्व**मितः प्रयुङ्क्ते।' (रघुः—13-43)।

अस्यैव बन्धनमूलकानुकूल्ये गम्ये '**प्राध्वं** बन्धने' (1-4-78) इति कृञो योगे गतिसंज्ञायां समासे '**प्राध्वं**कृत्य' इति भवति। बन्धनेन अनुकूलं कृत्वेत्यर्थः। नम्रताऽप्यस्यार्थ इति क्वचिन्निर्दिष्टम्। '**प्राध्व**मङ्गानि साहसात्' इत्यत्र निग्रहार्थकत्वं तिलकेनोक्तम्।

(579)

"**प्रान्तम्**" (ति.)

प्रगतत्वमन्तस्य, प्रगतोऽन्तोऽस्मिन् देश इति वा **प्रान्तम्**। तिष्ठद्गु-प्रभृतित्वादव्ययीभावसमासः।

(580)

"**प्रायः**" (स्व.)

बाहुल्यार्थकमिदमव्ययम्। '**प्रायः** पयोधरसमुन्नतिरत्र हेतुः—' (उद्भटः)। '**प्रायः** प्रवदने पुंसां पौनःपुन्यं निवारयन्' (न्यासतिलके 1) इत्यादिषु उत्प्रेक्षार्थकत्वमपि ज्ञेयम्। तदुक्तम् 'मन्ये शङ्के ध्रुवं **प्रायो** नूनमित्येवमादयः। उत्प्रेक्षाव्यञ्जकाः शब्दा इवशब्दोऽपि तादृशः॥' (काव्यादर्शः) इति। 'प्रपचे तं गिरिं **प्रायः**—' इत्यादिषु प्राथम्यार्थकत्वमपि।

इदमत्रावधेयम् — 'त्रेदो वा प्रायदर्शनात्' (मीमांसासूत्रम्) 'अग्रयप्रायन्यायः' इत्यादिषु प्रयुक्तः प्रायशब्दोऽनव्ययोऽव्ययसमानार्थकः । समानार्थकानव्ययाव्ययसायसायंशब्दवत् । अनव्ययस्यास्यैव 'प्रायस्य चित्ति-चित्तयोः सुट् अस्कारो वा' (भाष्यम् 6-1-157) इति 'प्रायश्चित्तिः, प्रायश्चित्तम्' इत्येतमर्थं सुडागमो विधीयते ; 'प्रायोपवेशः' इत्यादिषु व्रतार्थकत्वमपि 'प्रायो नाम तपः प्रोक्तम्—'इति स्मृत्या निर्वहन्ति । एतेन 'प्रायः पापं समुदिष्टं चित्तं तस्य विशोधनम्' इति स्मृतिः फलितार्थ-कथनपरा ॥

(581)

"प्रायशः" (त)

'अनेकशः, सामान्यतः' इत्यर्थकोऽयम् । व्युत्पत्तिपक्षे बह्वर्थकात् प्रायशब्दात् 'बह्वल्पार्थात् शस् कारकाद् अन्यतरस्याम्' (5-4-42) इति शसप्रत्ययः । 'शस्प्रभृतयः—' (भाष्यम् 1-1-38) इति परिगणितेष्वस्य संग्रहात् तद्धितान्तमिदमव्ययम्—इति वदन्ति । वस्तुतः 'बह्वल्पार्थात् मङ्गलामङ्गलवचनम्' (वा. 5-4-42) इति नियमितत्वात्, अत्र माङ्गल्यार्थक-त्वास्फूर्तेर्नेदं समीचीनमिति, अव्युत्पन्नं शब्दस्वरूपमेवेदमिति प्रतीमः । 'आशा-बन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम्—' (मेघसन्देशः 1-10) ।

(582)

"प्रायेण" (स.)

इदमपि पूर्ववत् 'सामान्यतः, प्राचुर्येण' इत्यर्थकम् । 'प्रायेण सत्यपि हितार्थकरे विधौ हि श्रेयांसि लब्धुमसुखानि विनाऽन्तरायैः ॥' (किरातार्जुनीयम् 5-49) ।

(583)

## " प्राह्णम् " (ति.)

पूर्वाह्णार्थकोऽयम्। प्रगतत्वमह्नाम्, प्रगतम् अहः इति वा **प्राह्णम्**। तिष्ठद्गुप्रभृतिषु निपातनादह्नादेशः। 'प्रातः **प्राह्णं** प्रगे काल्यम्—' इति **कोशः**। वर्तिपदार्थप्राधान्ये एव अव्ययीभावसमासेऽस्याव्ययत्वम्। अन्यपदार्थ-प्राधान्ये तु बहुव्रीहिसमास एव। '**प्राह्णो** वायुः' इति यथा।

(584)

## " प्राह्णे " (च.)

प्रातरर्थकोऽयम्। एदन्तत्वमस्य चादिषु निपातनात्, 'सायंचिरं-प्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इत्यत्र सप्तम्यन्तनिर्देशाद्वा बोध्यम्। **प्राह्णे** गच्छति। [1]**प्राह्णे**तनो वायुः। [2]**प्राह्णे**तराम्। **प्राह्णे**तमाम्।

---

1. अत्र 'सायंचिरंप्राह्णे—' (4-3-23) इत्यादिना शैषिकः ट्युः ट्युल् वा प्रत्ययः। तत्सन्नियोगेन प्रकृतेः तुडागमश्च। अत्रेदमवधेयम्— 'घकालतनेषु कालनाम्नः' (6-3-17) इत्येतेनैव प्राह्णशब्दात् सप्तम्याः, 'पूर्वाह्णेतनः' इत्यादिष्विव अलुकि सिद्धे 'प्राह्णे' इति सूत्रे एदन्तत्व-निपातनात् अन्यदेवेदमेदन्तप्रतिरूपकमव्ययमिति ज्ञायते। न चात्र 'अव्ययेभ्यः' इति पृथगव्ययानामुपादानात् तावताऽपि 'प्राह्णे' इत्यस्य पुनर्विशिष्य ग्रहणे किं नियामकमिति वाच्यम्। 'घकालतनेषु—' (6-3-17) इत्यस्य वैकल्पिकत्वेन नित्यदा एदन्तत्वसम्पादनार्थमेव ग्रहणमिति मन्येथाः।

2. अत्र, 'द्विवचनविभज्योपपदे तरबीयसुनौ' (5-3-57) इति, 'अतिशायने तमबिष्ठनौ' (5-3-55) इति च तरप्तमपौ प्रत्ययौ। तद-न्तात् 'किमेत्तिङव्ययघात्—' (5-4-11) इत्यामुप्रत्ययः।

(585)

"प्रिया" (डा.)

प्रियशब्दादानुलोम्ये वर्तमानात् कृञो योगे 'सुखप्रियादानुलोम्ये' (5-4-63) इति डाच्। डाचो गतिसंज्ञकत्वेन निपातत्वम्; तेनाव्ययत्वमिति बोध्यम्। **प्रियाकरोति।** स्वाम्यादेराराध्यस्य चित्तमावर्जयतीत्यर्थः प्रियं कुर्वन् स्वामिप्रभृतिभ्यः स्वकार्यं साधयमाना एवमुच्यन्ते। 'अनुका प्रार्थयाञ्चक्रे प्रियाकर्तुं प्रियंवदा॥' (भ. का. 4-19)।

(586)

"प्रेत्य" (कृ.)

भवान्तरमस्यार्थः। लोकान्तरमपि कोशेष्वस्यार्थत्वेन निर्दिष्टम्। प्रपूर्वकात् इणः क्त्वो ल्यपि रूपमिदम्। **तिलकप्रभृतिभिः** स्वरादिषु पठितम्। प्रेत्यभावः, प्रेत्यजातिः। 'न प्रेत्य संज्ञाऽस्ति'। 'अन्यो धनं प्रेत्यगतस्य भुङ्क्ते' (महाभारते)। देहान्तरं भवान्तरं लोकान्तरं वा गतस्य धनमन्यो भुङ्क्ते इत्यर्थः।

(587)

"प्रोह्यपदि" (ति.)

प्रोह्य = ईषच्चलनेन पादौ वाहयति इत्यर्थे मयूरव्यंसकादित्वात् समासे, 'द्विदण्डयादिभ्यश्च' (5-4-128) इति समासान्त इच्प्रत्यये, 'इच् कर्मव्यतीहारे' (ग. सू. 2-1-17) इति अव्ययीभावसंज्ञायामव्ययत्वमस्येति ज्ञेयम्। प्रोह्य-

पदि हस्तिनं वाहयति । 'प्रोष्ठपादि' इति क्वचित् दृश्यते; स तु अपपाठः । यतः 'पादः पत्' (6-4-130) इति पद्भाव एवाङ्गस्य भसंज्ञकत्वात् न्याय्यः ।

प्रोष्ठ = विसार्य पादौ शेते प्रोष्ठपदि इति केचित् ।

(588)

"फट्" (चा.)

विघ्नप्रतिहतस्य उत्सारणेऽयं वर्तते । 'हुं फट् प्रतिहतोऽसि' ॥ अनुकरणशब्दोऽप्ययम्—'फट् इति स्फुटितम्' इत्यत्र यथा । अस्य इति-परत्वाभावे 'अनुकरणं च—' (1-4-62) इति गतिसंज्ञायाम्, कृञो योगे समासे ल्यपि 'फट्कृत्य' इति सिद्ध्यति ॥ 'वीर्यायास्त्राय फट्' इत्यत्र अस्त्र-मन्त्रस्य बीजाक्षरत्वेनाप्ययं पठ्यते । बीजाक्षरत्वेऽपि 'बीजकूटमालामन्त्राः' इति तिलकोक्त्याऽव्ययत्वं ज्ञेयम् । एवमेव 'कुं, खुं, जं, गं, शं' इत्यादीनां तत्तन्मन्त्र-बीजाक्षराणामपि अव्ययत्वमिति ज्ञेयम् ॥ 'यस्मै त्वेडे तत सत्यमुपरि प्रुता भङ्गेन हतोऽसौ फट्' (शुक्लयजुः 7-3) इत्यत्र 'फलतीति फट् । डलयोरै-क्यम् । स्वाहाकारस्थाने 'फट्' इत्यभिचारे प्रयुज्यते' इति महीधरोक्त्या क्षुद्रयोगेऽस्य स्वाहाशब्दप्रतिनिधित्वमपीति गम्यते ॥ प्रोक्षणविकिरणादिषु मन्त्रशास्त्रेऽस्य बहुलं विनियोगः प्रदर्शित इति विस्तरस्तत्रैव ।

(589)

"फली" (ऊ.)

विकारार्थकोऽयम् । 'हिंसायाम्' इति वामनः । 'विचारे' इति 'क्रियानिष्पत्तौ' इति च केचित् । ऊर्यादि (1-4-61) त्वात् कृभ्वस्ति-

मियोगे गतित्वम् । तेनाव्ययत्वम् । **फलीकृत्य** गच्छति । कार्यं निष्पाद्य, विकृत्य वा गच्छतीत्यर्थः । ननु कथमेकस्यैव विरुद्धार्थकत्वमिति चेत्—नैवम् । 'आरात्' इत्यत्र यथा विरुद्धयोः संनिकृष्टविप्रकृष्टार्थयोर्बोधः, एवमत्रापि शब्दशक्तिस्वाभाव्याद् भविष्यति । यद्वा, यदा 'फल **निष्पत्तौ**' (भ्वादिः 530) इत्यस्मात् 'फली' इति रूपं सम्पद्यते, तदानीं क्रियानिष्पत्तिरर्थः । यदा तु 'ञि फला **विशरणे**' (भ्वादिः 516) इत्यस्मात् प्रकृतिसिद्धिस्तदा विकारार्थकत्वमिति न दोषः ।

(590)

"फलू" (ऊ.)

अयमपि विकारार्थकः । अयमप्यूर्यादिः (1-4-61) । फलूकृत्य । अस्यापि फलीवद् अर्थभेदाः प्राच्यग्रन्थेषु बहुलमुपलभ्यन्ते । क्रियानिष्पत्तिरेव बहुसम्मतोऽर्थः । सतुषस्य व्रीह्यादेर्वितुषीकरणमप्यस्य क्वचिदर्थो निर्दिष्टः । सर्वमपि फलितार्थकथनपरम् ।

(591)

"फूत्" (ग.)

अनुकरणशब्दोऽयम् । कृञो योगे (इतिपरकत्वाभावे) 'अनुकरणं चानितिपरम्' (1-4-62) इति गतिसंज्ञा । तेन 'फूत्कृत्य' इत्यत्र समासे ल्यप् । फूत्कारः—मुहुर्वात्याधूते मुखपवनविस्फूर्जथुकरणम् । तुच्छभाषणमपि इति केचित् । 'बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति' (हितोपदेशः 4-103) ।

(592)

"बट्" (स्व.)

प्रशंसाऽस्यार्थः। बट् महानसि। सत्यार्थकोऽयं वेदे। 'अतीव' इत्यर्थोऽपि तिलकादिभिः प्रदर्शितः।

(593)

"बत" (नि.)

खेदानुकम्पाद्भुतसन्तोषा अस्यार्थाः। खेदे—'बत सीता हृता बलात्'। अनुकम्पायाम्—'प्रियोऽसि बत निन्द्योऽसि'। अद्भुते—'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रम्'। 'बत ब्रह्मन्! क गच्छसि' 'बत वितरत तोयं तोयवाहा नितान्तम्' इत्यादिषु आमन्त्रणार्थकत्वमपि। 'बत' इति दन्तोष्ठ्यत्वेन अमरसुधाप्रभृतिषु पठ्यते। औत्तराणां बवयोर्भेदकनियामकाभावात् वाचस्पत्यादिष्वप्येवमेव वकारादिषु पठितम्।

'वनजे नेति बत्से बतासि सत्त्वे' इत्यत्र हेत्वर्थकत्वमपि। बत = यस्मादित्यर्थः।

(594)

"बलवत्" (स्व.)

'अतिशये' इत्यर्थः। 'बलवच्छ्रान्तोऽसि'। 'बलवद् अपि शिक्षितानामात्मन्यप्रत्ययं चेतः' (शाकुन्तलम् 1-2)। नायं साक्षात् स्वरादिषु पठ्यते; अपि तु तत्र (1-1-37) 'वत्' इति गणसूत्रं पठितम्। तस्यायमर्थः—तुल्यार्थे

इवार्थे अहार्थे च विहितो यो वतिप्रत्ययः सोऽव्ययसंज्ञक इति। अत्र यथा-सम्भवं बलमर्हतीति अर्हार्थे, बलेन तुल्यमिति तुल्यार्थे वा वतिः। एतेन बलम-स्यास्तीति मतुपि, मकारस्य वकारः—इति वाचस्पत्यनिर्वचनं निष्प्रमाण-कमिति ज्ञेयम्। विस्तरस्तु अग्रे ('वत्' इत्यत्र) भविष्यति।

(595)

"बलात्" (स्व.)

हठार्थकोऽयम्। 'बलाद् आकृष्टानां कतिपयपदानां रचयितुर्वेदानां निर्मातुस्त्रिभुवनविधातुश्च कलहः'। बलात्कृत्य, अत्र अनुकरणशब्दत्वं कथ-ञ्चिदभ्युपेत्य गतिसंज्ञां सम्पाद्य कृञो योगे ल्यप् बोध्यः। अन्यथा क्त्वो ल्यप् न भवेत्। विभक्तिप्रतिरूपकं 'चिरात्, सनात्, हठात्, आरात्' इत्यादि-सदृक्षमव्ययमिदं स्वरादिषु पठ्यते। व्युत्पत्तिपक्षे तु बलमततीति क्विपि निष्पत्तिर्ज्ञेया।

(596)

"बहलम्" (नि.)

हठादर्थकोऽयम्। 'आर्य बहलं गृह्णाति'। तिलकाद्यनुसारेणात्र पठितः। वर्धमानादयस्तु 'आर्यहलम्' इत्यत्र पठन्ति। बहुत्ववाचकबहुल-समानार्थको बहलशब्दोऽनव्ययोऽस्माद् भिन्नः; 'तमो नाम द्रव्यं बहलविरलं मेचकाचलम्—'(तत्त्वसारे) 'बहलोत्तुङ्गलाङ्गूल—' इत्यादिषु प्रयुक्त इति ज्ञेयम्।

(597)

"बहिस्" (स्व.)

बाह्यमस्यार्थः। 'बहिर्विकारं प्रकृतेः पृथग् विदुः' (माघे 1-33)। बहिष्कृतम्। अत्र 'इदुदुपधस्य—' (8-3-41) इति षत्वम्।

(598)

"बहुल" (त.)

'सप्तम्यास्त्रल्' (5-3-10) इति बहुशब्दात् त्रल्। प्राग्दिशीयत्वेन विभक्तिसंज्ञकत्वात्, असर्वविभक्तितद्धितान्तत्वप्रयुक्तमव्ययत्वमस्य। 'बहुत्र श्रुतवीर्योऽयमागतः साम्प्रतं सभाम्'। अनेकत्र इत्यर्थः।

(599)

"बहुथा" (त.)

बहुशब्दात् 'प्रकारवचने थाल्' (5-3-23) इति थाल्प्रत्यये, तस्य च प्राग्दिशीयत्वेन विभक्तिसंज्ञकत्वादसर्वविभक्तितद्धितान्तत्वप्रयुक्तमव्ययत्वम्। परे तु 'आस्थालौ' इति स्वरादिषु पाठात् थाल्प्रत्ययान्तस्याव्ययत्वमिच्छन्ति।

(600)

"बहुधा" (स्व.)

'विभाषा बहोर्धाऽविप्रकृष्टकाले' (5-4.20) इति क्रियाभ्यावृत्तिगणने वर्तमानात् बहुशब्दात् पाक्षिको धाप्रत्ययाः। बहुधा दिवसस्य भुङ्क्ते। पक्षे 'बहुकृत्वो दिवसस्य भुङ्क्ते' इति कृत्वसुच्प्रत्ययान्तोऽपि साधुः। उभयत्र 'कृत्वोऽर्थः' (भाष्यम् 1-1-38) इति परिगणितेषु तद्धितान्तेष्वस्यान्तर्भावादव्ययत्वम्।

इदमिहावधेयम्—प्रकारवचनो थाल्प्रत्ययान्तो बहुधाशब्दोऽन्यः, कृत्वसुजर्थोऽयं 'बहुधा' इत्यन्यः। उभयोरर्थौ भिन्न इति स्फुटम्। एवमपि सम्यग्विवेचनाभावेनाद्यत्वे उभयोरपि भेदमज्ञात्वैव प्रयुञ्जते, विलिखन्ति च।

(601)

## "बाढम्" (च.)

अङ्गीकारे, निश्चये, सत्ये चायं वर्तते। अङ्गीकारे—'ब्रह्मचार्यसि, **बाढम्**'। निश्चये—**बाढम्**, एष मे पुत्रः। सत्ये—'**बाढम्** एष दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने।' (रघुः 19-52)। '**बाढं** मया सा नगरी दृष्टा विद्यार्थिना सता' (कथासरित्सागरे) इत्यादिषु अतिशयार्थकत्वमप्यस्याहुः।

दृढार्थको **बाढशब्दो**ऽन्यः, अयमन्य इति ज्ञेयम्। 'भृशनिश्चययो**र्बाढम्**' इत्यत्रा**मरव्याख्याने** (सुधायां) 'बाढम्' इति पठितम्। **ओष्ठ्य-दन्त्यो-ष्ठ्य**दर्पणनाम्के ग्रन्थे उभयविधस्यापि पाठस्य दर्शनादुभयं साध्विति वदन्ति।

(602)

## "बाहूबाहवि" (ति.)

बाहुभ्यां बाहुभ्यां च प्रहृत्य इदं युद्धं प्रवृत्तमित्यर्थे, 'तत्र तेनेदमिति सरूपे' (2-2-27) इति बहुव्रीहिसमासः। 'इच् कर्मव्यतीहारे' (5-4-127) इति समासान्त इच्प्रत्ययः। तस्य च तिष्ठद्गुप्रभृतित्वादव्ययी-

भावत्वेनाव्ययत्वम्। 'अन्येषामपि दृश्यते' (6-3-137) इति पूर्वपदस्य दीर्घः। केचित्तु वाहावाहवि, इति रूपमङ्गीकृत्य पृषोदरादित्वाद् दीर्घादिकं साधयन्ति।

(603)

"वाहा" (च.)

निष्पत्तिरस्यार्थः। प्रयोगो मृग्यः। छान्दसोऽयमित्येके।

(604)

"बीजरुहा" (सा.)

रुहिक्रियाऽस्यार्थः। 'शोभायाम्' इत्यन्ये। बीजरुहाकरोति सेवकः। बीजरुहेति केचित्।

(605)

"बीजा" (ग.)

'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (5-4-58) इति डाच्। बीजाकरोति क्षेत्रम्। बीजेन सह क्षेत्रस्य विलेखनं करोतीत्यर्थः। विविधं जायते इति विपूर्वकस्य जनेर्डप्रत्ययेन सिद्धत्वात् वीजा इति दन्त्योष्ठ्यपाठ एव प्रामाणिक इति बहवः। माधवप्रभृतयस्तु तन्नानुमन्यन्ते।

(606)

"ब्रूहि" (ति. प्र.)

प्रैषानुज्ञाऽवसरेषु प्रसिद्धोऽयम्। प्रैषः-प्रेषणम्। अनुज्ञा-अनुमतिदानम्। अवसरः-प्राप्तकालता। प्रैषे—'ब्रूहि ब्राह्मणाः'। गच्छत इत्यर्थः। अनुज्ञा-

याम्—" तद् ब्रूहि मम तथ्येन—'। अवसरे— 'ब्रूहि दृष्टं यथावत्'। वक्तु प्राप्तकाल इति यावत्।

इदमत्रावधेयम्। '**ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः**' (8-2-91) इति सूत्रे श्रौषड्वौषड्भ्यां साहचर्यात् ब्रूहिप्रेष्ययोरपि निपातयोरेव ग्रहणमिति **तिलकवर्धमान**प्रभृतीनामाशयः। वस्तुत. 'प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने' (2-3-61) इत्यत्र **काशिकादिषु** प्रतिपादितया रीत्या 'प्रैषातिसर्गप्राप्तकालेषु—' (3-3-163) इति ब्रुवो लोटयेव ब्रूहि इति सिद्धे तिङन्तप्रतिरूपकाव्ययत्वकल्पनमस्यान्याय्यमिति भाति। अत एव 'अग्नयेऽनुब्रूहि' इत्यत्र 'तिङ् अतिङः' (8-1-28) इति अनुदात्तत्वमपि 'ब्रूहि' इत्यस्य संगतं भवति। अन्यथा 'ब्रूहि' इत्यस्य त्वद्रीत्या अतिङन्तत्वेन स्वरानापत्तेः। सम्भवत्यां गतौ तिङन्तप्रतिरूपकत्वकल्पनमन्याय्यं च, इत्यास्तां तावत्।

(607)

**" भगो " (नि.)**

**पूजार्थकोऽयं निपातः। 'भगो इन्द्र!'। आमन्त्रणमत्र द्योत्यम्।** तथाहि—'एवं **भगो** इह भवत्परतन्त्र एव शब्दोऽपि रूपवदमुष्य चराचरस्य।' (**वैकुण्ठस्तवे** ३३) इत्यत्र यथा।

इदमव्युत्पन्नं प्रातिपदिकमिति **बहवः**। **केचित्** तु 'विभाषा भवद्भगवदघवताम् ओत् च अवस्य' (वा. 8-3-1) इति **वार्तिकेन** भगवच्छब्दस्य सम्बुद्धौ रुत्वम्, प्रकृतिगतस्य 'अव' इत्यस्य ओकारश्च। तेन 'भोभगोअघोअपूर्वस्य योऽशि' (8-3-17) इति रेफस्य यकारादेशे, 'ओतो

गार्ग्यस्य' (8-3-20) इति यकारस्य लोपे 'भगो इह' इति सम्पद्यते। शाकटायनमते तु 'व्योर्लघुप्रयत्नतरः—' (8-3-18) इति यकारे 'भगोयिह' इति भवति। 'भगो हसति' इत्यादिस्थलेषु तु 'हलि सर्वेषाम्' (8-3-22) इति नित्यो यकारलोप इति विशेषः।—इत्यभ्युपगम्य व्युत्पन्नत्वं वदन्ति। 'भगो ब्राह्मणि' इत्यादिसिद्ध्यर्थं अव्युत्पन्नस्यापि 'भगोः' इत्यस्याभ्युपगमो भाष्यादिसम्मत एव। 'भोभगो—' (8-3-17) इति सूत्रे तु व्युत्पन्नाव्युत्पन्नयोरुभयोरपि ग्रहणं मन्यन्ते इत्यास्तां तावत्।

(608)

"भद्रा" (सा.)

आलोचनप्रशंसामङ्गलेषु साक्षात्प्रभृतिषु पठ्यते। अभद्रा भद्रा कृत्वा भद्राकृत्य। साक्षात्प्रभृतिषु च्व्यर्थस्यैव बोधादेवं वृत्तिः। अभद्रां भद्रां कृत्वेति केचित् सविभक्तिकं विग्रहं कुर्वन्ति। 'भद्राच्च इति वक्तव्यम्' (वा. 5-4-67) इति वचनात् परिवापणे [=मङ्गलार्थमुण्डनार्थे] गम्ये भद्रशब्दात् कृञो योगे डाच्। तस्यैव साक्षात्प्रभृतिषु पाठ इति केचित्। परे तु डाजन्तोऽन्यः, अयमन्य इति, यतो डाजन्तस्याभूततद्भावो नार्थः। अस्य तु च्व्यर्थोऽन्तर्भूतो दृश्यते—इति साधयन्ति। 'भद्राकरोति नापितः कुमारम्'।

(609)

"भरे" (स.)

युद्धार्थकोऽयमतीवाप्रसिद्धः। छान्दसोऽयमित्येके।

(610)

"भवति" (स्व.)

भूधातोर्लट्प्रथमैकवचनान्तप्रतिरूपकोऽयं सत्तार्थकः। 'विभक्तिस्वर-प्रतिरूपकाश्च निपाता भवन्ति' (भाष्यम् 8-3-1) इति वचनादस्य अव्ययत्वम्। 'विभक्तिश्च' (1-4-104) इति तिङन्तस्यापि विभक्तिसंज्ञाऽस्तीत्यवधेयम्। एतदेव 'तिङन्तप्रतिरूपकमव्ययम्' इति तत्रतत्रोच्यते। '**भवति** नाम तत्रभवान् मिथ्या वदिष्यति'।

(611)

"भवतु" (स्व.)

वारणार्थकमिदमपि तिङन्तप्रतिरूपकमव्ययमिति **क्षीरस्वामी**। **वल्लभस्तु** तादृशमव्ययमेव नास्तीत्याह। '**भवतु** भक्त्या'। भवतेर्लोडन्तप्रतिरूपकमिदमत्र वारणे वर्तते।

असूयाङ्गीकारेऽपि वदन्ति। 'एवं **भवतु**, तव किमायातम्?'।

(612)

"भवन्ती" (स्व.)

लटः पूर्वाचार्यसंज्ञा "**भवन्ती**" इति। तच्चाव्ययमिति, अव्युत्पन्नम्, भवतेश्शत्रन्तात् स्त्रीलिङ्गरूपप्रतिरूपकमिति च व्याख्यातारः। 'अस्तिर्**भवन्ती**परः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' (वा. 2-3-1)।

(613)

"भविष्यति" (स्व.)

"अव्ययमेव भविष्यतिशब्दो नैव भवतेर्लृट्। कथमव्ययसंज्ञा! 'विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ति' इति निपातसंज्ञा। 'निपातोऽव्ययम्' इत्यव्ययसंज्ञा।" इति भाष्ये (3-3-3) प्रतिपादितत्वादस्याव्ययत्वमिति बोध्यम्। आगामिकालोऽस्य चोत्यार्थः। 'भविष्यति गम्यादयः' (3-3-3) इति प्रयोगोऽत्रानुसन्धेयः।

(614)

"भाजक्" (स्व.)

शीघ्रार्थकोऽयम्। भाजक् पचति। शीघ्रं पचतीत्यर्थः।

(615)

"भुवः" (स्व.)

अन्तरिक्षवाचकोऽयम्। भुवर्लोकः। 'भुवरित्यन्तरिक्षम्—भुव इत्यन्तरिक्षम्'। अत्र 'भुवश्च महाव्याहृतेः' (8-2-71) इति रुः, रेफो वा। यदा रुः—तदा 'भुवरिति' इति भवति। यदा रेफस्तदा 'भुव इति' इति सिद्ध्यति। 'भुव इत्येतदव्ययमन्तरिक्षवाचि' इति काशिका।

(616)

"भूः" (स्व.)

पृथिवीवाचको महाव्याहृतिविशेषोऽयमव्ययसंज्ञकः । 'भूः स्वाहा' ।

(617)

"भूते" (नि.)

भूतकालवाचकमिदमव्ययम् । तदुक्तम् "अव्ययमेव 'भूते' शब्दो नैषा भवतेर्निष्ठा ।" ( भाष्ये 3-2-84 ) इति ।

(618)

"भूयः" (स्व.)

पुनरर्थे वर्तते। 'भूय एव महाबाहो' (गीता 10-1) । आधिक्यार्थोऽपि, **प्रौढमनोरमायां** पठितः । '**भूयोभूयः** पुलकनिचितैरङ्गकैरेधमानाः—' '**भूयोभूयः** सविधनगरीरथ्यया पर्यटन्तम्—' (मालतीमाधवे 1-15) इत्यादिषु वीप्सायां द्विर्वचनम् । प्राथम्यार्थकोऽपि **क्वचिद्** दृश्यते।

इदमत्रावधेयम् । इदमनयोरतिशयेन बहु इत्यर्थे ईयसुन्प्रत्यये, 'बहोर्लोपो भू च बहोः' (6-4-158) इति प्रकृतेर्भू इत्यादेशे प्रत्ययाद्याकारस्य लोपेन '**भूयस्** ' इति सम्पन्नं शब्दस्वरूपमन्यत्, यस्य त्रिलिङ्गता—**भूयान्**—**भूयसी** — **भूयस्** इति । अव्ययमिदमन्यत्, ततो भिन्नम् । '**भूयसां**

स्याद् बलीयस्त्वम्' 'न खरो न च भूयसा मृदुः—' (रघुः 8-9) इत्यादिषु अनव्ययस्य भूयश्शब्दस्यैव प्रयोगः। केचित् तु नमश्शब्दस्याव्ययस्यैव यथा वचनबलात् महाकविप्रयोगबलाधानव्ययत्वं क्वचिद् दृश्यते तथाऽत्रेति वदन्ति।

'भूयशः' इत्यत्र बह्वर्थे शसि बाहुलकात् सकारस्य लोपः।

(619)

"भूरि" (स्व.)

वैपुल्यार्थकोऽयम्। स्वर्णवाचकस्तु क्लीबान्तः। 'भूरि त्वष्टेह राजति' (ऋ. वे. 6-47-19b) 'भूरिभारभराक्रान्तः' इति सुभाषिते।

(620)

"भृशम्" (स्व.)

मुहुरिति अस्यार्थः। शोभनार्थकत्वमस्य शब्दरत्नावल्यामुक्तम् 'रघुर्भृशं वक्षसि तेन ताडितः—' (रघुः 3-61)। क्रियाविशेषणमेतत्

(621)

"भो" (नि.)

खेदरुताह्वानेषु वर्तते। खेदे—'श्रान्तोऽस्मि भोः'। खेदोऽत्र घोत्यः। रुते—'सोऽहं भो भुवि भार्गवः'। आह्वाने—'भो भोस्तपस्विनः—' (शाकुन्तले १-२७/२८)।

भवच्छब्दस्य सम्बुद्धौ 'विभाषा भवद्भगवदघवताम् ओश्चावस्य' (वा. 8-3-1) इति वचनेन 'अव' इत्यस्य ओकारे, अन्यस्य रुत्वे च निष्पन्नो 'भो' शब्दश्छान्दसो लौकिकश्चान्यः। तस्यापि स्वरादिषु अव्ययार्थो निपात इति केचित्। वस्तुतस्तु—'भो ब्राह्मणाः' 'भो ब्राह्मणि' इत्यादिसिद्ध्यर्थम्—"अव्ययमेष भोश्शब्दः ; नैषा भवतः प्रकृतिः" (भाष्ये 8-3-1) इति भाष्योक्तेः अव्ययसंज्ञकोऽयमन्य इत्येव भाति। अनव्ययस्य 'हे भोः' इत्युदाहरणम्। 'भो अत्र—भोयत्र' इत्यादिसिद्ध्यर्थं 'भोभगोअघोअपूर्वस्य योऽशि' (8-3-17) इत्यादिषु तु अव्ययानव्यययोरुभयोरपि ग्रहणम्।

(622)

"भ्यसते" (नि.)

उत्तरदिग्वाचकोऽयं छान्दस इति केचित्। प्रयोगो मृग्यः।

(623)

"भ्रंशकला" (ऊ.)

ऊर्यादिषु हिंसार्थकोऽयं पठ्यते। भ्रंशकलाकृत्य = हिंसित्वेत्यर्थः। 'भ्रंसकला—' इति केचित्। परिभवार्थकत्वमस्य केचित् वदन्ति।

(624)

"म" (नि.)

वारणार्थकमिदम्। 'हुं, हु मुञ्च मम मेति च मन्दं जल्पितं जयति मानवतीनाम्।' (शृङ्गारप्रकाशे ५ प्रकाशः), 'नन न मम मा मां मा स्प्राक्षी-

निषेधपरं वचो भवति शिथिले मानग्रन्थौ तदेव विधायकम्।' (शृ. प्र. ७ प्रकाशे) इति च भोजः।

(625)

"**मङ्क्षु**" (स्व.)

शीघ्रार्थकोऽयम्। 'यदन्तिनः कटकटाहतटान् मिमङ्क्षोर्मङ्क्ष्वुदपाति परितः पटलैरलीनाम्॥' (माघे 5-37)। भृशार्थकोऽपि 'स मङ्क्षु विभ्रमैं क्रीतस्तस्या आकेकरादिभिः।' इत्यादिषु दृश्यते। 'ऋजुतया' इत्यप्यर्थोऽस्य। एवं सत्यार्थकोऽपि। एतादृशान्यव्ययानि बह्वर्थकानि यथासन्दर्भं प्रयुज्यन्ते कविभिः।

(626)

"**मत्**" (स्व.)

अनहमहं भवति, अयं त्वं सम्पद्यते इत्यर्थेऽस्मच्छब्दात् च्विप्रत्यये, 'मत्' इति प्रकृतेरादेशे च निष्पन्नमिदम्। मद्भवति। 'च्विरव्ययम्' (उणादिः) इत्यव्ययत्वम्।

(627)

"**मद्रा**" (सा.)

मद्रशब्दात् कृञो योगे 'मद्रात् परिवापणे' (5-4-67) इति परिवापणे[=मङ्गलार्थो मुण्डः—परिवापणम्]ऽर्थे गम्ये डाच्प्रत्ययः। 'ऊर्यादिच्विडाचश्च' (1-4-61) इति डाजन्तस्य गतित्वम्। मद्राकरोति माणवकं नापितः। मङ्गलार्थमुण्डनं करोतीत्यर्थः।

(628)

**"मध्या"** (ख.)

'मध्ये' इत्यर्थे छान्दसोऽयम्। '—**मध्या** कर्तोर्विततं संजभार' (ऋक्. 1-115-4)।

(629)

**"मनः"** (ख.ग.)

नियमार्थकोऽयम्। '**मनो** वर्तते'—नियमो वर्तत इत्यर्थः। **मनस्कारः**। चित्ताभोगोऽपि कृञो योगेऽस्यार्थः। '**मनो**हत्य पयः पिबति'। अत्र '**कणे-मनसी** श्रद्धाप्रतीघाते' (1-4-66) इति मनसो गतिसंज्ञायां समासे ल्यप्। श्रद्धाप्रतीघातः यावदभिलाषा, तावदिति अर्थः।

(630)

**"मनाक्"** (ख.)

'स्तोके' इत्यस्यार्थः। 'कुतूहलाक्रान्तमना **मनागभूत्**' (नैषधे 1-119)। अल्पत्वमस्य कालभेदेन, देशभेदेन, वस्तुभेदेनेत्यादिकं प्रकरणानुरोधेन ज्ञेयम्। '**मनाङ्** न भ्रष्टोऽस्मि' इत्यत्रानुशयोऽप्यस्यार्थ इति **क्षीरस्वामी**।

(631)

**"मन्ये"** (ख.)

वितर्कोऽस्यार्थः। तिङन्तप्रतिरूपकमव्ययमेतत्। उत्प्रेक्षाव्यञ्जकत्व-मस्यालङ्कारिकसम्मतम्। '**मन्ये** किन्नरमुख्यानां मौनं जगति साम्प्रतम्।

मशककणितं यत्र वीणास्वनविकल्पितम् ॥' (सुभाषितनीवी 12-8)। 'मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुत्सुकः ।' इत्यादिषु 'निश्चितम्' इत्यप्यर्थः ।

(632)

"मम" (च.)

प्रत्यगात्मसम्बन्धोऽस्यार्थः। [1]ममत्वम्, ममता, निर्ममः ।

(633)

"ममत्" (वै.)

'चन', 'चित्' इत्यनयोरन्यतरेण परस्तात्प्रयुक्तेनैवास्य प्रयोगः, स च छान्दसः। 'कदाचित्' इति समुदायस्यार्थः । 'ममचन ते मघवन्—' (ऋक्. 4-18-9)। 'ममच्चन त्वा युवतिः परास—' (ऋक्. 4-18-8) इत्यत्र तु आनन्दोऽर्थः। क्वचित् निषेधोऽप्यस्यार्थत्वेन निर्दिष्टः। सर्वत्र बाहुलकत्वेन, छान्दसत्वेन वा निर्वाहः ।

(634)

"मयम्" (वै.)

सुखार्थकोऽयं छान्दसः। 'सरस्वती नः सुभगा मयस्करत्' (ऋक्. 1-89-3) 'नमः शङ्कराय च मयस्कराय च' (तै. सं. 4-5-8-1)।

---

1. अत्र त्वतलादिप्रत्ययानां विभक्त्यन्तात् (परिनिष्ठितात्) अविधानात्, अस्मच्छब्दस्य षष्ठ्यन्तप्रतिरूपकस्याव्ययस्य ममेत्यस्मादुत्पत्तिरिति ज्ञेयम्। निर्गतो 'मम' इत्यस्मात् 'निर्ममः' इत्यत्रापि एवमेव। एवं 'मेतमस्य यथा ममत्वम्' इत्यत्रापि बोध्यम् ।

(635)

"मरुत्" (उ.)

'मरुच्छब्दस्योपसंख्यानम्' (वा. 1-4-59) इति वचनात् उपसर्गसंज्ञा। मरुद्दत्तो [1]मरुत्तः।

(636)

"मर्या" (चा.)

सीमबन्धने वर्ततेऽयम्। **मर्या** आदीयते इति **मर्यादा**। 'पेशो **मर्या** अपेशसे' (तै. सं. 7-4-20-1) इत्यत्र मनुष्यार्थकत्वमपि छान्दसत्वेनेति ज्ञेयम्। यद्यपि अव्ययत्वमस्योक्तं, तथापि अव्ययत्वे निदानं न पश्यामः। आकृतिगणत्वेन चादिषु **कैश्चित्** पठ्यत—इत्येतद् वाव्ययत्वे निदानम्।

(637)

"मसमसा" (ऊ.)

हिंसार्थकोऽयमूर्यादिः। **'मस्मसा'** इति च ऊर्यादिषु। 'सञ्चूर्णने, संवरणे च' इति अर्थभेदमन्येऽभ्युपगच्छन्ति। **मसमसाकृत्य**—हिंसित्वेत्यर्थः।

---

1. 'अच उपसर्गात् तः' (7-4-47) इति मरुत्शब्दात् तः। अस्यानुपसर्गसंज्ञाभावात् 'मरुत्त' इति रूपं न सिद्ध्येत। यद्यपि 'तप पर्वमरुद्भ्याम्—' (वा 5-2-122) इति वचनेनैव 'मरुत्तः' इत्यस्य साधनम् भविष्यति; तथापि तत्र छन्दोऽधिकारान् लोकेऽपि प्रयोगार्थमस्योपसंख्यानमिति मन्तव्यम्। नच 'पर्वतः' इत्यस्यापि तथैव निष्पाद्यमानत्वात् तस्यापि लोके प्रयोगो न स्यादिति वाच्यम्—'यासुपा कर्तव्या यथानुगमः क्रियते' (भाष्यम्) इति न्यायेन वैशद्यार्थमस्योपसर्गत्वाश्रयणात्। इयमस्योपसर्गसंज्ञा तत्त्वविचारेण: अस्यानुपयोगाभावात्। स्पष्टमिदं प्रकृतस्थले कैयटादिग्रन्थेष्वस्ति तावत्।

(638)

" महत् " (स.)

ऊर्ध्वस्थिते लोकभेदे प्रसिद्धः। महर्लोकः। वैपुल्यवाचकः तकारान्तो महच्छब्दोऽन्यः। सप्तव्याहृतिवाचकोऽयमन्यः। 'महदादितश्च कार्यम्' इति लोकान्तरवाचकत्वेन समस्तप्रयोगो भ्रान्तिमूलक इति तिलकः।

(639)

" मा " (च.)

निषेधाशङ्कावारणादयोऽस्यार्थाः। निषेधे—'अरसिकेषु कवित्व-निवेदनं शिरसि मा लिख मा लिख मा लिख'। आशङ्कायाम्—'मा भविष्यति शीतार्ता जानकी हृदयस्थिता।' 'मा करिष्यति साहसम्'। वारणे—'मा पिब सलिलं शीतं पिब सन्ततं तदेव बहयाचे:'।

ङिदनुबन्धविशिष्टो 'माङ्' इत्ययमन्य एतत्समानार्थकः, अयमप्यन्यः। तदेतदुत्तरत्र व्यक्तीभविष्यति। 'मा स्वय मन्युमुत्पाद्य—' (प्रतिमानाटके 1-10) इत्यादिषु 'मा' इत्यङित्। तेन न क्त्वाप्रत्ययस्य प्रतिबन्ध इति ज्ञेयम्।

(640)

" माकिः " (चा.)

वारणार्थकोऽयम्। 'रक्षा माकिर्नो अघशंस ईशत'। (तै. सं. 1-4-24-1) 'पापिष्ठाः राक्षसाः अस्माकं मा प्रभवन्तु' इत्यर्थः। वर्जनार्थकोऽपि क्वचित् पठ्यते। 'माकिस्' इति शाकटायनः।

(641)

## "माकिम्" (च.)

वर्जनार्थकोऽयमिति **प्रौढमनोरमा** । पूर्वोपात्तस्य **'माकिः'** इत्यस्यैव पाठभेदोऽयमिति **बहवः** ।

(642)

## "माङ्" (च.)

निषेधे आशङ्कायां च वर्तते । निषेधे—**मा** कार्षीत् । '**मा मा** मानद' । आशङ्कायाम्—'अस्याकृष्टं धनुर्**मा**—' । **माङो**ऽस्य स्वरादिषु पाठः चिन्त्यप्रयोजन इति **नागेशः** । **मा—माङ्** इत्युभावपि समानार्थकौ; तथापि '**माङि** लुङ्' (3-3-175) इति माङो योगे सर्वलकारापवादो लुङेव भवति । माङो योगे 'न माङ्योगे' (6-4-74) इत्यडागमोऽपि न भवति । इदञ्च प्रायिकमिति **केचित्** । वस्तुतस्तु यत्र माशब्दयोगेऽप्यडागमो लक्ष्यते, तत्र माङ्समानार्थकस्य '**मा**' इत्यव्ययस्य प्रयोग इति न शास्त्रस्य सङ्कोचः कार्यः । [1]'**मा** जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति' (माघे 2-45) ।

1. 'माङ्याक्रोशे' (वा.3-2-124) इति आक्रोशे गम्ये माङ्युपपदे शतृः कृता । एवम्, 'मा पचमानः' इत्यादयपि उदाहार्यम् ।

(643)

"मातावत्" (नि.)

'मा+तावत्' इति निपातद्वयसमुदायोऽयं निषेधानिश्चययोर्वर्तते। निषेधे—मातावद् वद। अनिश्चये—मातावद् भुङ्क्ष्व। 'मातावद् भोः' इत्यत्र अमर्षोऽपि निषेध एवान्तर्भवतीति तिलकः।

एवम् 'मा+स्म' इत्यपि निपातद्वयसमुदायो वारणे वर्तते। 'इत-रावसथेषु मास्म भूद् अपि मे जन्म चतुर्मुखात्मना' (स्तोत्ररत्नम् 55)।

(644)

"मात्रायाम्" (च.)

अल्पपरिमाणवाचकोऽयम्। 'मात्रायां भोजकः'। विभक्तिप्रति-रूपकमिदम्।

(645)

"मास्य" (च.)

अनिर्दिष्टार्थकोऽयं चादिषु कैश्चित् पठ्यते। छान्दसोऽयम्।

(646)

"मिथः" (स्व.)

रहोऽन्योन्यार्थयोरयं वर्तते। रहसि—'तथापि वाचालतया युनक्ति मां मिथस्त्वदाभाषणलोलुपं मनः' (माघे 1-40)। अन्योन्यार्थे—'मिथः सम्प्रवदन्ते पण्डिताः'। छन्दसि तु 'अनुक्रमेण' इत्यर्थेऽपि दृश्यते। यथा—'सूर्या मासा मिथ उच्चरातः॥' (ऋक् 10-68-10)।

(647)

"मिथु" (स्व)

'द्वौ द्वौ' इत्यर्थेऽस्य वृत्तिः। अनृतार्थकोऽयमिति केचित्। 'मिथु मन्त्रयेते'। 'मिथुर्' इति केचित् पठन्ति। 'मिथुः क्रीडन्ति कामिनः'।

एवम् 'मिथुनम्' इत्यपि युग्मार्थकमव्ययं केचित् पठन्ति। 'यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्' (रामायणे) इत्यादिषु क्लीबन्तस्यैव प्रसिद्धिः। 'मिथुनं रमन्ते' इत्यत्र युग्मार्थकत्वं क्लीबत्वेऽपि तुल्यम्। एवं तिलकोदाहृते 'मिथुनं धावन्ति विद्याधराः' इत्यत्रापि ज्ञेयम्।

(648)

"मिथ्या" (स्व.)

असत्यार्थकोऽयम्। 'मणौ महानील इव प्रभावादल्पप्रमाणोऽपि यथा न मिथ्या।' (रघुः 18-42)।

अस्य साक्षात्प्रभृतिष्वपि पाठात् कृञो योगे विभाषा गतिसंज्ञा। तेन मिथ्याकृत्य इत्यत्र समासे क्त्वो ल्यप्। 'पदं मिथ्या कारयते'। सापचारं स्वरादिदुष्टं असकृत् उच्चारयतीत्यर्थः। 'मिथ्योपपदात् कृञोऽभ्यासे' (1-3-71) इति करोतेर्ण्यन्तात् आत्मनेपदमत्र।

अनव्ययमपि मिथ्येति पदमस्ति, यस्य 'निर्मिथ्यः' इत्यादिषु समास उपलम्भ इत्याहुः।

(649)

**"मुकुम्" (च.)**

निर्वाण - भक्तिरस- प्रेमादिवाचकमिदमिति **शब्दकल्पद्रुमादिषु** प्रतिपादितम् । '**मुकुं** भक्तिरसप्रेमवचनं वेदसम्मतम् । तद् ददाति च यो देवो **मुकुन्द**स्तेन कीर्तितः । ॥ ' इति **ब्रह्मवैवर्त** (श्रीकृष्णजन्मखण्डे 110 अध्याय:) वचनमपि प्रमाणत्वेनोपात्तं तत्र ।

(650)

**"मुधा" (स्व.)**

निष्फलमित्यर्थः । 'प्रीतिकरणे' इत्यन्ये । 'किं पौलोमि **मुधा** कुधा मयि, न तु स्वप्नेऽपि ते विप्रियम्—' । मिथ्यार्थकत्वमस्य **केचिदाहुः**— यथा '**मुधा** ज्ञानं, **मुधा** सेवा, **मुधा** वृत्तं, **मुधा** श्रमः ।' इत्यत्र । वस्तुतोऽत्रापि व्यर्थत्वमेव । एवम्, 'मुग्धे ! **मुधा** ताम्यसि' इत्यत्रापि ज्ञेयम् ।

(651)

**"मुहुः" (स्व )**

पुनः पुनरित्यर्थे स्वरादिरयम् । 'इह **मुहु**र्मुदितैः कलभैरवः' (माघे 4-60) । वीप्सायां द्विर्वचनमपि भवति; यथा—'**मुहुर्मुहु**मुह्यति सा मृगाक्षी' 'गुरूणां सन्निधानेऽपि कः कूजति **मुहुर्मुहुः**' । इति । एकत्रैव वाक्ये भिन्न-भिन्नेषु स्थलेषु यदि प्रयुज्यते—तदानीं क्वचित् 'एकदा, अन्यदा' इत्यपि सन्दर्भानुसारेणास्यार्थो भिवते । यथा— '**मुहु**रुत्पतते बाला, **मुहुः** पतति विह्वला । **मुहु**रालीयते भीता **मुहुः** क्रोशति रोदिति ॥' (मुद्राराक्षसे 5-3) इति ।

(652)

" मृधा " (स्व.)

असत्यार्थकमिदम्। 'चुम्बिते वदने तन्वी मृधा दष्टेव रोदिति'। केचित् 'मृधम्' इति अलीकार्थे पठन्ति।

(653)

" मृषा " (स्व.)

अलीकार्थकोऽयम्। 'यद् वक्त्रं मुहुरीक्षसे न धनिनां, ब्रूषे न चाटून् मृषा—'। [1]मृषोद्यम्। 'मृषा वदति दुर्जनः'।

(654)

" मे " (नि.)

अस्मच्छब्दतृतीयाविभक्तेरर्थे निपातोऽयम्। 'श्रुतं मे भरतर्षभ'। मया श्रुतमित्यर्थः। 'मयेत्यर्थे च मे इति' इति त्रिकाण्डशेषः।

(655)

" मो " (नि.)

निषेधार्थकोऽयं छान्दसः। लोके तु 'मा' इत्येव।

(656)

" यच्च " (च.)

अनवक्लृप्तिगर्हामर्षाश्चर्येषु वर्ततेऽयम्। अनवक्लृप्तौ—'नावकल्पयामि, यच्च तत्रभवान् वृषलं याजयेत्'। गर्हायाम्—'गर्हामहे यच्च तत्रभवान्

---

1. मृषोपपदात् वदेः क्यपि सम्प्रसारणादिषु रूपमेवम्। 'राजसूयसूर्यमृषोद्य—'(3-1-114) इति निपातनात् साधुः।

स्त्रियं घातयेत्' । अमर्षे—'न मर्षयामि यच्च तत्रभवान् बालं घातयेत्' । आश्चर्ये—'आश्चर्यम्, यच्च तत्रभवान् शिशुमध्यापयेत्'। अत्र सर्वत्र 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' (3-3-145) इति लिङ्। यत्+च इति निपातद्वयसमुदायोऽयम् ।

(657)

"यतः" (आ.)

हेतुरस्यार्थः। येन, यस्मिन् वा इत्यर्थे आद्यादित्वात् यच्छब्दात् सार्वविभक्तिकस्तसिप्रत्ययः। तसिप्रत्ययस्य विभक्तिसंज्ञकत्वात् 'त्यदादीनाम्—' (7-2-102) इति अकारे, पररूपे च रूपम्। तृतीयार्थे—'आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्।' (मनुः 2-117)। सप्तम्यर्थे—'अपुतयेन्दुना सार्धं तां प्रव्रज गता यतः।' (भ. का. 6-26) । यतः यत्रेत्यर्थः ।

पञ्चम्यादिष्वपि तसिप्रत्यये यत इति सम्पद्यत एव। 'यतः प्रवृत्तिर्भूतानां—' (गीता 18-46) इत्यत्र यथा।

यतो भवान्, यतो भवन्तम्, यतो भवते, इत्यादिषु तु 'इतराभ्योऽपि दृश्यन्ते' (5-3-14) इति तसिल्प्रत्यय इति ज्ञेयम्। अयान् विशेषः—'इतराभ्यः—' (5-3-14) इत्यत्र 'भवदादिभिर्योग इति वक्तव्यम्; के पुनर्भवदादयः? भवान्, दीर्घायुः, देवानांप्रियः, आयुष्मान् इति' (भाष्यम् 5-3-14) इति वचनात्, 'यतो भवान्, यतो दीर्घायुः' इत्यादिषु स्थलेष्वेव (भवदादिभिरुपपदैस्सह प्रयोग एव) तसिल् इति। एवमेव 'कुतो भवान् ततो भवान्' इत्यादिष्वपि स्वयमूह्यम् ।

(658)

"यत्" (च.)

हेत्वर्थकोऽयम् । 'अत्र स्थिता तृणमदात् बहुशो यदेभ्यः सीता ततो हरिणकैर्न विमुच्यते स्म' (उत्तररामचरिते) । 'यद् अयमधीते, तज्जानाति' ।

यत् तत इत्येतौ मिलितावेव हेत्वर्थबोधकौ शब्दशक्तिस्वाभाव्यादित्यवधेयम् ।

'यदाप्रभृति' इत्यर्थे 'यत्प्रभृति' इति तिष्ठद्गुगणे पठ्यते । क्रियाविशेषणमेतत् । 'यत्प्रभृति तामपश्यस्तत्प्रभृति त्वं भृशं मुग्धः' ।

(659)

"यत्र" (त.)

सप्तम्यर्थकोऽयम् । यच्छब्दात् 'सप्तम्यास्त्रल्' (5-3-10) इति त्रल्प्रत्यये, त्यदाद्यत्वे पररूपे च रूपमेवम् । 'यत्रकुल कुले वासः—' ।

अनवक्लृप्तिगर्हामर्षाश्चर्येष्वपि वर्तते । यथा—'नावकल्पयामि गर्हे, न मर्षये, आश्चर्यं वा, यत्र भवान् बालं घातयेत्' इति । एष्वर्थेषु चादिरयम् ।

(660)

"यथा" (त.)

योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु वर्तते । योग्यतायाम्—यथाश्रुतम दक्षिणा । श्रुते योग्या दक्षिणा इत्यर्थः । वीप्सायाम्—यथावृद्धं ब्राह्मणान् आमन्त्रयस्व । ये ये वृद्धाः यथावृद्धम् इति वीप्साऽत्र । पदार्थानति-

वृत्तौ—शक्तिमनतिक्रम्य—**यथाशक्ति** वक्ति । सादृश्ये—'वितरति गुरुः प्राज्ञे विद्यां **यथैव** तथा जडे' (उत्तररामचरिते 2-4)।

अनुमानोदाहरणादिष्वपि प्रसिद्धोऽयम् । अनुमाने—'**चौरोऽयम्**, **यथाऽस्य** श्लिष्टे भ्रुवौ'। उदाहरणे—'**तद्यथाऽनुश्रूयते** अभक्ष्यो ग्राम्यकुक्कुट इति' (महाभाष्ये पस्पशायाम्)।

'यथाऽऽज्ञापयति देवः' इत्यादिषु तु पदार्थानतिवृत्तिरेवार्थः।

प्रायेण 'तथा' इति प्रतिनिर्देशेन सहैवास्य प्रयोगः। 'मन्दं मन्दं नुदति पवनश्चानुकूलो **यथा** त्वां—' (मेघसन्देशे १-९) इत्यादिषु तु **अर्थसिद्धत्वेन** 'तथा' इति विनाऽपि प्रयोगः।

[1]**यथाकथाच**, **यथाकथञ्चित्**, **यथैव**, **यथावा**, **यथापि**, **यथाहि**, **यथातथावापि** इत्यादयो निपातसमुदाया यथायथं तत्तदर्थेषु वर्तन्ते।

**यथाकामम्**, **यथाक्रमम्**, **यथागतम्**, [2]**यथातथम्**, **यथापूर्वम्**,

---

1. 'यथाकथाच अनादरे' इति क्षीरस्वामी। 'कथम्' इत्यर्थे 'कथा' इत्यपि अव्ययमस्तीत्यनेन ज्ञायते। 'यथाकथाच दीयते' इति तिलकोऽप्युदाजहार। एवम् 'यथाकथञ्चित्' इत्यप्यनादरार्थकं वेदितव्यम्।

2. पदार्थानतिवृत्तावव्ययीभावसमासे नपुंसकह्रस्वे च रूपमेवम्। पाक्षिकं क्लीबत्वम्।

[1]यथायथम्, यथार्थम्, यथार्हम्, यथाशक्ति, यथांशम्, यथाशास्त्रम्, यथास्वम्, [2]यथाहिरुकम्, यथेप्सितम्, यथेष्टम्, यथोचितम् इत्यादयोऽव्ययीभावसमासेऽव्ययसंज्ञका इति ज्ञेयम्। योग्यतादिष्वत्र यथासम्भवमर्थाः स्वयमेवोह्याः।

(661)

"यदा" (त. च.)

यच्छब्दात् कालवाचकात् 'सर्वैकान्यकिंयत्तदः काले—' (5-3-15) इति दाप्रत्यये त्यदाद्यत्वपररूपयोश्च रूपमेवम्। यदा = यस्मिन् काले इत्यर्थः। 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' (गीता 4-7)। हेत्वर्थकत्वमपि 'यदा जनैस्सर्वगतस्त्वमुच्यसे' (कुमार-5-58) इत्यादिषु दृश्यते। तदानीं चादिषु पाठात् तथात्वमिति बोध्यम्।

यदान्त, यदावा, यदैव, यदाप्रभृति इत्यादयो निपातसमुदायाः सन्दर्भानुसारेणोच्चावचेष्वर्थेषु कविभिः प्रयुज्यन्ते। तानि यथोचितं स्वयमेवोह्यानि।

---

1. 'यथास्वे यथायथम्' (8-1-14) इत्याष्टमिकद्विर्वचनप्रकरणे निपातनात् साधुः। यथात्म आत्मीयम्, तस्मिन् इत्यर्थः। 'गताः सर्वे यथायथम्'। अत्र निपातनात् यथाशब्दस्य द्विर्वचनम्, पक्षे क्लीबत्वं च इति बोध्यम्। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (1-2-47) इत्युत्तरभागे ह्रस्वः। अत्रैव सूत्रे निर्देशात् 'यथास्वम्' इत्यत्रापि पदार्थानतिवृत्त्याव्ययीभावसमासे क्लीबत्वं पाक्षिकमिति ज्ञेयम्।
2. अत्र शरत्प्रभृतिषु (5-4-107) पाठात् समासान्तटच्प्रत्ययः।

(662)

"यदि" (च.)

पक्षान्तरे, सम्भावनायां च वर्ततेऽयम्। गर्हाविकल्पावपि मेदिन्यामुक्तौ। पक्षान्तरे—'यदि मतम् शब्दोऽनित्य इति?'। सम्भावनायाम्—'यदि सर्वमनित्यमिदं न भवेत् इह जन्मनि कस्य रतिर्भवेत्'। 'यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः' इत्यादिष्वपि सम्भावनैवार्थः।

**यदिवा** इति विकल्पार्थे। यथा—'यद्वा जयेम **यदिवा** नो जयेयुः' (गीता 2-6)।

**यद्यपि** इत्यर्धाङ्गीकारे निपातसमुदायः। 'यद्यप्यत्र न सन्दृष्टं परार्थप्रतिपादनम्'। 'तथापि' इत्यनेन साकमेवायं प्रयुज्यते—स्वाभाव्यात्।

**यदिच, यदिकिञ्चित्, यद्येवम्, यदिनाम** इत्यादयो निपातसमुदाया यथासम्भवमर्थान्तरेषु बोध्याः। **यदिपरम्** इत्यपि समुदितं पक्षान्तरद्योतकमव्ययम् प्राचीनतर्कग्रन्थेषु प्रसिद्धम्।

(663)

"यदुत" (च.)

वाक्यार्थनिर्देशे वर्ततेऽयम्। 'स त्वया वाच्यः—**यदुत इहागम्यताम्**'। '**यद्+उत**' इति निपातद्वयसमुदायोऽयम्।

(664)

"यद्युवा" (नि.)

**यदि+उ+वा** इति निपातत्रयसमुदायोऽयं यदर्थे वर्तते। 'यद्युवा उभयं चिकीर्षेत् हौत्रं ब्रह्मत्वं च'। छान्दसोऽयमिति **केचित्**।

(665)

"यद्वा"(नि.)

पक्षान्तरेऽयम्। 'यद्वाऽऽत्मानं सकलवपुषामेकमन्तर्बहिःस्थम्'।

(666)

"यम्" (च.)

'तथैव' इत्यर्थे चादिषु पठ्यते। अतीवाप्रसिद्धोऽयम्।

(667)

"यर्हि" (त.)

सप्तम्यन्ते वर्तमानात् यच्छब्दात् 'अनद्यतने र्हिल् अन्यतरस्याम्' (5-3-21) इति र्हिल् प्रत्ययः। 'यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम्।' (भागवते 10-3-1)।

(668)

"याति" (ति.प्र.)

'शक्यते' इत्यर्थे तिङन्तप्रतिरूपकमव्ययमिदम्। 'इदमेव कर्तुं याति': 'नेतुं नाभिरितो न याति विदिशं भङ्क्तुं........गच्छति' (तिलकः)।

(669)

"यात्" (वै.)

'यावत्पर्यन्तम्' इत्यर्थे छान्दसोऽयम्। 'यान्नु यावस्ततनन यात् उपासः।' (ऋक् 7-88-4)।

## (670)

## "यावत्" (अ.)

साकल्यावधिमानावधारणकालहेतुसीमादिष्वर्थेषु प्रसिद्धोऽयम्। अव्युत्पन्नमिदमिति बहवः। यच्छब्दात् 'यत्तदेतेभ्यः परिमाणे वतुप्' (5-2-39) इति वतुप्प्रत्यये, 'आ सर्वनाम्नः' (6-3-91) इति आकारे समुदायस्य चादिषु पाठादव्ययत्वमिति **केचित्**। **यावान्, यावती यावत्** इति परिमाणवाचकाः शब्दा व्युत्पन्नाः त्रिलिङ्गका एतत्समानार्था इतो भिन्नाः।

साकल्ये—**यावत्** कार्यं तावत् कुरु। (सकलं कुर्वित्यर्थः)। **यावत्ता-वच्छब्दौ** परस्परसापेक्षावेव स्वस्वार्थमवगमयतः, शब्दशक्तिस्वाभाव्यात्। क्वचित् केवलावपीत्यवधेयम्।

अवधौ—मूलात् शाखां **यावत्** प्रकाण्डः। [1]**'यावज्जीवमग्निहोत्रं जुहोति'**।

माने—[2]**यावदमत्रं** ब्राह्मणानामन्त्रयस्व।

अवधारणे—**यावद्** दत्तं तावद्भुक्तम्।

[3]काले—**'यावद्** गिरः खे मरुतां चरन्ति' (कुमार. 3-72)।

---

1. 'यावति विन्दजीवोः' (3-4-30) इति जीवतेर्णमुल्। 'यावज्जीवम्' इत्यपि अव्ययमेव।

2. 'यावदवधारणे' (2-1-8) इति अव्ययीभावसमासे 'यावदमत्रं' इत्यस्याव्ययत्वम्। अमत्रम्—पात्रम्।

3. परिमाणार्थे निष्पन्नत्वादस्य कालार्थकत्वमपि इति ज्ञेयम्। परिमाणं त्रिविधः—देशतः, कालतः, वस्तुत इति। कालस्य इदमुदाहरणम्। देशे तु 'यावत्पुरम्' इति। वस्तुपरिमाणस्य 'यावत्कार्यम्' इति।

हेतौ—'**यावद्** भवत्याहितसायकस्य' (कुमार॰ 3-4)।

सीम्नि—**यावत्**पुरं वृष्टो देवः।

सम्भ्रमविवरणादयोऽप्यर्थाः।

सम्भ्रमे—**यावत्** सर्पकोडरम्। विवरणे—'बिडौजाः मरुत्वान्, इन्द्र इति **यावत्**'। 'स **यावत्** विप्रतां गतः' इत्यत्र पक्षान्तरेऽपि क्वचिदयं पठ्यते।

'भविष्यदर्थं सातत्यं **यावद्** अप्रतियुग् वदेत्' इति **त्रिकाण्डशेषः**। अस्यायमर्थः—तावच्छब्दासहचरितः केवलो **यावच्छब्दो** भविष्यदर्थं सातत्यं च अभिदधातीति। तेन 'शङ्के सम्प्रति **यावद्** अभ्युदयते तत् त्वष्टृटङ्कोन्मृजारज्यद्विम्बरजश्छटावलयितो देवस्त्विषामीश्वरः।' (अनर्घराघवे 2-6) इत्यत्र 'यावत्पुरानिपातयोर्लट्' (3-3-4) इति भविष्यदर्थे लट्।

अधिकारार्थेऽपि क्वचित् प्रयुज्यते। 'अधिकारः सीमेव' इति **तिलकः**।

(671)

"**यावता**" (नि.)

पक्षान्तरार्थकोऽयं चादिषु पठ्यते। **तिलकादिभि**र्व्याख्यातश्च। उदाहरणं मृग्यम्।

(672)

"**यावत्तावत्**" (नि.)

'बीजगणितप्रसिद्धे अव्यक्तमानानयनाय कल्प्ये प्रथमे राशौ अयं प्रसिद्धः' इति **वाचस्पत्यम्**। यावच्च तावच्च इति वृत्तिः।

(673)

" युक्तम् " (स्व.)

'न्याय्ये' इत्यस्यार्थः । 'युक्तं सिताम्बराणां तुम्बग्रहणं कुटुम्बपरिहरणम्' इति वर्धमानः । ' पौरव ! युक्तं नाम ते ' (शाकुन्तले 5-20-21) ।

(674)

" युक् " (नि.)

निन्दार्थकोऽयमिति शब्दकल्पद्रुमः । उदाहरणं मृग्यम् ।

(675)

"युगपत् " (स्व.)

'एककाले' इत्यर्थः । 'तद्वल्गुना युगपद् उन्मिषितेन तावत्' (रघु. 5-68)। क्रियासमभिहारोऽपि क्वचिदर्थः—'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (न्यायसूत्रम् 1.1-16)। उपदेशे तवर्गतृतीयान्तोऽयम्। अन्यथा 'यौगपद्यम्' इत्यत्र दकारो न श्रूयेत।

(676)

" युत् " (च.)

कुत्सार्थकोऽयं चादिषु प्रौढमनोरमायां पठितः । क्लीबान्तोऽयमिति केचित् । 'पुत्' इत्यस्य निन्दार्थकस्य पाठभेदोऽयमिति परे ।

(677)

"युष्मत्" (नि.)

युष्मच्छब्दसमानार्थकोऽविभक्तिकोऽयमिति 'अव्ययं कतियुष्मदस्मदः' इति लिङ्गानुशासनबलात् ज्ञायते। उदाहरणं मृग्यम्।

(678)

"यूपत्" (नि.)

प्रश्नवितर्कप्रशंसासु वृत्तिरस्य। प्रश्ने—'यूपत् पठति ?'। किं पठतीत्यर्थः। वितर्के—स्थाणुः ? यूपत् पुरुषः ?। प्रशंसायाम्—यूपद् गायति। तिलकादिभिर्व्याकृतोऽयम्।

(679)

"येन" (च.)

हेत्वर्थकोऽयम्, चादिः। 'वितर गिरमुदारां येन मूकाः पिकाः स्युः'। 'गिरिं येन ययौ' इत्यत्र लक्षणार्थकोऽपि। विभक्तिप्रतिरूपकमिदम्। गिरिं लक्षीकृत्य ययावित्यर्थः इति तिलकः।

(680)

"रघुया" (वै.)

शीघ्रमित्यर्थे छान्दसोऽयम्। 'त्रयो न पप्तू रघुया परिज्मन्' (ऋक्-2-28-4)। अव्युत्पन्नमिदम्।

(681)

"रहः" (स्व.)

अप्रकाशार्थकोऽयम्। 'रहो मन्त्रयेते'। 'रहो निधुवनेऽपि स्यात्—' इति **रभसः**। 'देशादन्यत्र **रहो**ऽव्ययम्' इति **उज्ज्वलदत्तः** (4-2-14)। अयं भावः—विविक्तदेशवाचकाद् रहश्शब्दाद् भिन्नो रहश्शब्द एवाव्ययम्—इति। **मेदिनी**प्रभृतिषु क्लीबान्त एवायं पठितः।

(682)

"**रात्रौ**" (च.)

निशार्थकोऽयं चादिः। विभक्तिप्रतिरूपकमव्ययम्। '**रात्रौ** वृत्तं तु द्रक्ष्यसि'। [1]'रात्रौचरः।

(683)

"**रे**" (च.)

हीनानां साक्षेपे सम्बोधने वर्ततेऽयम्। '**रे** चोर'। 'हते भीष्मे हते द्रोणे किं ह रे! त्वं करिष्यसि?'। '[2]**रेरे** गूर्जर जर्जरोऽसि समरे—' (प्रतापरुद्रीये 1-31)।

---

1. केचित्तु अत्र, 'तत्पुरुषे कृति बहुलम्' (6-3-14) इति सप्तम्या अलुक्—इति अभ्युपगम्य अनव्ययमेव रात्रिशब्दं मन्यन्ते।
2. 'वाक्यादेरामन्त्रितस्य असूयासम्मतिकोपकुत्सनभर्त्सनेषु' (8-1-8) इति द्विरुक्तिः। कुत्सने भर्त्सने वा द्विर्वचनमत्र।

(684)

### "रै" (च.)

अनादरदानयोरयं वर्तते। अनादरे—'त्वं ह रै किं प्रबुध्यसि!'। दाने—[1]रैकरोति। परस्मै यत्किञ्चिद् ददातीत्यर्थः।

(685)

### "रोचना" (सा.)

श्रद्धोत्पादने, प्रशंसायां च वर्तते। रोचनाकृत्य। साक्षात्प्रभृतित्वात् कृञो योगे विभाषा गतिसंज्ञा। तेन समासे ल्यप्। 'लोचना' इति पठित्वा, दीप्त्यर्थकत्वं केचिदाहुः।

(686)

### "रोदसी" (स्व.)

द्यावापृथिव्यर्थेऽव्ययमेतत्। तदुक्तं सुधायाम्—'रोदसी इत्यव्ययमप्यस्ति' इति (3-3-229)। शब्दशक्तिस्वाभाव्यादधिकरणशक्तिप्रधानोऽयम्। 'वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी—'। भूम्यर्थकत्वमप्यस्य क्वचिद् दृष्टम्। एवं स्वर्गार्थकत्वमपि।

---

1. धनवाचको 'रै' शब्दोऽन्यः। केचित् तस्यैवात्र प्रयोगं मन्यन्ते।

(687)

"रोहिष्यै" (कृ.)

रोहणाय इत्यर्थः । रुहतेश्छन्दसि तुमुनर्थे इष्यैप्रत्ययः । 'प्रयै रोहिष्यै अव्यथिष्यै' (3-4-10) इति निपातनात् साधुः । एजन्तकृत्त्वात् 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम् । 'अपामोषधीनां रोहिष्यै—' ।

(688)

"लघु" (स.)

शैघ्र्ये वर्ततेऽयम् । क्रियाविशेषणमेतत् । क्लीबान्तत्वमेवास्य बहुसम्मतम् । 'सत्त्वं लघु प्रकाशकम्—' (सांख्यकारिका-१३) । 'रघु' इत्यन्ये पठन्ति ।

(689)

"लवणम्" (सा.)

रुच्यर्थकोऽयम् । लवणंकृत्य । साक्षात्प्रभृतिषु पाठाद् कृञो योगे गतिसंज्ञायां समासे ल्यप् । 'गतिसंज्ञासन्नियोगेन लवणादीनां मकारान्तत्वं निपात्यते' इति काशिका (1-4-74) । 'साक्षात्कृतेऽथ लवणंकृति दिङ्मुखानाम्—' (गणरत्नोद्धृतश्छित्तपश्लोकः) ।

अस्मादेवाभिरुच्यर्थकादव्ययात् भावार्थे ब्राह्मणादित्वेन (5-1-124) ष्यञ्प्रत्यये, 'अव्ययानां भमात्रे—' (वा. 6-4-144) इति टिलोपे च 'लावण्यम्' इति सम्पद्यते ।

(690)

**"लूनयवम्"** (ति.)

लूना यवा यस्मिन् काले स कालो **लूनयवम्**। तिष्ठद्गुगणे पाठाद-व्ययीभावत्वेऽव्ययत्वम्। देशवाचकत्वे तु बहुव्रीहिसमास एव। तदानीं नाव्ययत्वम्।

(691)

**"लूयमानयवम्"** (ति.)

लूयमाना यवा यस्मिन् काले स कालो **लूयमानयवम्**। अयमपि तिष्ठ-द्गुगणे पठितः। लूयमानाः यवा यस्मिन् देशे इति देशविवक्षायां तु बहुव्रीहि-समास एव।

(692)

**"लोचना"** (सा.)

दीप्त्यर्थकोऽयम्। साक्षात्प्रभृतिषु 'रोचना' इत्यस्य स्थाने कैश्चित् पठितः। **लोचना**कृत्य। प्रदीप्येत्यर्थः।

(693)

**"ल्यप्"** (कृ.)

क्त्वाप्रत्ययस्थानिकत्वादस्याव्ययत्वम्। समास एवायं प्रवर्तते। प्रकृत्य। 'कृष्णं वासो यजमानः परिधापयित्वा' इत्यादिषु छान्दसस्थलेषु क्वचित् 'क्त्वा-ऽपि च्छन्दसि' (7-1-38) इति ल्यपः प्रवृत्तिर्न; क्त्वा च भवति। 'अर्च्य देवं नद्यां गतः' इत्यादिषु तु आर्षत्वात् असमासस्थलेऽपि ल्यप् प्रवृत्तः।

लोके तु समास एव ल्यप् न्याय्यः। अथ ल्यबाश्रितानि कार्याणि। [1]साढ्यै। प्रशमय्य गतः। [3]प्रापय्य—प्राप्य वा गतः। 'दान्त्यनुपूर्वं [4]वियूय'। 'यत्रा यो दक्षिणा परिप्लूय'। [5]प्रक्षीय।

(6९4)

"व" (च.)

सादृश्यार्थकोऽयम्। इवशब्दस्य स्थाने क्वचित् प्रयुज्यते। 'नारिकेलासवं योधाः शात्रवं व पपुर्यशः॥' (रघुः 4-42)। 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' (महाभारते मङ्किगीतायां १७७-१२)। दम्पतीव, जम्पतीव, रोदसीव। अयं पादपूरणेऽपीति केचित्।

मन्त्रशास्त्रे बीजाक्षरत्वे त्वस्य मकारानुसंश्लिष्टत्वम 'वम्' इति। तस्याप्यव्ययत्वमाहुः। तथाहि 'बीजकूटमालामन्त्राः' इति तिलकोऽव्ययकाण्डे पपाठ। बीजमन्त्राक्षराणां कूटमन्त्राक्षराणां मालामन्त्राक्षराणां च अव्ययत्वमिति तस्य वाक्यस्यार्थः। इयमेव गतिः — 'गं गजाननाय नमः' 'जं जयत्सेनाय नमः' इत्यादिष्वपि ज्ञेया।

---

1. अत्र षहधातोः क्त्वाप्रत्यये, छान्दसत्वात्, 'साढ्यै साढ्वा साढेति निगमे' (6-3-113) इत्यत्र निपातनाद्वा असमासेऽपि ल्यप्। ल्यपो 'ध्यै' इत्यादेशः। ऋद्ध्यादिषु रूपमेवं सम्पद्यते।
2. 'ल्यपि लघुपूर्वात्' (6-4-56) इति ल्यबाश्रितो णेरयादेशः।
3. 'विभाषाऽऽपः' (6-4-57) इत्यनेनाप्नोतेर्ण्यन्तस्याऽयादेशविकल्पो णेः।
4. 'युप्लुवोर्दीर्घश्छन्दसि' (6-4-58) इति ल्यबाश्रितः प्रकृतेर्दीर्घः।
5. ल्यपि परतः 'क्षियः' (6-4-59) इति क्षिधातोर्दीर्घः।

(695)

"वट्" (च)

प्रशंसार्थकोऽयं भोजराजमतेन चादिषु पठ्यते। इति ग. र. म. (१-५) वट् पठति। सुष्ठु, पठतीत्यर्थः। 'वट् ताभ्यः स्वाहा' (तै. संहिता) इत्यादिषु तु हविर्दानार्थे 'श्रौषट् वौषट्' इत्यादिवत् प्रयुक्तोऽयम्।

(696)

"वत" (च.)

क्वचित् चादिषु 'वत' इत्यस्य स्थाने पठितोऽयम्। अस्माभिर्बत इत्यत्र विवृतम्, तत्रैव द्रष्टव्यम्।

(697)

"वत्" (स्व.)

वियोगे पादपूरणे च छान्दसोऽयम्।

(698)

"वत्" (च.)

एतत्प्रत्ययान्तमव्ययसंज्ञकं वेदितव्यम्। चादिषु 'वत्' (ग. सू. 1-4-57) इति गणसूत्रं पठितम्। तस्यायमर्थः—पञ्चमाध्याये चतुर्भिः सूत्रैः वतिप्रत्ययो विधीयते। तेषु 'तेन तुल्यं क्रिया चेत् वतिः' (5-1-115), 'तत्र तस्येव' (5-1-116), 'तदर्हम्' (5-1-117) इति सूत्रत्रयविहित-स्यास्वार्थकत्वेनाव्ययत्वम् इति। यद्यपि तत्र 'उपसर्गाच्छन्दसि धात्वर्थे' (5-1-118) इत्यनेनापि वतिरेव विधीयते; तथापि तत्सूत्रविहितस्य नात्र

गणसूत्रे ग्रहणम्, 'यदुद्वतो निवतो यासि बप्सत्' (ऋक् 10-142-4) इत्यादिषु सत्त्वार्थकत्वेन, सत्त्वभिन्नानामेवाव्ययसंज्ञाप्रवृत्तियोग्यत्वात्। ब्राह्मणवत्[1] क्षत्रियवत्। मथुरावत्[2] स्रुघ्ने प्राकारः। राजवत्[3] पालनम्। 'आत्मवत्[4] सर्वभूतानि यः पश्यति स पश्यति'। देवदत्तवत् यज्ञदत्तस्य गावः।

(699)

"वदि" (स्व.)

कृष्णपक्षवाचकमव्युत्पन्नमिदमव्ययं चादिषु पठ्यते। (द्रष्टव्या प्रौढ-मनोरमा) उत्तरदेश एवास्य प्राचुर्येण प्रयोगः। ज्येष्ठवदि। श्रावणवदि।

---

1. अत्र 'तेन तुल्यं क्रिया चेद् वतिः' (5-1-115) इति वतिप्रत्ययः। प्रत्यय इकार उच्चारणार्थकस्सन् लुप्यते। ब्राह्मणेन क्षत्रियेण वा तुल्यं वर्तते 'ब्राह्मणवत् क्षत्रियवत्'।

2. सप्तमीसमर्थात् मथुराशब्दात् 'तत्र तस्येव' (5-1-116) इति वतिः 'देवदत्तस्येव' इति षष्ठ्यर्थे वतिप्रत्यये, 'देवदत्तवत्' इति रूपमपि। सूत्रे षष्ठीसप्तम्योरुभयोर्ग्रहणम्।

3. 'तदर्हम्' (5-1-117) इति द्वितीयासमर्थात् वतिः। केचित् तु अस्य सत्त्ववाचकत्वमभ्युपगत्य एतत्सूत्रोपादानस्थलेषु अव्ययत्वमभ्युपगच्छन्ति।

4. अत्र 'आत्मानमिव' इति द्वितीयासमर्थात् इवार्थे वतिर्बाहुलकेन ज्ञेयः। केचित्तु 'आत्मन इव' इति षष्ठीवृत्तिमाश्रित्य 'तत्र तस्येव' (5-1-116) इति वतिप्रत्ययेन साधयन्ति। 'आत्मनीव' इति सप्तम्यन्ताद् वतिनाऽपि केचिन्निर्वाहं प्रपद्यन्ते। द्वितीयार्थकत्वमेव स्वरसम्।

(700)

“ वम् ” (च.)

कपोलनोदनीये वाद्यविशेषे शिवपूजान्ते विनियुज्यमाने रूढोऽयमिति ‘ वम् वम् वम् वम् ववम् वम् भ्रमितदशशिरास्तालमानेन नृत्यन् ’ इति रामलीलामृतनामककाव्योदाहरणप्रदर्शनपूर्वकं शब्दकल्पद्रुम उपात्तः। वरुण-बीजाक्षरत्वमप्यस्य प्रसिद्धम्।

(701)

“ वरम् ” (स्व.)

ईषत्प्रियमित्यर्थे केचिदमुं स्वरादिषु पठन्ति। ‘ वरं विरोधोऽपि समं महात्मभिः।’ (किरातार्जुनीये 1-8)। मेदिनीकारादिमते तु क्लीबान्तत्वमेव तदुक्तम् ‘ मनागिष्टे वरं क्लीबम्, केचिद् आहुस्तद् अव्ययम्।’ इति। एतत्तु प्रारम्भे यत्र प्रयुज्यते, तत्रैव वाक्य उत्तरत्र प्रायेण ‘ नच ’ ‘ नतु ’ ‘ नपुनः ’ ‘ न ’ इति प्रयुज्येत। यथा—‘ वरं मौनं कार्यं न च वचन-मुक्तं यदनृतम्....वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ’ (हितोपदेशे)। ‘ वरं प्राणत्यागो न पुनरधमानामुपगमः ’ (हितोपदेशे)। ‘ याञ्चा मोघा वरमधिगुणे, नाधमे लब्धकामा ’ (मेघसन्देशे 1-6)।

(702)

“ वरिवस् ” (स्व.)

परिचर्यार्थकोऽयमिति क्षीरस्वामी। वरिवस्कृणोति। परिचरति इत्यर्थः। [1]वरिवस्या। वरिवस्यति गुरून्।

---

1. अत्र ‘नमोवरिवश्चित्रङः क्यच्’ (3-1-19) इति क्यच्प्रत्ययः। ततः ‘अ प्रत्ययात्’ (3-3-102) इति प्रत्ययान्तत्वात् अकारप्रत्ययः। टाप्।

(703)

"वर्तते" (ति. प्र.)

सोल्लुण्ठनाङ्गसंवरणे तिङन्तप्रतिरूपकोऽयमिति **वर्धमानादयः**। 'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं **वर्तते**—' (उत्तररामचरिते ५ अङ्के)।

(704)

"वशे" (सा.)

अस्वातन्त्र्यमस्यार्थः। साक्षात्प्रभृतित्वात् कृञो योगे विभाषा गतिसंज्ञा। '**वशे**कृत्य दशग्रीवं—' (भ. का. 5-92)। 'उष्णंकृतोऽर्चिषि **वशे**कृटमारूढास्ते' (गणरत्नमहोदधिः)।

(705)

"वषट्" (च.)

देवतोद्देश्यकहविर्दाने वर्ततेऽयम्। '**वषट्** इन्द्राय'। 'वषट् इत्यृष्वासो अनक्षन्' (ऋक्. 10-115-9)। 'तृप्तिप्रीत्योः' '**पूजायाम्**' इत्यादयोऽप्यर्थनिर्देशा ग्रन्थेष्वस्य तत्रतत्र दृश्यन्ते; ते सर्वेऽपि निरुक्तार्थ एवान्ततो विश्रान्ता इति ध्येयम्।

अस्यैव ऊर्यादिषु (1-4-61) पाठात् कृञो योगे गतिसंज्ञायां समासे ल्यपि '**वषट्कृत्य**' इति सम्पद्यते।

(706)

"वस्तोः" (स्व.)

'अहनि' इत्यर्थे वैदिकोऽयम्। 'कुहस्विद् दोषा कुह वस्तोरश्विना' (ऋक् 10-40-2)। 'वस्तर' इति केचित् पठन्ति; सोऽपपाठ इति ज्ञेयम्।

(707)

"वहद्गु" (ति.)

वहन्ति गावो यत्र काले स कालो वहद्गु। शरत्काल एवमुच्यते—इति केचित्। तिष्ठद्गुप्रभृतित्वादव्ययीभावसमासः शत्रादेशश्च। अव्ययीभावत्वेनाव्ययत्वम्।

वहन्त्यो गावो यत्र देशे सा वहद्गुः=हलपङ्क्तिः। वहद्गवः—कुटुम्बिनः। अत्रान्यपदार्थप्रधानत्वाद् बहुव्रीहिसमासः। तेन नाव्ययत्वम्।

(708)

"वा" (च. स्व.)

विकल्पोपमानद्वन्द्वसमुच्चयावधारणानवक्लृप्तिवितर्कपादपूरणादिषु वर्तते।

विकल्पे—'धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा।' (मनुः 2-112)। 'यवैर्वा व्रीहिभिर्वा यजेत'।

उपमाने—'आशीविषो वा संक्रुद्धः सूर्यो वाऽत्र विनिर्गतः। भीमोऽन्तको वा समरे गदापाणिरदृश्यत॥' 'पुष्पेक्षणैर्लम्भितलोचकैर्वा—' (माघे 4-35)। 'व्योम पश्चिमकलास्थितेन्दु वा—' (रघुवंशे 19-51)।

द्वन्द्वे— ' सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ' (कुमार. 2-60)। न तृतीयेत्यर्थः।

समुच्चये— ' वायुर्वा त्वा मनुर्वा त्वा '। (तै. सं. 1-7-7-2) वायुर्मनुश्चेत्यर्थः।

अवधारणे—' सुयोधनं वा न गुणैरतीताः ' (किरात. 3-13)। ' अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः '। (छा. 8-12-1) अशरीरमेव सन्तमित्यर्थः।

अनवक्लृप्तौ—' शस्त्रवेदमधिगम्य तत्त्वतः कस्य चेह भुजवीर्यशालिनः ' (किरात. 13-62)। ' को वा चक्षुरुदश्रयेदपि पुरः—'।

वितर्के—' किं ते हिडिम्ब एतैर्वा सुखसुतैः प्रबोधितैः '। ' यद्वा, यदिवा, अपिवा, अथवा, उतवा, किंवा' इत्यादिषु पक्षान्तरद्योतकानामप्यत्रैवार्थेऽन्तर्भावः।

पादपूरणे—' देवासुरगणान् वाऽपि सगन्धर्वोरगान् भुवि। ' (रामा. बाल. 25-3)।

' कदाचिद् भवति, कदाचिन्न भवति ' इत्यर्थे वैयाकरणैरयं बहुलमुपयुज्यते। अर्थोऽयं लोकेऽतीवाप्रसिद्धः। ' दोषो णौ, वा चित्तविरागे ' (6-4-90; 91) ' चित्तं दूषयति, दोषयति वा ' इति रूपद्वयसाधनमत्र विवक्षितम्।

' नवा पलायाञ्चक्रे विः दयाञ्चक्रे न राक्षसः ' (भ. का. 5-106) इत्यत्र एवार्थत्वम्, ' युद्ध्वा वा जितमपरेण काममाविष्कुर्वीत स्वगुणमपत्रपः क एव ' (माघे 8-9) इत्यादिषु अप्यर्थकत्वमित्यादयोऽपि यथासम्भव निरुक्तेष्वेवार्थेषु अन्तर्भाव्या इत्यलं विस्तरेण।

(709)

"वाट्" (च.)

हविर्दाने वर्ततेऽयम्। भोजराजमतेनास्य चादित्वमिति ज्ञेयम्। 'वाट् ताभ्यः स्वाहा'। तिलकादयस्तु 'वट्' इति पठन्ति। परे तु 'वाट्' इति ओष्ठ्यादिं पठन्ति।

(710)

"वात्" (च.)

'वत्' इत्यस्यार्थे छान्दसोऽयम्। सादृश्यार्थकत्वमिति यावत्।

(711)

"वाम्" (च.)

युष्मदर्थप्रतिरूपकमव्ययमिदम्। तदुक्तम् 'गेये केन विनीतौ वाम्' (रघुः 15-69) इत्यत्र मल्लिनाथेन—'वाम् इति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम्' इति।

(712)

"वारंवारम्" (च.)

'शश्वत्' इत्यर्थे मनोरमादिषु पठितोऽयं चादिषु। त्रिकाण्डशेषे तु 'वारंवारं शश्वदर्थे वारंवारेण चेष्यते' इति 'वारंवारेण' इत्यप्येतत्समानार्थकः पठितः। '—मनसि विचिन्तय वारंवारम्॥' (मोहमुद्गरे)। 'वारंवारं तिरयति दृशोरुद्गमं बाष्पपूरः—' (मालविकाग्निमित्रे 1-35)।

(713)

" वाव " (च.)

' एव ' इत्यर्थे ' वा+व ' इति निपातद्वयसमुदायोऽयम्। **' वावत् '** इति **केचित्**। ' अशरीरं **वाव** सन्तम्—' (छान्दोग्ये 8.12-1)। अनुमान-प्रतिज्ञा-प्रैष-समाप्तिष्वपि छन्दसि सन्दर्भानुसारेण बहुल प्रयुज्यतेऽयम्।

(714)

" **वार्दालि** " (ऊ.)

हिंसाप्राकाश्ययोरर्थयोरयमूर्यादिषु पठ्यते। **' पार्दाली '** इति **केचित्**। **वार्दाली**कृत्य। वार्भिः सलिलैः दलति विशीर्णो भवतीति वार्दलः दुर्दिनम्। तथाकृत्वा इत्यर्थे च्विप्रत्ययेनास्य निष्पन्नत्वमङ्गीकृत्य **' वार्दलीकृत्य '** इत्येव न्याय्यमित्यभ्युपगच्छन्तः **केचि**दस्योर्यादिपाठं नानुमन्यते।

(715)

" **वि** " (उ. ग. क. प्र.)

" **वि** विशेषेऽत्यये व्याप्तौ परिवर्ते विपर्यये।
निवृत्तिपृथुताव्याजव्याख्यानाश्वासभोजने॥
विरोधप्रैषपर्यायक्रियाक्रीडनवण्टने।
रोधोद्दाहक्लेशदूरशौर्योद्योगनिशामने॥
दानेऽन्यथात्वे नानात्वे नाशाश्चर्योक्तिमिश्रणे।

भेदशिक्षामोहमुख्यविचारासम्मुखे व्यये ॥" इति क्षीरस्वामी ।

विशेषे—विराजते । विहसति । विशिष्टः ।

अत्यये—विभातीति विभावरी = रजनी । विवासयति । व्यभ्रं नभः ।

व्याप्तौ—विभुः । विष्कम्भः । विवेकः ।

परिवर्ते—विनिमयः । विक्रयः । व्यतीहारः ।

विपर्यये—विरज्यति । विस्मरति । विकारः ।

निवृत्तौ—[1]विरमति । विश्राम्यति । व्यध्वः ।

पृथुतायाम्—विकसति । विस्तीर्णम् । आस्यं व्याददाति ।

व्याजे—व्यपदेशः । व्यंसयति ।

व्याख्याने—विवृणोति । व्याचष्टे । व्याकरोति ।

आश्वासे—विस्रम्भः । विश्वासः ।

भोजने—विष्वणति । विदशति । 'स्वादुङ्कारं कालखण्डोपदंशं क्रोष्टा डिम्भं [2]व्यष्वणद् व्यस्वनच्च' [माघे—18-77] ।

विरोधे—विग्रहः । विरूपः । विप्रतिपत्तिः ।

प्रैषे—विसृजति । व्यादिशति । [3]विह्वयते ।

---

1. अत्र 'व्याङ्परिभ्यो रमः' (1-3-83) इति परस्मैपदम् ।
2. 'वेश्च स्वनो भोजने' (8-3-69) इति मूर्धन्यः । अत्रैव वाक्ये 'व्यस्वनत्' इत्यत्र शब्दार्थकत्वात् न षत्वम् ।
3. 'निसमुपविभ्यो ह्वः' (1-3-30) इत्यात्मनेपदमत्रेति ज्ञेयम् ।

पर्याये—नृपं विशेते। क्रमेण सेवत इत्यर्थः। तत्र [1]विशायः।

क्रियायाम्—विदधाति। विनिर्मितिः।

क्रीडने—विहारः। विलासः। विनोदः।

वण्टने—[वण्टनम् = विभागः] विभजति।

रोधे—विलम्बते। विधारयति। 'एष सेतुर्विधरण एषां लोकानाम-सम्भेदाय'।

उद्वाहे—विवाहः।

क्लेशे—विषादः। विद्राति। विक्लवः।

दूरे—विप्रकृष्टः। व्यवधानम्। व्यपायः।

शौर्ये—विक्रमः। विबुधः।

उद्योगे—व्यवसायः। विचेष्टते।

निशामने—विज्ञापयति।

दाने—विश्राणनम्। 'वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे'।

अन्यथात्वे—[2]विवर्तः। विपरिणामः। ब्रह्मवैवर्तम्।

---

1. 'व्युपयोः शेतेः पर्याये' (3-3-39) इति घञ्। इवर्णान्तत्वप्रयुक्ताचोऽपवादः।

2. समसत्ताकोऽन्यथाभावः परिणामः, विषमसत्ताकोऽन्यथाभावो विवर्तः इति यद्यपि वेदान्तिरीत्याऽस्ति भिदा, तथाऽप्युभयत्राप्यन्यथात्वस्यानुगतत्वात् विवर्त-विपरिणामयोरुभयोरन्यथात्वार्थकत्वमिति ज्ञेयम्।

नानात्वे—विकल्पयति। व्यूहः। विचित्रम्।

नाशे—विप्लवः। विपत्। विकारः। व्यतिरिक्तिः।

आश्चर्ये—विस्मयः।

उक्तौ—व्याहारः। विरावः।

मिश्रणे—व्यवायः। व्यतिषङ्गः। व्यतिकीर्यते।

भेदे—विस्रंसनम्। विस्रावः। विघटनम्।

शिक्षायाम्—विद्याविनीतः। व्युत्पन्नः। विदग्धः।

मोहे—विचित्तः। विभ्रान्तः।

मुख्ये—विनेता। वैशिष्ट्यम्। व्यपदिष्टः।

विचारे—विवेचनम्। विचारः। विमर्शः। विचिनोति।

असंमुखे—विमुखः। व्यधिकरणम्। व्यतीतः।

व्यये—शतं [1]विनयते। व्ययः।

क्रियापरिवर्त-विश्लेष-संज्ञादिष्वपि वर्तते।

क्रियापरिवर्ते—व्यतिलुनीते। व्यतीहारः।

विश्लेषे—वियोगः। वियौति। वियूय।

---

1. 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः'(1-3-36) इति विपूर्वकस्य नियः आत्मनेपदम्। अत्र व्यये वृत्तिः। 'क्रोधं विनयते' इत्यादिषु तु 'कर्तृस्थे चाशरीरे कर्मणि' (1-3-37) इति तङ्।

संज्ञायाम्—विकिरः [1]विष्किरो वा शकुनिः। [2]विष्टरः—अश्वत्थवृक्षः, आसनं वा।

उक्तेष्वर्थेषु यथासम्भवं क्वचिद् वाचकत्वम्, क्वचिद् द्योतकत्वम्, क्वचिद् धात्वर्थविशेषकत्वं चेति स्वयमूहनीयम्। [3]विष्यन्दते—विस्यन्दते। [4]विष्कन्दः—विस्कन्दः। [5]विष्कभ्नाति। [6]विषन्ति। [7]विषुमः—विषूतिः—विषमम्। [8]विष्ठलम्। [9]व्यषीदत्—व्यसीदत्। [10]वितिष्ठते। [11]वितपते। [12]'क्रोष्टा विकुरुते स्वरान्'। [13]विकुरुते सैन्धवः। सुष्ठु [14]विक-

---

1. 'विष्किरः शकुनिर्विकिरो वा' (6-1-150) इति निपातनाद्वा विकल्पेन सुट्। 'परिनिविभ्यः—' (8-3-70) इति षत्वम्।
2. 'वृक्षासनयोर्विष्टरः' (8-3-93) इति षत्वम्।
3. 'अनुविपर्यभिनिभ्यः स्यन्दतेः—'(8-3-72) इति वैकल्पिकं षत्वम्।
4. 'वेः स्कन्देरनिष्ठायाम्' (8-3-73) इति षत्वविकल्पः।
5. 'वेः स्कभ्नातेर्नित्यम्' (8-3-77) इति षत्वम्।
6. 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (8-3-87) इति षत्वम्।
7. 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (8-3-88) इति त्रिष्वपि स्थलेषु षत्वम्।
8. 'विकुशमिपरिभ्यः स्थलम्' (8-3-96) इति स्थलसकारस्य षत्वम्।
9. 'निव्यभिभ्योऽड्व्यवाये वा छन्दसि' (8-3-119) इति षत्वविकल्पः।
10. 'समवप्रविभ्यः स्थः' (1-3-22) इति आत्मनेपदम्।
11. 'उद्विभ्यां तपः' (1-3-27) इति विपूर्वकात् तपतेस्तङ्।
12. 'वेः शब्दकर्मणः' (1-3-34) इति विपूर्वकस्य करोतेस्तङ्।
13. 'अकर्मकाच्च' (1-3-35) इति तङ् अत्र।
14. 'वेः पादविहरणे' (1-3-41) इति तङ्। अश्वादीनां गतिविशेषो विक्रमणम्।

मते । [1]विना । [2]विशालः—विशङ्कटः । [3]विजयते । [4]विपूयो मुञ्जः, विनीयः कल्कः । [5]विभुः । विभूः । [6]बीजम् । [7]वैसारिणः । [8]विकाषी—

---

1. 'विनञ्भ्यां नानाञौ नसह' (5-2-27) इति स्वार्थे नाप्रत्यये 'विना' इति सिद्ध्यति ।

2. साधनक्रियावचनात् 'वि' इत्युपसर्गात् स्वार्थे 'वेः शालच्छङ्कटचौ' (5-2-28) इति शालच्शङ्कटच्प्रत्ययौ भवतः । विगते शृङ्गे यस्य स विशालः गौः । अत्र काशिका—'परमार्थतस्तु गुणवचना एते यथाकथञ्चिद् व्युत्पाद्यन्ते । नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः' इति । तिलकस्तु गतिसंज्ञकात् 'वि' इत्यस्मादमुं निष्पादयति ।

3. 'विपराभ्यां जेः' (1-3-19) इति तङ् ।

4. 'विपूयविनीयजित्याः—' (3-1-117) इति निपातनात् क्यबन्तः साधुः ।

5. 'विप्रसंभ्यः—' (3-2-180) इति विपूर्वकाद्भवतेर्डुः । 'विभूः' इत्यत्र तु 'भुवः संज्ञायाम्' (3-2-179) इति क्विप् ।

6. विविधं जायते इत्यर्थे 'उपसर्गे च संज्ञायाम्' (3-2-99) इति जनेर्डप्रत्ययः । 'कृञो द्वितीयतृतीयशम्बबीजात्—' (5.4.58) इत्यत्र निपातनात् वकारस्य बकारः ।

7. विसरतीति विसारी । विसारिन्शब्दात् मत्स्येऽभिधेये स्वार्थे 'विसारिणो मत्स्ये' (5-4-16) इति अण्प्रत्यये 'इन् अण्यनपत्ये' (6-4-164) इति प्रकृतिभाव आदिवृद्धौ च रूपमेवम् । वैसारिणः—वेगेन गतिमान् मत्स्यविशेषः ।

8. 'वौ कषलसकत्थस्रम्भः' (3-2-143) इति घिनुण्प्रत्ययः ।

विलासी—विकत्थी विस्रम्भी । [1]विनाशकः—व्याभाषकः । [2]विक्षावः—विश्रावः ।

एवमेतदुपसर्गाश्रितानि कार्याणि दिङ्मात्रमत्र प्रदर्शितानि । निदर्शितदिशैवानुक्तान्यपि यथासम्भवमूह्यानि । विस्तरभिया विरम्यते ।

(716)

**“ विकपने ”** (सा.)

वैरूप्यार्थकोऽयं साक्षात्प्रभृतिषु पठ्यते । ‘ हिंसायाम् ’ इति **केचित्** । **विकपने**कृत्य । गणपाठसामर्थ्यादेदन्तत्वम् ।

(717)

**“ विकम्पने ”** (सा.)

हिंसार्थकोऽयम् । ‘ **विकपने** ’ इति **शाकटायनः** । ‘ चिन्तावृत्ताश्रितहितोऽरि**विकम्पने**कृत् ’ (वर्धमानः) ।

(718)

**“ विक्ली ”** (ऊ.)

विचारार्थकोऽयम् । ‘ हिंसायाम् ’ इति **वामनः** । ‘ विकारे ’ इति च **केचित्** । विक्लीकृत्य ।

---

1. ‘निन्दहिंस—’ (3-2-146) इत्यनेन विपूर्वकयोर्णशभाषोर्वुञ्प्रत्ययः ।
2. ‘वौ क्षुश्रुवः’ (3-3-25) इति घञ् । उवर्णान्तत्वप्रयुक्तापोऽपवादः ।

(719)

"विख्ये" (कृ.)

विपूर्वकात् ख्याधातोः तुमुन्नर्थे 'दृशे विख्ये च' (3-4-11) इत्यत्र निपातनात् केप्रत्ययः । 'आतो लोप इटि च' (6-4.64) इत्याकार-लोपः । 'विख्ये त्वा हरामि'। एजन्तकृत्त्वात् 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम् ।

(720)

"विताली" (ऊ.)

ऊर्यादिषु विदूराकुलीभावार्थे पठ्यतेऽयम्। विदूराकुलीभावो नाम अवि-स्पष्टस्तुमुलो दूरदेशस्थः शब्द इति वदन्ति। 'उत्तमार्थे' इति केचित्। 'विस्तारे' इति भोजः। वितालीकृत्य। वितालशब्दात् च्विप्रत्ययेनैव केचि-दमु साधयन्ति।

(721)

"विद्यते" (ति. प्र.)

भवत्यर्थे तिङन्तप्रतिरूपकमव्ययमेतदिति वर्धमानादयः। विद्यते नाम तत्रभवान् वृषलं याजयिष्यति ?।

(722)

"विद्रवम्" (स.)

'साम्प्रतम्' इत्यर्थेऽव्ययमेतदिति क्षीरस्वामी। उदाहरणं मृग्यम्।

(723)

## "विना" (ख)

वर्जनेऽस्य वृत्तिः। 'तात नोदधिविलोडनं प्रति त्वद् **विनाऽपि** वयमुत्स-हामहे' (माघे 14-83)। 'पृथग्विनानानाभिः—' (2-3-32) इति त्वत् इत्यत्र पञ्चमी। 'शशाम वृष्ट्याऽपि **विना** दवाग्निः' (रघु-2-14) इत्यत्र तु तृतीयेति ज्ञेयम्। '**विना** वातं **विना** वर्षं विद्युत्प्रपतनं **विना**। **विना** हस्तिकृतान् दोषान केनेमौ पातितौ द्रुमौ॥' इत्यादिषु द्वितीयाविभक्तिस्तु 'एनपा द्वितीया; पृथग्विनानानाभिः' (2-3-31; 32) इति योगविभागेन **काशिकादिषु** समर्थितः।

इदमत्र बोध्यम। 'वि' इत्युपसर्गात् स्वार्थे 'विनञ्भ्यां नानाञौ नसह' (5-2-27) इति नाप्रत्यये, 'नानाञौ' (भाष्यम् 1-1-38) इति **भाष्ये** परिगणितेन तद्धितान्तत्वप्रयोजकाव्ययत्वेनैव सिद्धेऽव्ययत्वे स्वरादिषु '**विना**' इति पाठः किमर्थः? इत्यत्र अर्थान्तरे (=स्वार्थभिन्ने 'अन्तरेण' इत्यर्थे) समुदायस्य प्रयोगार्थम्, अन्तोदात्तस्वरार्थं च पाठ इति वदन्ति। स्पष्टमिदं **बृहच्छब्देन्दुशेखरे** (अव्ययप्रकरणे) इति।

(724)

## "विभाषा" (च.)

विकल्पार्थकमिदमव्ययमिति **वैयाकरणाः**। नञर्थकत्वमपि क्वचिदस्येति स्पष्टम् 'नवेति **विभाषा**'(1-1-44) इत्यत्र **भाष्यादिषु**। तदुक्तम् 'विभाषाऽन्यतरस्यां वा विकल्पार्थाः प्रकीर्तिताः' इति **त्रिकाण्डशेषे**ऽव्ययप्रकरणे। अत

एव 'सर्वं एव प्लुतः साहसमनिच्छता विभाषा वक्तव्यः' (भाष्यम् 8.2-92) इत्यादिषु पुंल्लिङ्गान्तेन सामानाधिकरण्यं युज्यते। अन्यथा 'यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य। तल्लिङ्गं तद्वचनं सैव विभक्तिर्विशेषणस्यापि॥' (व्याघ्रभूतिकारिका) इति नियमस्य भङ्गप्रसङ्गात्।

(725)

"विशु" (स.)

नानार्थकोऽयम्। 'न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्' इत्यत्र गणकार्यस्यानित्यत्वेन 'विश्वसेत्' इति रूपं साधितम्। भट्टोजिदीक्षितैस्तु 'विशु+असेत्' इत्यङ्गीकृत्य साधुत्वं स्वीकृतम्। 'विश्वक्' इत्यपि नानार्थकमव्ययं वेदेषु प्रसिद्धम्। लोकेऽपीति शब्दकल्पद्रुमः।

(726)

"विश्वथा" (त.)

इवार्थे छन्दसि 'प्रत्नपूर्वविश्वेमात् थाल् छन्दसि' (5--3111) इति थाल्प्रत्ययः। 'आस्थालो' (काशिका 1-1-37) इति परिगणनादव्ययत्वम्। 'तं प्रत्नथा पूर्वथा विश्वथेमथा—' (ऋक्. 5-44-1)।

(727, 728, 729)

"विश्वह, विश्वहा, विश्वाहा" (ति.)

'सर्वदा' इत्यर्थे छान्दसान्येतानि निपातनात् सिद्धानीति ज्ञेयम्। 'येनाभि कृष्टीस्ततनाम विश्वह—' (ऋक्. 1-160-5) 'आदर्दिरासो अद्रयो न विश्वहा' (ऋक्. 10-78-6)। 'सनो विश्वाहा सुक्रतुरादित्यः सुपथा करत्।' (ऋक् 1-25-12)।

(730)

### "विषमम्" (ति.)

विगतं समम्, विगतत्वं समस्य वा **विषमम्**। कालवाचकत्वे तिष्ठद्गुगणे पाठादव्ययीभावत्वेऽव्ययत्वम्। 'समात् विप्रकृष्टो हीनो वा देशः **विषमम्**' इति **केचित्**। देशवाचकत्वे, अन्यपदार्थप्राधान्ये वा बहुव्रीहिसमास एव प्रामाणिक इत्यवोचाम।

(731)

### "विषु" (च.)

'समभागः' इत्यस्यार्थः। 'नानार्थे' इति **प्रौढमनोरमा**। 'सर्वतोभावे' इति **क्षीरस्वामिप्रभृतयः**। विषुवम्। विष्वक्। विष्वद्र्यङ्। विषुणः।

(732)

### "विष्वक्" (स.)

समन्ततोभावेऽव्ययमेतत्। 'कचाचितौ विष्वगिवागजौ गजौ' (किरात. 1-36)। [1]विष्वक्सेनः।

---

1. संज्ञात्वेऽप्यत्र '—अगः' (8-4-3) इत्युक्तेः 'पूर्वपदात्—' (8-4-3) इति णत्वं न।

(733)

"विमा" (कृ.)

बुद्ध्यर्थकोऽयम्—''विमाविहौ' (दशपाद्युणादिः 10-8) इत्यत्र निपातनात् विपूर्वकात् 'षोऽन्तकर्मणि' इत्यस्मात् डाप्रत्यये निष्पन्नः। 'स्वभावात् अस्य अव्ययत्वम्' इति उज्ज्वलदत्तः [पञ्चपाद्युणादिः 4-37]।

(734)

"विसृपः" (कृ.)

विपूर्वकात् सर्पतेर्धातोः तुमुन्नर्थे 'सृपितृदोः—' (3.4-17) इति कसुन्प्रत्यये निष्पन्नोऽयम्। 'क्त्वातोसुन्कसुनः' (1-1-40) इत्यव्ययत्वम्। छान्दसोऽयम्। 'पुरा क्रूरस्य विसृपो विरप्शिन्' (तै. सं. 1-1-9-3)। विसर्पितुमित्यर्थः।

(735)

"विस्रसा" (स्व.)

मिथ्यार्थकोऽयम्। 'विस्रसैतदिह यत् त्वयोदितम्'। जरार्थकः स्त्रीलिङ्गो विस्रसाशब्दोऽन्योऽस्माद् भिन्न इति ज्ञेयम्।

(736)

"विहसने" (सा.)

उत्साहसामर्थ्ययोरय साक्षात्प्रभृतिषु पठ्यते। 'अग्नौकृतामथ हुतैरुदकंकृदशावार्द्रकृते विहसनेकृति पद्मिनीनाम्।' (गणरत्नमहोदधिः) इत्यत्र विकासार्थेऽपि प्रयुक्तोऽयम्।

(737)

"**विहा**" (कृ.)

विपूर्वकात् 'ओ हाक् त्यागे' इत्यस्मात् 'विसाविहौ' (दशपादुणादि: 10-8) इति निपातनात् डाप्रत्ययः। 'स्वभावादयमव्ययम्' इति **उज्ज्वलदत्तः** (पञ्चपादुणादिवृत्तौ 4-37)। स्वर्गार्थकोऽयम्। वर्जनार्थकोऽपि **क्वचित्** पठितः।

(738)

"**विहायसा**" (स्व.)

आकाशार्थकमिदमव्ययम्। 'पुंस्याकाशविहायसी' **इत्यमरकोशात्** '**विहायाः विहायः**' इति पुंनपुंसकमेतत्तुल्यप्रकृतिकं शब्दान्तरमिति ज्ञेयम्। '**विहायसा** रम्यतरं विभाति'।

(739)

"**वीजर्या**" (सा.)

जरणक्रियाऽस्यार्थः। शोभार्थकोऽयमिति **केचित्**। '**बीजर्या**' इति **परे** पठन्ति। **वीजर्या**कृत्य धनं गतः। धनं व्ययीकृत्य गत इत्यर्थः।

(740)

"**वृथा** (स्व.)"

अविधिविफलयोरर्थयोर्वृत्तिरस्य। अविधौ— 'प्रातिभाव्यं **वृथा** दानं माक्षिकं सौरिकं च यत्'। **वृथा** दानम् = अविधिदानम्। विफले— '**वृथा**

वृष्टिः समुद्रस्य, **वृथा** तृप्तस्य भोजनम् । **वृथा** दानं समृद्धस्य, नीचस्य सुकृतं **वृथा** '॥ **वृधा** इति **केचित्** पठन्ति ।

(741)

" वृषा " (ख.)

'प्रबलः' इत्यर्थोऽस्य । छान्दसोऽयम् । '**वृषायुधो** न वध्रयः—' (ऋक् 1-33-6) । वृषा = प्रबलः कपिः—चतुष्पात्, पक्षिर्वा यस्येति विगृह्य हरिहरावपि '**वृषाकपिः**' इत्युच्यत इति वदन्ति । वृषाकपिशब्दस्य निरुक्तार्थकत्वेऽपि व्युत्पत्तिरेवम् **अमरव्याख्यादिषु** नादृता ।

(742)

" वेकट " (च.)

अद्भुतार्थकोऽयम् । 'कट **वेकट** चाद्भुते' इति **त्रिकाण्डशेषः** । '**बेकट**' इति पवर्गतृतीयादिं **केचित्** पठन्ति । विदूषकार्थको **वेकट**शब्दः पुँल्लिङ्गोऽस्माद् भिन्नः ।

(743)

" वेताली " (ऊ.)

विदूराकुलीभावार्थे ऊर्यादिषु पठितोऽयम् । विदूराकुलीभावो नामाविस्पष्टो भयानको दूरदेशस्थः शब्द इत्यवधेयम् । 'उत्तमार्थे' इति **केचित्** । 'विस्तारे' इति **भोजः** । सर्वथाऽतीवाप्रसिद्धोऽयम् । **वेताली**कृत्य ।

(744)

"वेलायाम्" (च.)

कालवाचकोऽयं सुबन्तप्रतिरूपकेषु पठितः। वेलायां चरः। वेलायां भोजकः।

(745)

"वै" (च.)

नियोगागमविशेषसम्बोधनानुनयनिश्चयपादपूरणादिषु वर्ततेऽयम्। नियोगे—'वेदो वै धर्ममूलम्'। नियोगः अवधारणम्। आगमे—'शतायुर्वै पुरुषः'। विशेषे—'बृहस्पतिर्वै देवानां पुरोहितः'। सम्बोधने—त्वं वा अहमस्मि भगवो देवते—'। अनुनये—'त्वं वै मम प्रियाऽत्यन्तम्'। निश्चये—'सर्वं वै ब्राह्मणोऽर्हति' (मनुः 1-100)। पादपूरणे—'यो वै युवाऽप्यधीयानस्तं देवा ब्राह्मणं विदुः' (मनुः 2-156)।

(746)

"वौषट्" (च.)

देवहविर्दाने प्रसिद्धोऽयम्। 'तृप्तिप्रीत्योः' 'सम्प्रदाने' इति केचित्। 'सोमस्याग्ने वीहि वौ३षट्[1]'। वौषट्कृत्य। 'वौषट्' शब्दोच्चारितमग्न्यादिकर्म कृत्वेत्यर्थः। ऊर्यादित्वात् कृञो योगे गतिसंज्ञायां समासे ल्यप्।

---

1. 'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः' (8-2-91) इति 'वौषट्' इत्यत्र आदेः प्लुतो यज्ञकर्मणि।

(747)

" **शकला** " (ऊ.)

हिंसार्थकोऽयमूर्यादिः । **अपरे** तु ' परिभवे ' इति वदन्ति । **शकला**-कृत्य ।

(748)

" **शक्तिविषयेण** " (सु. प्र.)

विभक्तिप्रतिरूपकमिदमव्ययमिति ' ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेत् " **शक्तिविषयेण** अलङ्कृत्य ' (आपस्तम्बधर्मसूत्रे 2-5-11-17) इत्यत्र "**शक्तिविषयेण**—विभक्तिप्रतिरूपकोऽयं निपातः ' यथाशक्ति ' इत्यस्यार्थे द्रष्टव्यः " इति **हरदत्त**वचनाज्ज्ञायते।

(749)

" **शङ्के** " (ति. प्र.)

'वितर्के' इत्यर्थे वर्तते । '**शङ्के** शशाङ्कोऽयम्'। '**शङ्के** तीव्रं भवति समये शासनं मीनकेतोः ' (हंससन्देशे 1-3) इत्यत्र **रसास्वादिन्यां** पक्षद्वयमुपक्षिप्तम्—" **शङ्के** इत्येतत् ' जाने, मन्ये ' इतिवत् वाक्योपन्यासेऽव्ययमित्येके ; वक्ष्यमाणवाक्यार्थकर्मकमाख्यातमेव इत्यन्ये । प्रथमपक्षे '**शङ्के**' इत्यस्य 'तथाहि' इत्यर्थः । " इति । तिङन्तप्रतिरूपकत्वमेव **वर्धमानादिवैयाकरणानाम्** , **आलङ्कारिकाणां** च सम्मतम् ।

(750)

"शध्यै, शध्यैन्" (कृ.)

तुमुन्नर्थे छान्दसावेतौ प्रत्ययौ। एतदन्तानां 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञा। अनयो रूपसाम्येऽपि स्वरे विशेषः। 'सेक्तेव कोशं सिसिचे [1]पिबध्यै' (ऋक्. 3-32-15)। 'उभा राधसः सह मादयध्यै' (ऋक्. 6-6-113)।

(751)

"शनैः" (स्व)

क्रियामान्द्यमस्यार्थः। 'शनैर्विद्या शनैः कन्या शनैः पर्वतमारुहेत्। शनैः कामश्च धर्मश्च पञ्चैतानि शनैश्शनैः॥'। शनैश्चरः। [2]शनकैः।

(752)

"शप्" (च.)

स्वीकारार्थकमिदम्। गां शप् करोति। स्वीकरोतीति यावत्।

---

1. अत्र शध्यैप्रत्ययस्य ङित्त्वेन 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्र—' (7-3-78) इति पातेः पिबादेशः। स चादन्तः, तेन न गुणः। पिबध्यै—पातुमित्यर्थः। एवम् मादयध्यै—मादयितुमित्यर्थः। अत्र शध्यैन्प्रत्ययः।

2. अत्र 'अव्ययसर्वनाम्नाम्—' (5-3-71) इति टेः प्राक् अकच्प्रत्ययः प्रागिवीयार्थेषु।

(753)

" शम् " (स्व.)

शुभार्थकमिदम् । [1]शंकरः । [2]शंभुः । शंवदः । शन्तनुः । [3]शन्तातिः । शम्भवः । शंयुः ।

(754)

" शम्बट् " (च.)

अन्तःकरणार्थे, आभिमुख्यार्थे च चादिषु पठ्यते । 'छम्बट्' इति कश्चित् पपाठ । शम्बट्शुद्धिः । अन्तःकरणशुद्धिरित्यर्थः । 'शम्बण्मुखो धावति' । अभिमुखो धावतीत्यर्थः ।

(755)

" शम्बा " (डा.)

'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (5-4-58) इति शम्ब-शब्दात् कृषावभिधेये डाच् । डाजन्तत्वेन कृञो योगे गतित्वम् । शम्बाकरोति क्षेत्रम् । अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः ।

---

1. 'शमि धातोः संज्ञायाम्' (3-2-14) इति शम्युपपदे कृञोऽच्-प्रत्ययः । एवम्, 'शंवदः, शम्भवः' इत्यादिष्वपि ज्ञेयम् ।
2. 'मितद्र्वादिभ्य उपसंख्यानम्' (वा. 3-2-180) इति शम्युपपदे भुवो डुप्रत्ययः । शं भावयतीत्यन्तर्भावितण्यर्थाद्भवतेः प्रत्ययविधानमिति ज्ञेयम् । यद्वा, शं भवत्यस्मात् इति शम्भुः ।
3. 'शिवशमरिष्टस्य करे' (4-4-143) इति शं करोतीत्यर्थे तातिल्प्रत्ययः । एवं छन्दसि 'भावे च' (4-4-144) इति भावार्थेऽपि तातिल्प्रत्यये तुल्यं रूपम् ।

(756)

“ **शश्वत्** ” (च.)

सर्वकालसातत्यनित्यसहार्थ—प्रत्येकादिषु वर्तते। सर्वकाले — **शश्वत्** चकार । सातत्ये—‘ **शश्वत्** वक्ति कुशिक्षितः’। नित्ये—**शाश्वतं** वैरम् । सहार्थे—‘ **शश्वद्** भुञ्जाते चैत्रमैत्रौ ’। प्रत्येकार्थे —‘**शश्वद्** विशः सवितुर्दैव्यस्य—’ (ऋक्. 1-35-5)। ‘ **शश्वत्तमं** तदपा वह्निरस्थात् ’ (ऋक्. 2-38-1) इत्यत्र तमबन्तोऽव्यसकृदित्यर्थे प्रयुक्तः । **शाश्वतिकः** । ‘ येषां च विरोधः **शाश्वतिकः** ’ (2-4-9) इति सौत्रप्रयोगात् तकारान्त-लक्षणं कप्रत्ययं बाधित्वा ‘ ठस्येकः ’ (7-3-50) इत्यौत्सर्गिक इकप्रत्ययोऽपि। एवं ‘ अव्ययानां भमात्रे—’ इति (वा. 6-4-144) इति टिलोपोऽपि निपात-नेन नेति ज्ञेयम्। ‘ **शाश्वतः**’ इति भाष्यादिष्वसकृत् प्रयोगात् ‘ अबाधका-न्यपि निपातनानि ’ (परिभाषा 120) इत्याश्रित्य तदपि रूपं प्रामाणिक-मिति बोध्यम् । ‘ प्रवाच्यं **शश्वधा** वीर्यं—’ (ऋक्. 3-33-7) इत्यत्र छान्द-सत्वात् प्रकारवचने थाल्प्रत्ययः, अन्त्यलोपश्च । **शश्वधा**—अनेकप्रकारेण, इत्यर्थः ।

(757)

“ शस् ” (त.)

एतदन्तमव्ययसंज्ञकं वेदितव्यम्। बहुशो ददाति, भूरिशो ददाति। अल्पशो, स्तोकशो वा ददाति । अत्र ‘बह्वल्पार्थात् कारकात् शस् अन्यतर-स्याम् ’ (5-4-42) इति शस्प्रत्ययः । पक्षे ‘बहूनि ददाति ’ इत्यपि सिद्धमेव।

'बह्वल्पार्थान्मङ्गलामङ्गलवचनम्' (वा. 5-4-42) इति वचनात् आभ्युदयिके कर्मणि बह्वर्थकानाम्, अनिष्टे कर्मणि अल्पार्थकानां च शस् इति ज्ञेयम्। द्विशः त्रिशो वा ददाति। माषशः पादशो वा ददाति—अत्र 'संख्यैकवचनाच्च वीप्सायाम्' (5-4.43) इति शस्। एकोऽर्थो येनोच्यते तदेकवचनम्। माषादयो वृत्तावेकार्थाः। 'शस्तसी' (काशिका 1-1-37) इति परिगणनात् शसन्तस्य तद्धितान्ताव्ययत्वम्।

(758)

"शान्तम्" (कु.)

निवारणार्थेऽव्ययमेतदिति मेदिनी। शमुधातोर्निष्ठान्तेन समानमिदम्। 'शान्तं पापम्'।

(759)

"शीघ्रम्" (स्व.)

त्वरितार्थकमिदमव्ययमिति भट्टोजिप्रभृतयः स्वरादिषु पेठुः। भानुदीक्षितादयस्तु क्लीबान्तं व्याचख्युः। उभयथाऽपि क्रियाविशेषणत्वमेव। शीघ्रं पठति।

(760)

"शीतम्" (सा.)

शीतस्पर्शार्थकोऽयमिति बहवः। 'अनादरे' इति शाकटायनः। साक्षात्प्रभृतिषु पाठात् कृञो योगे गतिसंज्ञा। 'शीतंकृदर्चिषि तदोमपराम्बुधेः संलयाचिकीर्षति रवावुदयाद्रिशृङ्गम्' (वर्धमानः)।

(761)

"शीभम्" (वै.)

शीघ्रार्थकोऽयं छान्दसः। 'आ वक्षणाः पृणध्वं यात **शीभम्**' (ऋक्. 3-33-12)।

(762)

"शीम्" (च.)

द्वेषोऽस्यार्थः। '**शीम्** शाक्य' (निलकः)। चादिषु पठ्यतेऽयम्।

(763)

"शु" (स्व.)

प्रशंसाक्षिप्रार्थयोरयं वर्तते। प्रशंसायाम्—**शु**=प्रशस्तः नासीरोऽस्येति **शुनासीरः**। क्षिप्रार्थे—**शु**=आशु नयत्यन्तरिक्षमिति **शुनः**=**वायुः**। **शु**=प्रशस्तमश्नुते इति **श्वशुरः**। **शु**=आशु अश्यते—व्याप्यते इति **श्वशुरः**। '**शुशब्दोऽत्र आशुशब्दाभिधायी इति धातुपारायणम्**' इति **उज्ज्वलदत्तः** (पञ्चपाद्युणादिः 1-45)।

(764)

"शुकम्" (च.)

शीघ्रयार्थकमेतत्। शुकं गच्छति।

(765)

" शुदि " (च.)

शुक्लपक्षार्थकोऽयम्। 'सुदि' इत्यस्य विकृतप्रयोग इति केचित्। उत्तरदेशेऽतीव व्यवह्रियमाणोऽयम्।

(766)

" शुनम् " (वै.)

'सुखेन' इत्यर्थे छान्दसोऽयम्। 'शुनं हुवेम मघवानमिन्द्रम्—' (ऋक् 3-48-5)।

(767)

" शुभम् " (च)

'शुभमित्यव्ययं शुभपर्यायः—' इति काशिका (5-2-140)। 'दैवात्' इत्यर्थकत्वम्—'शुभं दिष्ट्या' इति त्रिकाण्डशेष उक्तम्। [1]शुभंयुः। शुभंयाः। शुभङ्करः।

(768)

" शूला " (डा.)

पाकविषये शूलशब्दात् 'शूलात् पाके' (5-4-65) इति डाच्प्रत्यये गतिसंज्ञादिकम्। शूलाकरोति मांसम्। शूले पचतीत्यर्थः।

---

1. 'अहंशुभमोर्युस्' (5-2-148) इति मत्वर्थे युस्प्रत्ययः। शुभंयुः—कल्याणवान्।

(769)

"श्रत्" (उ. ऊ.)

विश्वासार्थकमिदं धाञ्धातुनैव सह प्रयुज्यते—शब्दशक्तिस्वाभाव्यात्। 'श्रच्छब्दस्योपसंख्यानम्' (वा. 1-4-59) इति वचनादस्योपसर्गसंज्ञा। 'श्रदन्तरोरुपसर्गवत् वृत्तिः' इति सिद्धान्तकौमुद्यादिष्वसकृत् प्रयोग एतद्वार्त्तिकमूलक एव। श्रद्धा। श्रद्दधाति। अत्र कैयटः 'भिदादिषु (3-3-104) श्रद्धाशब्दो न पठितव्यो भवति' इति। अयं भावः—निरुक्तदिशोपसर्गसंज्ञकत्वादनेन योगे 'आतश्चोपसर्गे' (3-3-104) इत्यङ्येव श्रद्धाशब्दनिष्पत्तेः भिदादिपाठो व्यर्थ इति।

सत्यार्थकत्वमस्य क्वचिदुक्तम्—तदपि निरुक्तार्थपर्यवसितम्। ऊर्यादिपाठात् कृञो योगे 'श्रत्कृत्य' इत्यपि भवति।

(770)

"श्रुत्" (ऊ.)

शीघ्रार्थकमिदमूर्यादिषु कैश्चित् पठ्यते। श्रुत्कृत्य। 'श्रत्' इत्यस्य पाठान्तरमेवेदम्—इति परे।

(771)

"श्रौषट्" (स. च. ऊ.)

हविर्दाने वर्ततेऽयम्। 'तृप्तिप्रीत्योः' इति केचित्। 'अस्तु श्रौ३षट्'[1]। चादिष्वपि स्वरार्थं पठितोऽयम्। ऊर्यादिपाठात् कृञो योगे गतिसंज्ञा—श्रौषट्कृत्य।

(772)

"श्वः" (स.)

'आगामिदिने' इत्यर्थे प्रसिद्धोऽयम्। 'वरमद्य कपोतः श्वो मयूरात्' (कामसूत्रे 1-2-23)। 'श्वो गन्ता ग्रामम्'। श्वःश्रेयसम्। श्वोवसीयम्। 'श्वोभूत उपोष्य स्थण्डिले शेते'। श्वस्तनम्। श्वस्त्यम्।

(773)

"षाट्" (च)

सम्बोधनार्थकोऽयम्। प्रशंसायामिति क्षीरस्वामी। 'षाण्मन्त्रिणः साधु कृतं भवद्भिः'।

(774)

"षोढा" (त.)

प्रकारवचने 'षष्' इति प्रातिपदिकात् धाल्प्रत्यये 'षष उत्वमुत्तरपदादेश्च ष्टुत्वम्—' (वा. 6-3-108) इति वचनात् वर्णविपर्ययः। षोढा

1. 'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः' (8-2-91) इति यज्ञकर्मणि 'श्रौषट्' इत्यत्र आदेः प्लुतः।

षट्प्रकारेण इत्यर्थः । ध्मुञोरन्वयोः पाक्षिकत्वात् **षड्धा** इत्यपि साधुः । '**षोढा** समासा विज्ञेयाः—' ।

(775)

" **सकृत्** " (त.)

'एकवारम्' इत्यर्थे 'एकस्य **सकृत्** च' (5-4-18) इति निपातनात् क्रियाभ्यावृत्तिगणने प्रकृतेः '**सकृत्**' इत्यादेशः सुच्प्रत्ययश्च । 'संयोगान्तस्य—' (8-2-23) इति प्रत्ययसकारस्य लोपः । 'कृत्वोऽर्थाः' (वा. 1-1-38) इति परिगणनादस्याव्ययत्वम् । एकवारे—'**सकृद**ंशो निपतति **सकृत्** कन्या प्रदीयते । **सकृदाह** ददानीति त्रीण्येतानि **सकृत् सकृत्** ॥' (मनुः 9-47) । 'सदा' इत्यप्यर्थोऽप्यस्येत्युक्त्वा '**सकृद्युवानो** गीर्वाणाः' इति **तिलक** उदाजहार । **अमरस्तु** '**सकृत्** सहैकवारे चापि—' इत्याह ॥ सहार्थकत्वे '**सकृत्** दृष्टोऽपि नैवाय जानाति तव वैभवम् ।' इत्यादिषु ज्ञेयम् । 'ननु प्रपन्नः **सकृदेव** नाथ—' (स्तोत्ररत्ने 64) इत्यत्र **सकृत्** इत्यस्य 'सहसैव' इत्यर्थकत्वं **कूरनाथीये** व्याख्याने प्रोक्तम् । एतत् सर्वमपि 'अनेकार्थाः स्मृताः प्राज्ञैः पाठस्तेषां निदर्शनम्' इति न्यायेन निर्वाह्यम् । अस्यैव नञुपसृष्टत्वे **असकृत्** इति वीप्सार्थकत्वम् ।

(776)

" **सचा** " (वै.)

सहार्थकोऽयं छान्दसः । '—**सचा** सा वां सुमतिर्भूतु अस्मे' (ऋक् 4-50-11) ।

(777)

“ सजूः ” (ऊ.)

सहार्थे वर्ततेऽयम् । ‘अथ श्रवणयोः संगो द्विजिह्वः सजूः’ इत्यत्र सजूः इति गतिप्रतिरूपको निपातः—इति तिलकः । ‘सजूरिन्द्रेण पञ्चाशत् देवास्ते मरुतोऽभवन् ’ । ऊर्यादित्वात् कृञो योगे समासे सजूःकृत्य, इत्यपि भवति । ‘खेलायन् अनिशं नापि सजूःकृत्य रतिं वसेत् ॥’ इति भट्टिः (5-72)। सहपूर्वकात् जुषधातोः क्विपि सहस्य सादेशे ‘ससजुषो रुः’ (8-2-66) इति रुत्वे ‘र्वोरुपधाया दीर्घ इकः’ (8-2-76) इति दीर्घे च सम्पद्यते। तस्य च ऊर्यादिषु पाठाद् गतिसंज्ञेति पक्ष एकः । अव्युत्पन्नं प्रातिपदिकमेवैतदिति पक्षान्तरम्। उभयथाऽपि ‘ सजूः ’ इति दीर्घपाठ एव प्रामाणिकः ; नतु वाचस्पत्याद्युपात्तदिशा ‘ सजुः ’ इति ह्रस्वपाठ इत्यवधेयम् ।

(778)

“ सजोषस् ” (वै.)

‘ सन्तोषेण ’ इत्यर्थे छान्दसोऽयम्। ‘ अस्मे यातं नासत्या सजोषाः ’ (ऋक्. 1-118-11)।

(779)

“ सजः ” (नि.)

‘ सजः सहार्थे—’ इति त्रिकाण्डशेषः। विशेष्यनिघ्नोऽपि सन्नद्ध इत्यर्थे प्रसिद्ध एव ।

(780)

"सततम्" (स्व.)

अनवरतमित्यर्थे स्वरादिषु पठितोऽयम्। सम्पूर्वकात् तनोतेः क्तप्रत्यये 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्निषेधे, 'अनुदात्तोपदेशवनति-तनोत्यादीनाम्—' (6-4-37) इत्यनुनासिकलोपे, 'समो वा हिततयोः' (वा. 6-1-144) इति समो मकारस्य लोपे च रूपमेतत्। समुदायस्य स्वरादिपाठादव्ययत्वम्। केचिदस्याव्ययत्वं नाभ्युपयन्ति। 'सुलभाः पुरुषा राजन्। सततं प्रियवादिनः'। पक्षे 'सन्ततम्' इत्यप्यव्ययमिति वदन्ति॥

(781)

"सतस्" (वै.)

'समानरूपेण' इत्यर्थे वैदिकमिदमव्ययम्। 'विश्वे सतो महान्त इत्' (ऋक्. 8-30-1)।

(782)

"सत्" (च.)

आदरार्थे गतिसंज्ञकोऽयम्। सत्कृत्य। 'आदरानादरयोः सदसती' (1-4-63) इति गतित्वमत्र।

(783)

"सत्यम्" (स्व.)

प्रश्नप्रतिषेधार्धाङ्गीकाराङ्गस्येषु वर्तते। प्रश्ने—सत्यं करोषि मद्वाक्यम्?। प्रतिषेधे—ननु किमर्थमिदम्? सत्यम्। अर्धाङ्गीकारे—'ननु

चोक्त शब्दो नित्य इति ; सत्यमुक्तम ; दुरुक्त तु नत्' । आम्रस्ये—'सत्य' मनोज्ञा: स्त्रिय.' ।

ओं भू:...... ......ओं॰ सत्यम्' इत्यत्र लोकविशेषवाचिनोऽप्य-व्ययत्वमेवाङ्गीकुर्वन्ति । छान्दोग्यादिषु सत्+ति+यम् इति पदस्य विभ_ग्यान्व्याख्यानानन्तरं तस्य ब्रह्मवाचकत्वमुक्तम । तत्राप्यव्ययत्वमेवाहु: । विशेष्य-निघ्नत्वमपि संज्ञादिषु बोध्यमस्य ।

(784)

" सत्या " (डा॰)

अशपथे वर्तमानात सत्यशब्दात् कृञो योगे 'सत्यादशपथे' (5-4-66) इति डाच्प्रत्यय 'ऊर्यादिच्विडाचश्च' (1-4-61) इति गति-संज्ञायां अव्ययत्वमस्येति ज्ञेयम् । 'सत्याकरोति वणिक् भाण्डम' । मया एतत् क्रेतव्यमिति तथ्यं करोति, इत्यर्थ: ।

(785)

" सत्रा " (च.)

'सह' इत्यर्थेऽव्ययमेतत् । सत्राजित् । 'सत्रा कलशी. पीत:' । 'सत्रा ने अनुकृष्टय: विश्वा चकेव वावृतु: । सत्रा महाँ असि श्रुत: ।' (ऋक 4-30-2) इत्यत्र निश्चयार्थकत्वमपि वैदिकसम्मतमस्येति ज्ञेयम् ।

(786)

"सदम्" (स्व.)

'सदा' इत्यर्थेऽव्ययमेतत्। भुजङ्गमस्येव मणिः सदंभाः (वर्धमानः -11)। सदंभाः = सततप्रभ इत्यर्थः। 'पैद्रो वाजी सदमिद्धव्यो अर्यः' (ऋक्. 1-116-6)।

(787)

"सदा" (स्व.)

सततमित्यर्थः। सर्वशब्दात् 'सर्वैकान्यकियत्तदः काले दा' (5-3-15) इति कालेऽभिधेये दाप्रत्ययः। 'सर्वस्य सोऽन्यतरस्यां दि' (5-3-6) इति प्रकृतेः पाक्षिकस्सादेशः। सदा सर्वस्मिन् काल इत्यर्थः। पक्षे सर्वदा इत्यपि साधुः। समुदायस्य स्वरादिपाठादव्ययत्वम्। 'सदागतिः' इत्यत्र (सदा = सर्वत्र) इति देशवाचकत्वं तु उपचारादिति बोध्यम्।

(788)

"सदिति" (स्व.)

नित्यार्थकोऽयम्। 'सदिति मन्त्रिणः शुचयः' इति तिलकः (1-82)।

(789)

"सद्यः" (त.)

'सद्यः परुत्परारि - ' (5-3-22) इति निपातनात् 'समानेऽहनि' इत्यर्थे साधुः। अत्र वार्त्तिकम् 'समानस्य सभावो द्यश्चाहनि'

(पा. 5-3-22) इति । 'गवादीनां पयोऽन्येद्युः सद्यो वा जायते इति' । 'सद्यः पतति मांसेन—' इत्यादिषु तु तत्क्षणार्थकत्वमपि फलितार्थकथनाभिप्रायेण इति ज्ञेयम् ।

(790)

"सनत्" (स्व.)

'नित्यम्' इत्यर्थः । सनत्कुमारः । 'पुरातनम्' इत्यप्यस्यार्थः । 'सर्वदा वर्तते' इत्यर्थे योऽयं 'सन्' इति प्रयुज्यते, स एव विकृत एवमुच्यते इति केचित् ।

एवम् 'प्र सप्त होता सनकात् अरोचत—' (ऋक्. 3-29-14) इत्यत्र 'सनकात्' इत्यपि नित्यार्थकमव्ययं प्रयुक्तम् ।

(791)

"सनम्" (स्व.)

नुतिपरित्राणचिरन्तनहिंसाकल्पननिर्भर्त्सनेषु शाकटायनेन स्वरादिषु पठितोऽयम् । सनन्दनः ।

(792)

"सना" (स्व.)

'अतिप्राचीनः' इति अस्यार्थः । 'सना पुराणमध्ये म्यारात्' (ऋक्. 3-54-9) । [1]'सनातनः पितरमुपागमत् स्वयम्' (भट्टिः 1-1) [1]सनातनतमः ।

1. 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः—' (4-3-23) इति ट्युः, ट्युल् वा प्रत्ययः । तुडागमश्च । अतिशायने तमप्प्रत्यये 'सनातनतमः' इत्यपि ।

(793)

"सनात्" (स्व.)

अयमपि नित्यार्थकः। 'सनाद् एव न शीर्यते सनाभिः' (ऋक्. 1-164-13)। परब्रह्मण्यपि प्रयुज्यते—'सनात् सनातनतमः—' (विष्णुसहस्रनामस्तोत्रे) इति। 'सनात एव सहसे जात उग्रः—' (ऋक्. 4-20-6) इत्यत्र चिरादित्यर्थेऽपि प्रयुक्तः।

(794)

"सनुतर्" (स्व.)

अन्तर्धानार्थकोऽयम्। 'हिंसाऽनुबन्धपूर्वाह्णेषु' इति शाकटायनः। 'सनुतश्चोरो गच्छति'।

(795)

"सपत्त्रा" (डा.)

सपत्त्राशब्दादतिव्यथने गम्ये कृञो योगे 'सपत्त्रनिष्पत्त्रादतिव्यथने' (5-4-61) इति डाच्। 'ऊर्यादिच्विडाचश्च' (1-4-61) इति गतिसंज्ञायां समासे सपत्त्राकरोति इति भवति। सपत्त्रं शरं मृगादिशरीरे प्रवेशयतीत्यर्थः।

(796)

"सपदि" (स्व.)

वर्तमानतत्क्षणशीघ्रार्थकोऽयम्। वर्तमाने—'सपदि विपदो विद्रुदम्भवनगलवृत्तयः'। तत्क्षणे—'सपदि मुकुलिताक्षी रुद्रसंरम्भभीत्या—' (कुमार 3-76)। शीघ्रार्थे—'सपदि प्रदहत्युपेक्षितो वह्निः'।

समानौ पादावस्मिन् इत्यर्थे द्विदण्ड्यादि (5-4-128) गणे पाठात् समासान्त इच्प्रत्यये, 'इच्' (ग. सू. 2-1-17) इति तिष्ठद्गुगणपाठात् तस्य अव्ययीभावत्वेऽव्ययत्वमस्तीति वर्धमानः। अत्र पक्षे समानशब्दस्य सादेशः पादशब्दस्य 'पादः पत्' (6-4-130) इति पदादेशश्चेति बोध्यम्। व्युत्पत्तिस्तु यथाकथञ्चित् भवतु वा मा वा। उभयथाऽपि नार्थभेदः।

(797)

" **समक्षम्** " (अव्य.)

अक्ष्णः समीपमित्यर्थे 'प्रतिपरसमनुभ्योऽक्ष्णः' (ग. सू. 5-4-107) इति समासान्ते टच्प्रत्यये टिलोपे रूपमेवम्। 'प्रत्यक्षेण' इत्यस्यार्थः।

(798)

" **समन्ततः** " (त.)

परितोभावार्थे समन्तशब्दात् आद्यादित्वात् (वा. 5-4-44) सार्वविभक्तिके तसिप्रत्यये निष्पन्नोऽयम्। '**समन्ततो** धावति पत्तिबलं'। '**समन्तम्**' इत्यपि एतत्समानार्थेऽव्ययं पठन्ति।

(799)

" **समन्तात्** " (स्व.)

अयमपि 'समन्ततः' इत्यर्थकः। 'दिनकरपरितापात् क्षीणतोयाः **समन्तात्**' (ऋतुसंहारे 1-22)। [1]**सामन्तः**।

---

1. समन्ताद्भवः सामन्तः। 'अव्ययानां भमात्रे—' (वा. 6-4-144) इति टिलोपः।

(800)

**" समना "** (वै.)

'युगपत्' इत्यर्थे वैदिकोऽयम्। 'ता आ चरन्ति **समना** पुरस्तात् समानतः **समना** पप्रथानाः' (ऋक्. 4-51-8)।

(801)

**" समपक्षम् "** (ति.)

समस्य पक्षस्य, समः पक्षो वाऽस्मिन् इति **समपक्षम्**। तिष्ठद्गुगणे पाठादव्ययीभावसमासत्वेऽव्ययत्वम्। काल (ऋतु) विशेषस्य वाचकोऽयम्।

(802

**" समम् "** (अ.)

सहार्थकोऽयम्। 'विद्ययैव **समं** कामं मर्तव्यं ब्रह्मवादिना' (मनु. 2-113)। '**सम**मापन्नसत्त्वास्ताः' (रघु. 10-59) इत्यत्र युगपदित्यर्थेऽपि प्रयुज्यते।

(803)

**" समम्पदाति "** (ति.)

समस्य पदातेः **समम्पदाति**। तिष्ठद्गुगणे निपातनान्मुमागमः। '**समपदाति**' इत्यप्यत्र **शाकटायनः** पपाठ। '**सम्पदाति**' इति पाठान्तरम्। तदानीम् 'समम्' इत्यत्रान्त्यलोपः। 'सम्' इत्यनेन वा वृत्तिरिति बोध्यम्। 'समम्पदातयो राजानः' इत्यत्र अन्यपदार्थत्वात् बहुव्रीहिरेव।

(804)

" समम्भूमि " (ति.)

समत्वं भूमेः--इति विवक्षायां तिष्ठद्गुगणपाठादव्ययीभावत्वेऽव्ययत्वम् । निपातनान्मुमागमः । "शाकटायनस्तु 'समभूमि' इत्यप्याह । अन्यार्थत्वे तु 'समभूमयो वीथयः' इत्येव यौगिकत्वे नास्य लक्षणस्य प्रवृत्तिः । अन्यार्थत्वेऽपि 'समभूमि' इति केचित् । " इति वर्धमानः । क्वचित् 'सम्भूमि' इत्यपि पाठः । तदानीं समशब्दान्त्यस्य लोपः, 'सम' इत्यनेन वा वृत्तिः ।

(805)

" समया " (स. डा.)

समीपमध्ययोरयं प्रसिद्धः । समीपे—'अवलम्बते स्म समया सखीमिव' (माघे 15-9) । मध्ये—'त्वां मां च समया आस्ते' । अत्रोभयत्र 'अभितःपरितः समया—' (वा. 2-3-2) इति द्वितीया । आदित्सार्थकत्वं परीक्षार्थकत्वमपि केचिदस्याहुः ।

'ऋतस्य समया वारमर्षसि' (ऋक्. 9-85-3) इत्यत्र युगपदित्यर्थेऽपि प्रयुक्तमेतत् ।

यदा त्वयं डाजन्तः--तदानीम् 'समयाकरोति' इत्यत्र कालयापनं करोतीत्यर्थः । 'समयाच्च यापनायाम्' (5-4-60) इति कृञो योगे समयशब्दात् डाच् । डाजन्तस्य गतिसंज्ञकत्वात् समास इति ज्ञेयम् ।

(806)

" समह " (वै.)

'समानरूपेण' इत्यर्थे छान्दसोऽयमव्युत्पन्नः । 'क्रत्वः **समह** दीनता प्रतीपं जगमा शुचे' (ऋक्. 7-89-3) ।

(807)

" समानतीरम् " (ति.)

समानं तीरम्, समानत्वं तीरस्य इति वा **समानतीरम्** । देशविशेष-वाचकोऽयं तिष्ठद्गुगणे पठितः । एवं **'समानतीर्थम्'** इत्यपि बोध्यम् ।

(808)

" समुपजोषम् " (च.)

आनन्दोऽस्यार्थः । सम्+उप पूर्वकात् 'जुषी प्रीतिसेवनयोः' इत्यस्मात् णमुप्रत्यये निष्पन्नममुमाचक्षते । ' **समुपजोषं** वर्तते ' । ' **उपजोषम्** ' इत्येव **निर्वाणनारायणः** चादिषु पपाठ इति **वर्धमानः** । **'समुपजोषम्'** इति शाकपार्थिवादिरव्ययमिति **शब्दकल्पद्रुमः** ।

(809)

" सम्प्रति " (स्व.)

' इदानीम् ' इति अर्थोऽस्य । ' **सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना** ' (माघे 2-70) । सम्+प्रति इत्युपसर्गद्वयसमुदायोऽयं स्वभावादधुने-त्यर्थे वर्तते ।

नञ्सम्पर्कात् 'असम्प्रति' इत्यपि। वर्धमानस्तु तिष्ठद्गुगण- पठित्वाऽव्ययीभावसमासेनाऽव्ययत्वमाह।

'सम्यक्' इत्यर्थोऽपि वेदे दृष्टः। यथा—'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि——' (छान्दोग्य 5-11-6)। आर्जवार्थकोऽपि क्वचित्

(810)

"सम्यक्" (स्व.)

तत्त्वेष्टयोरयं स्वरादिः। तत्त्वे—सम्यगाह। इष्टे—सम्यक् कृतम्। समीचीनं अञ्चति इत्यर्थे अञ्चेः क्विन्। गणपाठादव्ययत्वम्। त्रिलिङ्गोऽप्यस्ति।

(811)

"सम्" (उ.)

"सं सम्यक्त्वे समन्तत्वे श्लेषे कूजनवर्तने।
सहभावे स्मृतौ क्रोधे ऋद्धिवाचिकढौकने॥
स्वनिश्चये गुणाधाने प्रतिज्ञात्यागसेवने।
क्रियान्तोद्योगनियमे विमर्शगणनाश्रये॥
नैकट्येऽनुकृतौ प्रीतौ स्वीकारोत्पत्तिवर्जने।
आभिमुख्ये परिचये कालेऽल्पपरिहारयोः॥"

इति क्षीरस्वामी। (२-६-९)

सम्यक्त्वे— सम्प्रदानम्। संश्रुतिः। ईप्साभृशसत्यानि सम्यगर्थः एव ईप्सायाम्—संवरयति। भृशे—संरक्तनयनः। सत्ये— संजानाति धर्मम्

समन्तत्वे—सम्पतन्ति। [1]सम्राट्। समन्तात् राजत इति व्युत्पत्तिः।

श्लेषे—संयोगः। सम्बन्धः। सङ्गमः।

कूजने—[2]सङ्क्रीडन्ति शकटानि।

वर्तने—'संयाति प्रास्थिकी स्थाली'।

सहभावे—[3]संघः। 'वरतनु [4]सम्प्रवदन्ति कुक्कुटाः'। सम्भूतिः।

स्मृतौ—संज्ञानम्। संकल्पः।

क्रोधे—सन्तापः। संरम्भः।

ऋद्धौ—[5]सम्पत्। सम्भारः। समुद्रेकः।

वाचिके—सन्देशः।

---

1. सम्पूर्वात् राजतेः क्विपि 'मो राजि समः क्वौ' (8-3-25) इति मकारस्यानुस्वाराभावो मकारादेशः।
2. 'समोऽकूजने' (वा. 1-3-2) इति नियमाभावात् न तङ्। कूजने तु 'संक्रीडते' इत्यत्र 'क्रीडोऽनुसम्परिभ्यश्च' (1-3-21) इति आत्मनेपदम्।
3. 'संघोद्घौ गणप्रशंसयोः' (3-3-86) इति निपातनात् गणेऽभिधेये साधुत्वम्। सम्पूर्वकाद्धन्तेः अप्प्रत्ययः' हकारस्य घकारः, टिलोपश्च निपातनबलात्।
4. सम्प्रवदन्ति = सह उच्चरन्ति इत्यर्थः। अव्यक्तवाचां कुक्कुटानामुक्तत्वादत्र न तङ्। 'सम्प्रवदन्ते ब्राह्मणाः' इत्यादिस्थले तु 'व्यक्तवाचां समुच्चारणे' (1-3-48) इति तङ्।
5. उपसर्गे उपपदे 'सम्पदादिभ्यः—' (वा. 3-3-94) इति स्त्रियां क्विप्। 'क्तिन्नपीष्यते' (वा. 3-3-94) इत्युक्तेः 'सम्पत्तिः' इत्यपि साधु।

ढौकने—[ढौकनम्=प्रेरणम्, गतिः, आवृतिर्वा] संवृतं द्वारम्। सङ्कोचः।

अनिश्चये—संशयः। सन्देहः। संवृतिसत्यम्।

गुणाधाने—[1]संस्कारः। सम्मार्जनम्। भूषणमपि गुणाधानमेव—शरीरसंस्कारः। 'संस्कृतं भक्षाः' (4-2-16)।

प्रतिज्ञायाम्—संजानीते। संगिरते।

त्यागे—संन्यासः। समावर्तनम्।

सेवने—संवाहयति।

क्रियान्ते—सन्तिष्ठते। समाप्तिः। सम्पूर्णम्।

उद्योगे—संनाहः। संस्तवः।

नियमे—संयमः। मर्यादापि नियम एव—[2]संस्था।

---

1. अत्र 'संपरिभ्यां करोतौ भूषणे' (6-1-137) इति सुडागमः। 'तत्र नः संस्कृतं वाक्यं—' इत्यादिषु तु 'समवाये च' (6-1-138) इति सुट्। 'कृष्णा संस्कृतं तापिकम्' इत्यादिषु यद्यपि गुणाधानविवक्षे समः परस्य कृञः सुट् दुर्लभः; तथापि 'संस्कृतं भक्षाः' (4-2-16) इति सौत्रनिर्देशात् 'सम' इत्युपसर्गस्याध इव सुडिति ज्ञेयम्। वस्तुतस्तु 'विकार-भेद-संसर्ग-उत्कर्ष-ह्रासादिरूपतः। करोतिः परिणामार्थं चित्रमाह स्वभावतः॥' इत्यभियुक्तोक्तेः, एतादृशस्थलेषु धातोरेवार्थान्तर वृत्तिः स्वाभाव्यादाभ्यन्तरीयेति मतमेव समीचीनम्।

2. स्त्रियाम् 'आतश्चोपसर्गे' (3-3-106) इत्यङ्। एवमुत्तरत्रापि।

विमर्शे—सम्पृच्छते । संमन्त्रयति । सम्प्रधारयति ।

गणनायाम्—संख्या । संकलयति । संवत् ।

क्षये—संहारः । संक्षपनम् ।

नैकट्ये—संनिकृष्टः । समीपम् । सन्निपत्योपकारकम् ।

अनुकृतौ—संवादः । 'वाहीको गोपसंस्थानः' । 'विष्णोः संस्था' ।
आकृतिरित्यर्थः । पद्मसंकाशः । संनिभः ।

प्रीतौ—संभाषते । समञ्जसम् । सम्प्रज्ञातम् ।

स्वीकारे—संग्रहः । 'संचीवरयते भिक्षुः' ।

उत्पत्तौ—संभवः ।

वर्जने—संचक्ष्यो दुर्जनः ।

आभिमुख्ये—संमुखः । समेति ।

परिचये—संस्तवः ।

काले—समयः । संवत्सरः ।

अल्पे—सर्षपः ।

परिहारे—समाधानम् ।

मर्यादामरणशुद्धिरम्यत्वादिष्वपि दृश्यते ।

मर्यादायाम्—संस्था । मरणे—'संस्थिते दशरथेऽथ राघवः—' ।
शुद्धौ—संस्कृता आपः । आज्यसंस्कारः । रम्यत्वे—संस्कृता कन्या ।

अथ 'सम्' इत्यमुमुपसर्गमाश्रित्य प्रवृत्तानि कार्याणि—

अश्वेन [1]संचरते। व्रीहीन् [2]संयच्छते। [3]संतिष्ठते। शतं [4]संगिरते। [5]संक्ष्णुते शस्त्रम्। शतं [6]संजानीते। [7]संगच्छते—समृच्छते। [8]संविते—सम्पृच्छते—संस्वरते। मा [9]समृत—संशृणुते—सम्पश्यते। [10]संय-

1. सम्पूर्वकात् चरतेः 'समस्तृतीयायुक्तात्' (1-3-54) इत्यात्मनेपदम्। 'दास्या संप्रयच्छते कामुकः' इत्यत्र तु 'दाणश्च, सा चेत् चतुर्थ्यर्थे' (1-3-55) इति आत्मनेपदम्। अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया वार्तिकसिद्धाऽत्र।
2. अत्र 'समुदाङ्भ्यो यमोऽग्रन्थे' (1-3-75) इति तङ्। सकर्मकत्वाले-ऽप्येवायम्।
3. 'समवप्रविभ्यः स्थः' (1-3-22) इति सम्पूर्वकात् तिष्ठतेस्तङ्।
4. तौदादिकस्य 'गॄ निगरणे' इत्यस्य समुपसृष्टस्य 'समः प्रतिज्ञाने' (1-3-52) इति तङ्। अभ्युपगमः—प्रतिज्ञानम्।
5. 'क्ष्णु तेजने' इत्यस्य सम्पूर्वकस्य 'समः क्ष्णुवः' (1-3-65) इति तङ् विहितः। सकर्मकार्थमयम्।
6. 'संप्रतिभ्यामनाध्याने' (1-3-46) इति तङ्। आध्यानम् उत्कण्ठापूर्वकस्मरणम्। तद्भिन्नेऽर्थेऽयं भवति। 'मातुः संजानाति' इत्यत्र उत्कण्ठापूर्वकस्मरणार्थकत्वान्न तङ्।
7. 'समो गम्यृच्छिभ्याम्' (1-3-29) इति तङ्।
8. अत्र 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्' (वा. 1-3-29) इति तङ्। इदं तु वार्तिकं काशिकादिषु सूत्रे एव प्रक्षिप्य पठितम्।
9. 'अर्तिश्रुदृशिभ्यश्च' (वा. 1-3-29) इति आत्मनेपदम्।
10. 'संयसश्च' (3-1-72) इति सम्पूर्वकात् यसधातोः श्यन्विकल्पः।

ष्यति—संयसति। [1]संहितम्—सहितम्। [2]गोसंख्यः। मल्लस्य [3]संग्राहः। [4]संयावः—संद्रावः—सन्द्रावः। [5]समजः—समाजः। [6]संवत्सरीणः—संवत्सरीयः। [7]संपर्की। [8]संकटम्।

---

1. 'समो वा हिततयोः' (वा. 6-1-144) इति वचनात् समो मकारस्य हितशब्दे ततशब्दे च परतो वैकल्पिको लोपः। अर्थे पुनः न भेदः। एवम् 'संततम्—सततम्' इत्यप्युदाहार्यम्।
2. 'समि ख्यः' (3-2-7) इति कर्मण्युपपदे ख्यातेः कप्रत्ययः। आकारलोपः। गां सञ्चष्टे गोसंख्यः।
3. 'समि मुष्टौ' (3-3-36) इति सम्पूर्वकात् गृह्णातेर्घञ्प्रत्ययः। अपोऽपवादः।
4. 'समि युद्रुदुवः' (3-3-23) इति घञ्। उवर्णान्तत्वप्रयुक्तापोऽपवादः।
5. 'समुदोरजः पशुषु' (3-3-69) इति सम्पूर्वकादजधातोः पशुविषये कर्तर्यप्प्रत्यये 'समजः' इति सिद्ध्यति। समुदायविवक्षायां तु घञि 'समाजः' इत्येव। उभयत्र 'अजेर्व्यघञपोः' (2-4-56) इति वीभावाभावः।
6. छन्दसि विषये निर्वृत्तादिष्वर्थेषु 'सम्परिपूर्वात् ख च' (5-1-62) इति सम्पूर्वात् वत्सरान्तात् प्रातिपदिकात् खप्रत्ययश्छश्च। खस्य ईनादेशः छस्य तु ईयादेशः।
7. तच्छीलादिषु कर्तृषु 'सम्पृचानुरुध—' (3-2-142) इति संपूर्वकात् पृचधातोर्घिनुणि 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वे च रूपमेवम्।
8. 'सम्प्रोदश्च कटच्' (5-2-29) इति स्वार्थे कटच् प्रत्ययः। अत्र काशिका—'गुणशब्दा एते यथाकथञ्चिद् व्युत्पाद्यन्ते, नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः' इति। 'संकटम्' इति कर्तृत्वे प्रसिद्धि

[1]संस्तावः, संस्तवः शिष्ययोः । [2]संयमः—संयामः । [3]संमदः ।

(812)

"सरथम्" (ऋ.)

तुल्ये रथे इत्यर्थेऽव्ययीभावसमासान्तमिदमव्ययं छान्दसेषु प्रयोगेषु प्रसिद्धम्। "इन्द्रेण देवैः सरथं स बर्हिषि—" (ऋक् 5-11-2)।

(813)

"सर्वतः" (आ.)

आद्यादित्वात् सार्वविभक्तिकतसिप्रत्ययान्तोऽयम्। सर्वस्मात्, सर्वेण सर्वत्र इत्येवमर्था यथासम्भवमस्योन्नेयाः। 'सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः'।

---

तदुक्तम् प्रक्रियासर्वस्वे—संभावार्थे संकटमिति । तिलकस्तु उपसर्गप्रतिरूपकात् 'सम्' इत्यस्मादमुं निष्पन्नमाह । तस्यायमाशयः— क्रियायोग एवोपसर्गसंज्ञाविधानात्, अत्र तु साक्षात् क्रियासंबन्धस्य अन्तर्वर्तिक्रियाभिसंबन्धस्य च अदर्शनात् उपसर्गसंज्ञा दुर्लभा— इति ।

1. 'यज्ञे समि स्तुवः' (3-3.31) इति घञ्। यज्ञभिन्ने परिचयार्थे तु उवर्णान्तत्वलक्षणोऽबेव—संस्तव इति।

2. 'यमः समुपनिविषु च' (3-3-63) इति विकल्पेनाप्। पक्षे घञ्।

3. 'प्रमदसंमदौ हर्षे' (3-3-68) इति निपातनात् हर्षेऽभिधेये सम्पूर्वकात् मद्धातोः भावेऽप् प्रत्ययः।

(814)

"**सर्वत्र**" (त.)

'सप्तम्यास्त्रल्' (5-3-10) इति त्रल्प्रत्यये निष्पन्नोऽयम्। '**सर्वेषु** स्थलेषु' इत्यर्थः। 'सर्वेषु कालेषु' इति च। 'पदं हि **सर्वत्र** गुणैर्निधीयते' (रघुः 3-62)।

(815)

"**सर्वथा**" (त.)

'सर्वप्रकारेण' इत्यर्थे 'प्रकारवचने—' (5-3-23) इति थाल्प्रत्यये निष्पन्नमिदम्। प्राग्दिशीयत्वेन विभक्तिसंज्ञकत्वात्, 'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययत्वम्।

(816)

"**सर्वदा**" (त.)

कालवाचिनः सर्वशब्दात् सप्तम्यर्थे 'सर्वैकान्य—' (5-3-15) इति दाप्रत्ययः। सकारादेशस्य पाक्षिकत्वात् एवमपि रूपं साध्वेव। पक्षे '**सदा**' इति।

(817)

"**सह**" (च. सा.)

एकक्रियायोगोऽस्यार्थः। 'पुत्रेण **सह** पण्डितः'।

'**सह** साकल्यसादृश्ययौगपद्यसमाप्तिषु।

समृद्धौ चापि सम्पत्तौ **सह**शब्दः प्रकीर्तितः॥'

इति धर्मकीर्तिः।

यौगपद्ये 'अस्तोदयौ सहैवासौ कुरुते नृपतिर्द्विषाम ।'

एवं यथासम्भवमर्थान्तरेष्वपि प्रयोग उन्नेयः । साक्षात्प्रभृतिः सहकृत्य इति कृञो योगे गतिसंज्ञायां समासे ल्यप् ।

[1]'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'; अत्र विद्यम (सम्पत्तिः) अर्थः । [2]सनासिका । [3]सहकृत्वा सहयुध्वा । सुधा[4]सध्रीचीं धूतिभिः । '[5]सधमादो द्युम्न एकास्ताः' (तै. सं. 1-4-12-1) 'स' विश्वे अभि सन्ति देवाः' (ऋ. 7-39-4)।

(818)

"सहसा" (स्व.)

आकस्मिकाविमर्शयोरय वर्तते । आकस्मिके—'दिवः प्रसून : पपात' । अविमर्शे 'सहसा विदधीत न क्रियाम- ' (किराता

---

1. अत्र 'सहयुक्तेऽप्रधाने' (2-3-19) इति तृतीया ।
2. 'सहनञ्विद्यमानपूर्वाच्च' (4-1-57) इति ङीष्प्रत्ययः । इत्यस्य संज्ञायां सादेशः ।
3. 'सहे च' (3-2-96) इति सहशब्दे उपपदे कृञो युधेश्च प्रत्ययः । क्वनिपः कित्त्वाद् गुणनिषेधः । नान्तत्वात् सर्वना उपधादीर्घः । सहकृत्वेत्यत्र तुगागमोऽधिकः ।
4. सह अञ्चतीत्यत्राञ्चतौ परे 'सहस्य सध्रिः' (6-3-95) इ इत्यस्य सध्र्यादेशः ।
5. माद्-स्थ इत्येतयोरुत्तरपदयोः सह इत्यस्य सध इति छन्दसि 'सध मादस्थयोश्छन्दसि' (6-3-96) इति विधीयते । तेन साधु ।

2-30)। 'मातङ्गनकैः सहसोत्पतद्भिः—' इत्यादिषु तु युगपदित्यर्थकोऽप्ययमिति केचित्।

(819)

"संकला" (ऊ.)

ऊर्यादिषु हिंसार्थकोऽयं पठ्यते। संकलाकृत्य। संकुला इति केचित्।

(820)

"संवत्" (स्व.)

वर्णार्थकोऽयम्। 'संवत्तृतीये प्रभुतामसावियात' (बृहज्जातके)। संवत्सर इत्यादिषु तु इद्वत्सर - वत्सरादिशब्देष्विव 'सर' इति शब्दान्तरसमुच्चयो हायनार्थक इति केचित्। परे तु केवलवृषशब्दस्य बलीवर्दवाचकत्वेऽपि वृषभशब्दगतस्यैकदेशभूतस्य वृषशब्दस्य यथा निरर्थकत्वम्, एवमेवात्रापि न सरशब्दस्यार्थवत्त्वम्, किन्तु संवत्सर इति शब्दस्यैवेति वदन्ति। वस्तुतस्तु संवत्सर - परिवत्सर - इडावत्सर - इद्वत्सरादिशब्दा यज्ञियकालविशेषवाचकाः सरप्रत्ययान्ताः, सं+वत, इत्+आ, परि+वत्, इत इत्युपपदयुक्ता इत्येव न्याय्यमित्यलं विस्तरेण।

(821)

"संशकला" (ऊ.)

अयमपि हिंसार्थकः। परिभवार्थक इति केचित्। 'असंकला' इति भोजः। संशकलाकृत्य।

(822)

"संसर्या" (सा.)

आक्रमणमस्यार्थः । 'शीतंकृदर्चिषि तटीमपराम्बुधेः संसर्याचिकीर्षति रवावुदयाद्रिशृङ्गम्' (गणरत्नमहोदधिः पृ. १४१)।

(823)

"संहतपुच्छि" (द्वि.)

संहतपुच्छि इति पुच्छसंहननेन धावति इत्यर्थे द्विदण्डयादिषु (5-4-128) पाठात् बहुव्रीहिसमासः । इच्प्रत्ययान्तोऽयम् । तस्य च तिष्ठद्गुप्रभृतिषु (2-1-17) पाठादव्ययीभावत्वेनाव्ययत्वमिति ज्ञेयम् ।

(824)

"संहृतबुसम्" (ति.)

संहृतानि बुसानि यत्र काले स कालः संहृतबुसम् । तिष्ठद्गुगणे निपातनात् अव्ययीभावत्वेनाव्ययत्वम् । देशवाचकत्वे तु नाव्ययीभावत्वम् ।

(825)

"संहृतयवम्" (ति.)

संहृताः यवाः यस्मिन् काले स कालः संहृतयवम् । तिष्ठद्गुगणे पाठादव्ययत्वम् । देशवाचित्वे तु बहुव्रीहिसमास एव ।

(826)

**"संह्रियमाणबुसम्" (ति.)**

संह्रियमाणानि बुसानि यस्मिन् काले स कालः **संह्रियमाणबुसम्**। '**संह्रियमाणबिसम्**' इति **केचित्** पठन्ति। बिसम् = पद्मकन्दः। उभयथाऽपि तिष्ठद्गुगणे पाठः।

(827)

**"संह्रियमाणयवम्" (ति.)**

संह्रियमाणाः यवा यस्मिन् काले स कालः **संह्रियमाणयवम्**। अयमपि शब्दो तिष्ठद्गुगणे पठितः। तेनाऽव्ययत्वम्।

(828)

**"साकम्" (च.)**

साहित्यार्थेऽस्य वृत्तिः। 'यान्ती गुरुजनैः **साकं** स्मयमानाननाम्बुजा' (भामिनीविलासे 2-132)। 'सहार्थेन योगे विधानात् पर्यायप्रयोगेऽपि भवति' (काशिका 2-3-19) इत्युक्तत्वात '**साकं**' इत्यनेन योगेऽपि तृतीया भवतीति बोध्यम्। 'एककाले' इत्यप्यस्यार्थं **केचिदाहुः**।

(829)

**"साक्षात्" (स्व. सा.)**

प्रत्यक्षतुल्ययोरस्यार्थौ। इद विभक्तिप्रतिरूपकमिति **कश्चित्**। प्रत्यक्षे—

साक्षात् द्रष्टा [1]साक्षी । तुल्यं 'इय साक्षाल्लक्ष्मीः–' । लक्ष्म्या तुल्य-त्यर्थः । अस्य साक्षात्प्रभृतिषु (1.4-74) पाठात् कृञो योगे गतिसंज्ञायां समासे ल्यपि 'साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रिय श्रियः' (भट्टि. 5-70) इति सिद्ध्यति । 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' (वा. 1-4-74) इति वचनादभूततद्भावार्थ एवायं गतिसंज्ञां लभते । 'साक्षात्कृतेऽथ लवणकृति दिङ्-मुखानाम्—' (गणरत्नमहोदधिः पृ. १४०) ।

(830)

## " साचि " (ख.)

तिर्यगर्थेऽयं वर्तते । 'साचि लोचनयुगं नमयन्ती—' (किरातार्जु-नीये 9-44) । 'सविनयमपराऽभिसृत्य साचि स्मितसुभगैकलसत्कपोल-लक्ष्मीः' (किरात. 10-57) । 'निनाय साचीकृतचारुवक्त्रः–' (रघुवंश 6-14) इत्यादिषु च्व्यन्तत्वेन दीर्घ इति ज्ञेयम् ।

(831)

## " साढ्यै " (कृ.)

सोढ्वा इत्यर्थे छान्दसोऽयम् । 'साढ्यै साढ्वा साढेति निगमे' (6-3-113) इत्यत्र निपातनात् सहधातोः क्त्वाप्रत्ययस्य पाक्षिके ध्यै इत्यादेशः

1. अत्र 'साक्षाद् द्रष्टरि संज्ञायाम्' (5-2-91) इति 'साक्षात्' इत्यस्मात् इनिप्रत्ययः । 'अव्ययानां भमात्रे–' (वा. 6-4-144) इति टिलोपः । 'संज्ञाग्रहणसामर्थ्यात् पनिकान्तेषामिनोर्न भवति' इति भाष्योक्तेः च द्रष्टा स एवमुच्यते ।

ओकाराभावः। ढत्वष्टुत्वढलोपदीर्घाः यथायथं प्रवर्तन्ते। 'साढ्यै समन्तात्' सोढ्वा इत्यर्थः। 'कृन्मेजन्तः' (1-1-39) इत्यव्ययत्वम्।

(832)

"साढ्वा" (कृ.)

अस्यापि सोढ्वेत्यर्थः। पूर्ववत् 'साढ्यै साढ्वा साढेति निगमे' (6-3-113) इत्यत्र निपातनात् सहधातोः क्त्वायां ओकाराभावः। ढत्वष्टुत्वढलोपदीर्घाः। 'साढ्वा शत्रून्'। सोढ्वेत्यर्थः। 'क्त्वातोसुन्---'(1-1-40) इत्यव्ययत्वम्।

(833)

"साति" (त.)

एतत्प्रत्ययान्तमव्ययसञ्ज्ञकमिति ज्ञेयम्। तदुक्तम्---'शस्प्रभृतयः प्राक् समासान्तेभ्यः---' (भाष्यम् 1-1-38) इति; अत्र प्रभृतिशब्देन च्व्यर्थानां ग्रहणम्। अस्य च प्रत्ययस्य च्व्यर्थकत्वेनास्याप्यव्ययत्वमिति स्पष्टं काशिकादिषु। [1]अग्निसात् भवति शस्त्रम्। वर्षासु लवणं [2]उदकसात् सम्पद्यते। [3]ब्राह्मणसात् निधिं करोति। [4]राजसात् करोति करम्।

---

1. अनग्निरग्निर्भवतीत्यर्थेऽत्र 'विभाषा साति कार्त्स्न्ये' (5-4-52) इति सातिप्रत्ययः। प्रत्यये इकार उच्चारणैकफलकः सन् इत्संज्ञां लब्ध्वा लुप्यते। कार्त्स्न्यं नामात्र सर्वात्मना द्रव्यस्य विकारापत्तिः।

2. 'अभिविधौ सम्पदा च'(5-4-63)इति सातिप्रत्ययोऽत्र। अभिविधिर्नामात्र यत्र एकदेशेनापि सर्वं प्रकृतिर्विकारमापद्यते स इति ज्ञेयम्।

3. 'तदधीनवचने च' (?-4-64) इति सातिप्रत्ययः। एतावन्तं कालं ब्राह्मणानधीनं सन्तं निधिमधुना ब्राह्मणाधीनं करोतीत्यर्थः।

4. 'देये त्रा च' (5-4-65) इति सातिप्रत्ययोऽत्र। अवश्यं राज्ञे देयं करमेतावन्तं कालमदत्तं सन्तमधुना ददातीति वाक्यार्थः।

(834)

### " साधुया " (छा.)

'उत्तमरीत्या' इत्यर्थे छान्दसोऽयमव्युत्पन्नः। 'अग्निर्नो यज्ञमुप वेतु साधुया—' (ऋक् 5-11-4)।

(835)

### " साधीयः" (त.)

"....अतिशयेन साधु इत्यर्थे साधीयः इत्यपि। अत एव 'कथं साधीयः ?' इत्यादिः तत्र तत्र भाष्यप्रयोगः।" इति बृहच्छब्देन्दुशेखरे (अव्ययप्रकरणे) प्रोक्तम्। तेनेदमपि अव्ययमस्तीति नागेशाशय इति ज्ञायते। अन्यथा उद्देश्यविधेययोर्भिन्नलिङ्गकत्वेन 'कथं साधीयः' इति भाष्यप्रयोगोऽपाणिनीयः स्यादिति तस्याशयः।

(836)

### " सामि " (स.)

अर्धकुत्सनयोरयं वर्तते। अर्धे—' 'सामिसम्मीलिताक्षी—'। 'न त्वां समाधिनियतैरपि सामिदृष्टम्—'। कुत्सने—[1]'सामिकृतम्। अत्र च कृत्यस्यापूर्णत्वभावकत्वात् कुत्सेति ज्ञेयम्।

---

1. 'सामि' (2-1-27) इति क्तान्तेन समासः। अत्र सूत्रे पूर्वसूत्रात् 'क्षेपे' इत्यनुवर्त्य क्षेपार्थे गम्ये एव क्तान्तेन समास इति केचिन्मन्यन्ते 'अभिवीक्ष्य सामिकृतमण्डनं यतीः—' (माघे 13-31) इत्यत्र 'अर्धविरचितप्रसाधनम्—' इति मल्लिनाथप्रभृतिभिर्व्याख्यानाच्च बहु-मानम्, आदरणीयमिति च उपेक्ष्यम्।

(837)

" साम्प्रतम् " (स्व. )

'सम्प्रति' इत्यर्थे सम्प्रति इत्यस्मात् प्रज्ञादि (5-4-38) त्वात् स्वार्थे ऽण्प्रत्यये रूपमेतम्। 'विमुच्य वासांसि गुरूणि साम्प्रतम्' (ऋतुसंहारे 1-7)। नञुपसृष्टं त्वेतदेव 'अयुक्तम्' इत्यर्थे लक्ष्यते। 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' (कुमार. 2-55)। एतेन युक्तमित्यर्थकत्वमप्यस्येति गम्यते।

(838)

" सायम् " (स्व.)

दिनावसानमस्यार्थः। 'सायं संयमिनस्तस्य महर्षेर्महिषीसखः' (रघु. 1-48)। [1]सायन्तनो वायुः।

---

1. व्युत्पत्तिपक्षे 'षोऽन्तकर्मणि' इति धातोर्णिच्, 'आदेचः' (6-1-45) इत्यात्वे, 'आतो युक्–' (7-3-33) इति युगागमे मान्तत्वमस्याऽनव्ययत्वेति ज्ञेयम्। सायन्तन इत्यत्र 'सायंचिरं–' (4-3-23) इति ट्युः ट्युल् वा प्रत्ययः वैकल्पिकः। तुडागमश्च। अत्र सूत्रे अव्ययत्वेनैव ट्युप्रत्यये सिद्धे पुनः सायंग्रहणात् पाक्षिकमेवाव्ययत्वमस्येति केचित्। 'सायाह्नः' इत्यादयोऽनेनैव प्रकारेण निर्व्यूढाः। 'सायम्' इत्यव्ययसमानार्थकः सायशब्दोऽस्ति; तेनैव 'सायाह्नः' इत्यादयः सिद्ध्यन्तीति केचित्। अत्र यत्तत्वं सर्वमप्यस्माभिः 'चिरम्' इत्यव्ययविवेचनप्रकरणे विस्तरेणोक्तमिति तत्रैव विशेषो द्रष्टव्यः।

(839)

"सार्धम्" (च.)

सहार्थकमिदम्। 'अनेन सार्धं विहराम्बुराशौ' (रघु. 6-57)। अव्युत्पन्नमिदमव्ययम्। 'सह अर्धेन' इति व्युत्पत्तिः वाचस्पत्ये प्रदर्शिता।

(840)

"सीत्" (अनु.)

अनुकरणशब्दत्वादव्ययत्वम्। सीत्कारः।

(841)

"सीम्" (च.)

सर्वतोभावोऽस्यार्थः। 'निश्चयेन' इत्यपि केचित्। 'सिम्' इति प्रौढमनोरमा। छान्दसमेतत्। 'प्रसीम् आदित्यो असृजत' (ऋक् 2-28-4)। सर्वत्र सूर्यः प्रावर्षदित्यर्थः।

(842)

"सु" (उप. ग. क. प्र. नि.)

'सु सौष्ठवाकृच्छ्रगन्धे—' इति क्षीरस्वामी। सौष्ठवे- सुबद्धम्। सुष्ठु मनस्वी भवति सुमनायते। अकृच्छ्रे—[1]सुकरो घटः। सुदर्शनः। [2]सुपानं पयः। गन्धे—सुरभिः।

पूजायाम्—सुस्तुतम्। अत्र 'सुः पूजायाम्' (1-4-94) इति कर्मप्रवचनीयत्वम्। तेन न षत्वमिति ज्ञेयम्।

---

1. अत्र 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु—' (3-3-126) इति खल्।

2. अत्राप्यकृच्छ्रार्थे 'आतो युच्' (3-3-127) इति युच्।

अतिशय-शोभनत्व-समृद्ध्यादिषु निपातः। अतिशये—[1]सुतराम् सुतमाम्। शोभनत्वे—सुरूपः। समृद्धौ—समृद्धिर्मद्राणां सुमद्रम्।

अनुमतिरप्यस्यार्थ इति वाचस्पत्यम्।

(843)

"सुकम्" (च.)

अतिशयार्थकोऽयं चादिषु पठ्यते। 'सुखम्' इति काशिका।

(844)

"सुखा" (डा.)

सुखशब्दात् 'सुखप्रियादानुलोम्ये' (6-4-63) इति डाच्। 'ऊर्यादिच्विडाचश्च' (1-4-61) इति गतित्वम्। कृभ्वस्तिभिरेव डाजन्तस्य योगः। 'चङ्क्रमावान् समागत्य सीतामूचे सुखाभव' (भट्टि: 5-64)।

(845)

"सुच्" (त.)

'द्वित्रिचतुर्भ्यः सुच्' (5-4-18) इत्यत्र विहितस्तद्धितप्रत्ययोऽयम्—'तद्धितश्चासर्वविभक्तिः' (1-1-38) इत्यव्ययसंज्ञकः। कृत्वोऽर्थप्रत्ययोऽयम्। द्विः करोति, त्रिर्भुङ्क्ते। चतुः पठति।

---

1. अत्र 'द्विवचनविभज्योपपदे—' (5-3-57) इति तरप्। 'सुतमाम्' इत्यत्र तु 'अतिशायने तमबिष्ठनौ' (5-3-55) इति तमप्। ततश्च आमुप्रत्ययः।

(846)

"सुदि" (स्व.)

शुक्लपक्षार्थकोऽयं स्वरादिषु पठ्यते। 'शुदि' इति केचित्। 'पश्चिमदेशे प्रसिद्धोऽयम्' इति शब्दकल्पद्रुमः।

(847)

"सुषमम्" (तिष्ठद्गु.)

शोभनाः समाः यत्र, शोभनत्वं समस्य इति वा सुषमम्; कालविशेषवाचकमिदम्। अव्ययीभावसमासत्वादस्याव्ययत्वम्। 'सुविनिर्दुर्भ्यः सुपिसूपिसमाः' (8-3-88) इति षत्वम्।

(848)

"सुष्ठु" (स्व.)

प्रशंसानिर्भरयोरस्य वृत्तिः। प्रशंसायाम्—सुष्ठूक्तम्। निर्भरे—सुष्ठु विभाति। 'सुष्ठ्वत्यर्थप्रशंसयोः' इति त्रिकाण्डशेषः। सत्यार्थकत्वमप्यस्येति 'पृथोस्तत् सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु' (भागवते 4-22-17) इति उदाहरणप्रदर्शनपूर्वकं शब्दकल्पद्रुमे प्रोक्तम्।

(849)

"सूपत्" (च.)

प्रश्नवितर्कप्रशंसा अस्यार्थाः। प्रश्ने—सूपत् पठति। किं पठतीत्यर्थः। वितर्के—स्थाणुरयं सूपत् पुरुषः। प्रशंसायां—सूपत् ब्रवीति। अव्युत्पन्नमिदं शब्दस्वरूपमित्यवगन्तव्यम्।

(850)

"से" (कृ.)

एतदन्तमव्ययम् । तुमुन्प्रत्ययसमानार्थकोऽयं छान्दसः प्रत्ययः । 'वक्षे रायः' वचधातोः । 'तुमर्थे से—' (3-4-9) इति सेप्रत्ययः । वक्तुमित्यर्थः । 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञा ।

(851)

"सेन्" (कृ.)

अयमप्येजन्तः कृत् 'कृन्मेजन्तः' (1-1-39) इत्यव्ययसंज्ञाभाक् छान्दसः, तुमुनर्थकः । 'ता वामेषे रथानाम्' (ऋक्. 5-66-3) । इषधातोः 'तुमर्थे सेसेन्—' (3-4-9) इति सेन्प्रत्ययः । एषितुमित्यर्थः । से-सेनो प्रत्यययोः स्वरे विशेषः ।

(852)

"सेवाली" (ऊ.)

हिंसार्थकोऽयमूर्यादिरतीवाप्रसिद्धः कृञो योगे गतिसंज्ञकः । सेवालीकृत्य; हिंसित्वेत्यर्थः ।

(853)

"स्थाने" (वि. प्र.)

विभक्तिप्रतिरूपकमव्ययमेतत् । 'युक्तम्' इति अस्यार्थः । 'स्थाने वृता भूपतिभिः परोक्षैः ।' (रघुः 7-13) । औचित्य - सत्य - करणार्थ-सादृश्याद्यर्थकत्वमप्यस्य शब्दरत्नावल्युक्तमिति शब्दकल्पद्रुमः ।

(854)

### " स्नात्वी " (कृ.)

" ष्णा शौचे " इति धातोः क्त्वायाम्, 'स्नात्व्यादयश्च' (7-1-49) इत्यत्र निपातनात् छन्दसि विषये ईकारः प्रत्ययस्य। ' स्विन्नः स्नात्वी मलादिव ' (तै. ब्रा. 2-2-4-9)। लोके तु स्नात्वा इत्येव। अस्य ' क्त्वातोसुन्कसुनः ' (1-1-40) इत्यव्ययत्वम्।

(855)

### " स्म " (च.)

अतीत - वाक्यपूरणयोरयं वर्तते। अतीते—कथयति स्म। वाक्यपूरणे—'अङ्ग स्म विद्वन्! माणवकम[1]ध्यापय'। मा[2]स्म करोत् कार्षीत् वा।

(856)

### " स्मरणतः " (आद्यादिः)

स्मरणेन, स्मरणाद्धेतोर्वा स्मरणतः। हेतुपञ्चम्यन्तात् आद्यादित्वात् तसिः। आद्यादितसिः तृतीयान्तादेवेत्यङ्गीकृत्य वर्धमानेन

" नहि स्मरणतो यत् प्राक् तत् प्रत्यक्षमितीरितम्। " इति श्लोके तसेरनुपपत्तिमाशङ्क्य, " अन्ये हेतुपञ्चम्यन्तादपि तसिमिच्छन्ति, यथा—

---

1. ' अधीष्टे च ' (3-3-166) इति लोट्। लिङोऽपवादः। 'ग्रामं गच्छतु स्म ' इत्यादिषु तु 'स्मे लोट्' (3-3-165) इति लोट्।
2. ' स्मोत्तरे लङ् च ' (3-3-176) इति लङ्लिङौ।

प्रमाणाद्धेतोः **प्रमाणतः** । तथा च भावविभक्तिकस्तसिरिति **तार्किकाः** शतशो व्यवहरन्ति । " इत्युक्तमिहावधेयम् ।

(857)

" **स्यात्** " (ति. प्र.)

अनेकान्तपक्षान्तरसम्भावनादौ वर्ततेऽयम् । अनेकान्ते—**स्याद्वादिनो** जैनाः । पक्षान्तरसम्भावनायाम्—**स्यान्न** तत् **स्यादपि स्यात्** । '**स्यात्**' पदम् ईषदर्थकम् अनैकान्त्यार्थकं वा तिङन्तप्रतिरूपकमव्ययम्' इति **श्रीभाष्य-प्रकाशिका** (पु. 95) ।

(858)

" **स्राक्** " (स्व.)

शैघ्र्यार्थकमिदम् । **स्राग्** गच्छति ।

(859)

" **स्वधा** " (च. ऊ.)

पितृसम्प्रदाने चादिषु पठ्यते । **स्वधा** पितृभ्यः । अत्र 'नमः-**स्वस्ति**—' (2-3-16) इति चतुर्थी । 'तृप्तिप्रीत्योः' इति **केचित्** । ऊर्यादिष्वप्यस्य पाठात् कृञो योगे **गतिसंज्ञायाम्** '**स्वधाकृत्य**' इति भवति । **स्वधा**शब्दोच्चारितमग्न्यादिकर्म कृत्वा इत्यर्थः ।

(860)

"स्वयम्" (स्व.)

आत्मनेत्यर्थे स्वरादिरयम्। 'आत्मानमित्यर्थे' इति केचित् स्वयम्भूः। एवम्, 'स्वतः' इत्यपि तस्प्रत्ययान्तमव्ययं ज्ञेयम्।

(861)

"स्वर्" (स्वरादिः)

स्वर्गपरलोकयोः अयं वर्तते। आकाश - शोभन - सुखसन्तानेष्वपि वर्ततेऽयमिति शब्दरत्नावली। व्याहृतिविशेषे 'स्वर्-सुवर्' इत्युभयथाऽपि प्रयोगो लक्ष्यते। तयोरप्यव्ययत्वमाहुः। अयमन्तोदात्तः। स्वर्वसति इत्यादिषु सप्तम्यर्थकत्वात् अधिकरणशक्तिप्रधानमव्ययमेतत्।

(862)

"स्वरतः" (आद्यादिः)

स्वरेण इति स्वरतः। आद्यादित्वात् तृतीयान्तात् तसिः। 'दुष्टः शब्दः स्वरतो वर्णतो वा—' (पाणिनीयशिक्षा ५२)।

(863)

"स्वस्ति" (स्व.)

पुण्याशीः क्षेममङ्गलप्रत्यभिवादनेषु वर्ततेऽयम। पुण्ये— ओम स्वस्ति। स्वस्तिवाचनम्। आशिषि—' स्वस्ति तेऽस्तु लतया सह वृक्ष '। क्षेमे—

'[1]स्वस्त्यस्तु ते सौम्य चिराय जीव' (रघुः 14-59)। मङ्गले 'स्यात् सीते स्वस्ति ते ध्रुवम्' (भट्टिः 8-98)। प्रत्यभिवादने—'राज्ञा नमस्कृता विप्राः स्वस्तीत्येनं प्रयुञ्जते' (ग. र. महोदधिः)। 'अस्ति' इति विभक्तिप्रतिरूपकाव्ययेन सह 'सु' इत्यस्य प्रादिसमास इति [2]वाचस्पत्यम्। स्वस्तिशब्दयोगे 'नमःस्वस्ति—' (2-3-16) इति चतुर्थी सर्वत्र बोध्या।

(864)

## "स्वाहा" (स्व, ऊर्यादिः)

देवहविर्दाने वर्ततेऽयम्। 'अग्नये स्वाहा'। 'नमःस्वस्तिस्वाहा—' (2-3-16) इति चतुर्थी। ऊर्यादित्वात् कृञो योगे गतिसंज्ञायां स्वाहाकृत्य इति समासे ल्यप्। स्वाहाशब्दोच्चारितमग्न्यादिकर्म कृत्वेत्यर्थः। अग्निभार्यायां, 'नमः स्वधायै स्वाहायै नित्यमेव नमो नमः' इत्यत्र च स्त्रीलिङ्गोऽयम्।

(865)

## "स्वित्" (च.)

प्रश्नवितर्कावस्यार्थौ। [3]प्रश्ने 'कः स्विद् एकाकी चरति—' (तै. सं. 7-4-18-1) वितर्के—'अधः स्विदासीदुपरिस्विदासीत्—' (तै.आ. 2-8-9-5)।

---

1. 'सीताऽस्मि ते सौम्य चिराय जीव' इत्येव रघुवंशे पाठ उपलभ्यते। गणरत्नमहोदध्युद्धृतः पाठोऽत्र प्रदर्शित इति ज्ञेयम्।
2. 'सावसेः' (पञ्चपाद्युणादिः 4-180) इति सु इत्युपपदे असतेः तिप्रत्यये रूपं साधयन्ति वैयाकरणाः।
3. केचित् प्रश्नेऽपि वितर्कोऽस्तीत्यतः वितर्कमेकमेवार्थमाहुः।

शोभार्थकत्वमप्यस्य वेद इत्याहुः। 'अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः—' (मेघदूते—1-14) इत्यादिषु पदपूरणार्थकत्वम्। पादपूरणार्थकत्वं च वदन्ति।

(866)

"ह" (च.)

क्षेपागमादेशनिन्दापादपूरणसम्बोधनादिषु प्रसिद्धोऽयम्। क्षेपः कुत्सा: तत्र यथा—स्वयं ह ओदनं भुङ्क्ते, गुरुन् सक्तून् पाययति। आगमे—इति ह स्माहुः। आदेशे—त्वं ह ग्रामं गच्छ। निन्दायाम्—त्वं ह ब्राह्मणः। किं त्वमपि ब्राह्मण इत्यर्थः। पादपूरणे—'पम्पातीरे हनुमता सङ्गतो वानरेण ह' (रामा॰ 1-1-58)। सम्बोधने—ह एहि।

प्रसिद्ध्यर्थकत्वमस्य प्रौढमनोरमायां प्रोक्तम्। यथा—'प्रतर्दनो ह वै दैवोदासिः' (कौषीतक्युपनिषत् 1-1)।

'गावो ह जज्ञिरे तस्मात्' (तै.आ. 3-12-5) इत्यत्र समुच्चयार्थकत्वम्. 'ते ह नाकं महिमानः सचन्ते' (तै.आ. 3-12-7) इत्यत्र स्तोभार्थकत्वम्, 'वैदेही नु कथं भविष्यति ह हा हा देवि धीरा भव' (शृङ्गारप्रकाशे सप्तमप्रकाश उपात्तः श्लोकः) इत्यत्र विषादार्थकत्वम्, 'अयं ह करिष्यति' इत्यादिषु विस्मयार्थकत्वमित्यादिकं यथासम्भवमूह्यम्। शोभार्थकोऽपि वेदेषु बहुलं प्रयुज्यते। प्रतिमानाटके (5-19/20) 'हहह अहो पतिव्रतायास्तेजः' इत्यत्र अस्यैव निपातस्य समुदायः सरोषे कष्टे वर्तते। नाटकेषु सन्दर्भानुसारेण काक्वादिपूर्वकं यथाभिलषितार्थकत्वमस्येति बोध्यम्।

(867)

"हञ्जे" (नि.)

नाट्योक्तौ नीचायाः आह्वाने सम्बोधनार्थकोऽयं निपातः। आदन्तोऽयं 'हञ्जा' इति शब्द इति **केचित्**। 'हञ्जे हण्डे हलाऽऽह्वाने नीचां चेटीं सखीं प्रति' इति **अमरकोशे** 'हला' इतिवत् टाबन्तत्वमप्रयुक्तमित्यत एकारान्तत्वमेव सर्वसम्मतमिति ज्ञायते।

(868)

"हण्डे" (नि.)

नाट्योक्तौ चेट्या आह्वाने सम्बोधनार्थकोऽयं निपातः। अत्रापि टाबन्तत्वम्, एकारान्तत्वमिति पक्षद्वयम्। एकारान्तत्वेनैव **क्षीरस्वाम्यादिभिः** पठितत्वात् स एव पक्षो न्याय्यः।

(869)

"हन्त" (नि.)

"हन्त दानेऽनुकम्पायां वाक्यारम्भविषादयोः।

निश्चये च प्रमोदे च—" इति **हैमः**।

वाक्यारम्भनिश्चयखेदसम्प्रदानहर्षानुकम्पासम्भ्रमेषु वर्ततेऽयम्। वाक्यारम्भे—'हन्त ते कथयिष्यामि' (गीता 10.19)। निश्चये—**हन्त** गच्छामः; निश्चयेन गच्छाम इत्यर्थः। खेदे—'हन्त हताः पथिकगेहिन्यः'। सम्प्रदाने—'भूरियं **हन्त**कारः' (बालरामायणे)। हर्षे—**हन्त** जीविताः स्मः।

अनुकम्पायाम्—'हा हन्त हन्त नलिनी गज उज्जहार' (भ्रमराष्टके 8)। सम्भ्रमे—'हन्त गच्छध्वम्'।

खेदोऽप्यस्यार्थ इति शब्दरत्नावली। अल्पकल्पनमप्यर्थ इत्यजयपालः इति शब्दकल्पद्रुमे स्पष्टम्।

(870)

"हये" (व्र.)

सम्बोधनार्थकोऽयं छान्दसः। 'हये जाये मनसा तिष्ठ घोरे' (ऋक्. 10-95-1)।

(871)

"हरे" (नि.)

अनादराह्वानयोरयं प्रसिद्धः। अनादरे—'हते भीष्मे हते द्रोणे किं हरे त्वं करिष्यसि?'। आह्वाने—हरे साहसिन्!। एवं निपाताव्ययोपसर्गवृत्त्यनुरोधेनोदाहृतम्। वस्तुतोऽत्र 'ह+रे' इति निपातद्वयसमुदाय एवेति भाति। अत एव गणरत्नमहोदधौ 'हये' इत्येकमेवोदाहृतम्, न त्वेतत् इत्यपि बोध्यम्।

(872)

"हलम्" (स्व.)

'आर्यहलम्' इति स्वरादिषु पठितस्याव्ययस्य शाकटायनमते 'आर्य+हलम्' इति विभज्य द्विधाऽव्ययत्वमुक्तमिति प्रौढमनोरमादिषु

स्पष्टम् । तदनुरोधेनात्र पठितोऽयम् । प्रतिषेधविषादावस्यार्थौ । 'अलम्' इति केचित् । उदाहरणं मृग्यम् ।

(873)

"हला" (नि.)

नाट्योक्तौ सख्याह्वाने निपातोऽयम् । टाबन्तोऽयमिति केचित् । अव्युत्पन्नमव्ययमेवेति सर्वसम्मतम् ।

(874)

"हवा" (च.)

'ह + वा' इति निपातद्वयसमुदायोऽयं प्रसिद्ध्यर्थकश्छान्दसः, 'हवै' इत्यस्य समानार्थकः ।

(875)

"हस्ते" (ग.)

उपयमनार्थे (= स्वीकरणे)ऽस्य गतिसंज्ञा कृञो योगे 'नित्यं हस्तेपाणावुपयमने' (1-4-77) इति विहिता । तेन समासे ल्यपि 'हस्तेकृत्य त्वमासी:' (भट्टि-5-16) इति सिद्धम् । अत्र 'हस्ते' इति निपातनात् सप्तम्या अलुक् इति न्यासकारः । सप्तम्यन्तप्रतिरूपकमव्ययमिति हरदत्तः । अर्थेऽपि मतिभेदः । यथा सूत्रे (1-4-77) उपयमनशब्देन दारकर्मोच्यते इति काशिका । 'हस्तेकृत्य महास्त्राणि' इत्यादिषु दारकर्मरूपस्यार्थस्यासम्भवात् स्वीकरणमात्रमेवार्थं परे मन्यन्ते । 'उपयमनं नाम अपरित्यागलक्षणं

स्वीकरणम्' इति आत्रेयादिभिरुक्त एवार्थः साधुरिति माधवीयधातुवृत्तौ (तनादिषु कृञ्धातुप्रकरणे) प्रोक्तमेव न्यायः ।

(876)

"हुं" (व.)

असम्मतिरस्यार्थः । अनुनयोऽप्यर्थ इति मेदिनी । 'हम्' इति केचित् । 'हन्' इति शब्दकल्पद्रुमपाठः । नाटकेषु प्रयोगः सुलभः । 'हुं क एवमाह' ।

(877)

"हंहो" (नि.)

आह्वाने प्रसिद्धः । हंहो देवदत्त ! । दर्पदम्भप्रश्ना अप्यस्यार्था इति शब्दरत्नावली । 'हंहो सभ्यान् असभ्यस्थपुटमुखपुटा दुर्जना निर्जयन्ति' (तत्त्वमुक्ताकलापे 498 श्लो.) इत्यत्र 'हंहो इति विषादपूर्वाधिक्षेपे' इति श्रीवेङ्कटनाथार्यैः स्वयं विवृतम् ।

(878)

"हा" (नि.)

शोकखेदनिन्दासम्भ्रमविस्मयेषु प्रसिद्धोऽयम् । शोकः = शोकविशिष्टमामन्त्रणम् । तत्र यथा—'हा! पितः क्वासि से सुभ्रु—' (भट्टिः 6-11) । खेदे—'स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः' । 'कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः' । निन्दायाम्—'हा श्रोत्रि-

यान् अद्ह्यान्' (तिलकः)। अत्र 'अभितःपरितःसमयानिकषाहा—' (पा. 2-3-24) इति द्वितीया। सम्भ्रमे—'हा हा किं पुरोधाः' (तिलकः)। विस्मये—'हा लब्धं पाटलिपुत्रम्।

जुगुप्सार्ती अप्यर्थत्वेन कोशेषूक्ते, यथासंभवमुदाहार्ये।

(879)

"हि" (च.)

स्फुटार्थनिश्चयहेतुपादपूरणविशेषावधारणप्रत्युक्तिषु वर्ततेऽयम्। स्फुटार्थे—'को ह्यन्यो भुवि मैत्रेय महाभारतकृद् भवेत्' (विष्णुपुराणे) निश्चये—'दाक्ष्य हि सद्यः फलदं यदमनश्चखाद दासेरयुवा वनालीः' (शिशुपालवधः 11-32)। हेतौ—'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' (शाकुन्तलम् - 21)। पादपूरणे—'यो हि दीर्घसिनाक्षस्य—'। विशेषावधारणे—'शैत्यं हि यत् सा प्रकृतिर्जलस्य'। प्रत्युक्तौ—अकार्षं हि कटम्।

वाक्यपूरणे, वाक्यालङ्कारे, सम्भ्रमे, असूयायाम्, शोके च शब्दस्तोमावल्यादिषु पठितोऽयम्: यथासम्भवमुदाहरणानि बोध्यानि।

(880)

"हिकम्" (च.)

वैदिकोऽयं 'हि + कम्' इति निपातद्वयरूपश्चादिषु पठ्यते। यथासम्भवमर्थेषु वेदेषु प्रयुज्यते।

(881)

“ हिरुक् ” (स.)

‘ हिरुक् मध्यविलासयोः ’ इति **त्रिकाण्डशेषः** । ‘ वियोगहिंसावर्जनेषु ’ इति **वर्धमानः** । वियोगे—हिरुक् करोति । हिंसायाम्—‘हिरुग्-भतो **हैरुकः** ’ इति **तिलकः** । वर्जने—हिरुक् कर्मणां मोक्षः । कर्मवर्जनान्मोक्ष इत्यर्थः । सामीप्यार्थकत्वममरकोशे उक्तम् । अधमार्थकत्वं शब्दरत्नावल्यादिषु ।

(882)

“ हिं ” (च.)

स्तोभार्थकोऽयम् । नववार ‘ हिं ’ इति कृत्वा साम गीयते हिङ्कारः । अत्र स्तोमः—अधिकस्यावर्णस्य आवर्तनम् ।

(883)

“ ही ” (च.)

खेदाद्भुतप्रीतिभर्त्सनेषु प्रसिद्धोऽयम् । खेदे—‘ शतकृत्वोऽप्यर्थायनाः ही न विद्मो जडा वयम् ’ । अद्भुते—‘ हतविधिलसितानां ही विचित्रो विपाकः ’ (शिशुपालवधः 11-64) । प्रीतौ—ही ही जितं मया ; भर्त्सने - ही जाल्म ! ।

---

1. अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वंत हा जगत् ’ (ब्रह्मसिद्धौ तर्ककाण्डे 28 तमः श्लोकः) इत्यत्र ‘ हा ३ इति प्लुतिः खेदार्थे ’ इति आवशुद्धिः अत्रानुसन्धेया ।

हेत्वर्थकत्वमपि शब्दरत्नावल्युक्तम् । 'ही ही' इति विस्मयार्थकत्वे नाटकेषु द्विरुक्तिः ।

(884)

"हु" (नि.)

वारणार्थकोऽयम् । यथा—'हु हु मुञ्च म म मेति च मन्दं जल्पितं जयति मानवतीनाम्' (शृङ्गारप्रकाशे पञ्चमः प्रकाशः) ।

(885)

"हुम्" (नि.)

अनिच्छाभयस्मरणभर्त्सनकोपा अस्यार्थाः । अनिच्छायाम्—'हुं हु मुञ्च म म मेति च मन्दं जल्पितं जयति मानवतीनाम्' । भये—हुं राक्षसोऽयम । स्मरणे—हुं स एव त्वमसि । भर्त्सने —'हुं निर्लज्जापसर' 'गुरुं हुङ्कृत्य तुङ्कृत्य' । कोपे 'हुं मातर्दैवतानि धिक्' (भट्टिः 6-11) । 'हुं वितर्के चानुमतौ' इति त्रिकाण्डशेषः ।

(886)

"हू" (नि.)

निन्दाह्वानाहङ्कारशोकादयोऽस्यार्थाः । निन्दायाम् — 'हू शोच्या जनता' (तिलकः) । आह्वाने —'हू हू नायात यातनाम्, अहङ्कारशोकयोरप्येवमुदाहरणमूह्यम् ।

(887)

" हुम् " (नि.)

प्रश्नवितर्कसम्मतिक्रोधभयनिन्दावज्ञादयोऽस्यार्थाः ।

" प्रश्ने—हुं को लङ्काधिपतिः । वितर्के—हुं चैत्रोऽपि पण्डितः । वितर्के सम्मतौ - हुं कृतम । क्रोधे—हुं क गच्छसि । भये - हुं न गन्त-व्यम् ।" इति शब्दकल्पद्रुमः । एवमन्यदप्युदाहर्तव्यम् ।

(888)

" हे " (नि.)

सम्बोधनश्लाघाविस्मयासूया अस्यार्थाः । सम्बोधने—' हे देवदत्त ' । इतरेषामुदाहरणानि मृग्याणि ।

(889)

" हेतौ " (च.)

निमित्तार्थोऽयम् । हेतौ हृष्यति । अस्मात् कारणात् हृष्टो भवती-त्यर्थः । सप्तमीविभक्तिप्रतिरूपकमव्ययमिदम् । ' हेतोः ' इति केचित् पठन्ति ।

(890)

" है " (च.)

सम्बोधनश्लाघाविस्मयादयोऽस्यार्थाः । संबोधने—' है देवदत्त ' इतरेष्वर्थेषु उदाहरणं मृग्यम् ।

(891)

" हो " (च.)

संबोधनप्रतिवाक्ययोरयं वर्तते। संबोधने—' दुःसहो हो वियोगः '। प्रतिवाक्ये—हो किं करवाणि।

(892)

" हौ " (च.)

अयमपि संबोधनार्थकश्चादिः।

(893)

" ह्यः " (अ.)

' अतीतेऽह्नि ' इत्यर्थकोऽयम्। ' असह्यो ह्योऽभवद् वायुः ' (तिलकः)। [1]ह्यस्तनम् ह्यस्त्यम्।

श्रीवत्सचिह्नकृतिनाऽव्ययकोश इत्थं
सर्वोपकारक इतीव निदर्शितोऽयम्।
सन्तोऽर्थमत्र परिगृह्य महार्थविज्ञाः
कुर्वन्तु सद्व्ययमिति प्रणतोऽद्य याचे॥

शुभमस्तु॥

---

1. ' ऐषमोह्यःश्वसोऽन्यतरस्याम् ' (3-2-105) इति ट्युः ट्युल् वा प्रत्ययो विकल्पेन, तुडागमश्च। पक्षे 'अव्ययात् त्यप्' (4-2-104) इति त्यप्।

